# चिन्त्यागमः

## तन्त्रावतार पटलः

रजताद्रि महाहर्म्ये रत्नसिंहासनेऽपि च
सुखासीनं भवं तस्मिन्नुमादेव्या च संयुतम्  १
पूतैर्लोकपालैश्च गणैश्च मुनिभिस्तथा
सर्वदेवैश्च रुद्रैश्च सेव्यमानैः पृथक्पृथक्  २
जन्मजन्मावसानैश्च ब्रह्मन्तस्य पुनः पुनः
श्रुत्वा श्रुत्वा तु षट्षष्टि श्रोतृंश्च स्वयमागतान्  ३
दशागमं शिवभेदं रुद्रभेदं दशाष्टकम्
कामिकं तु परार्धं स्याल्लक्षं वै योगजं भवेत्  ४
चिन्त्यं शतसहस्रं च कारणं कोटिसंख्यया
पञ्चपञ्चायुतमजितं दीप्तं षष्ठमनीयुतम्  ५
सूक्ष्मं तु पद्मसंख्या च सहस्रं शङ्खसंख्यया
अंशुमान् पञ्चलक्षं च सुप्रभेदं त्रिकोटिकम्  ६
तत्संख्या विजयं प्रोक्तं निश्वासं कोटिसंख्यया
स्वायंभूवं सार्धकोटिः अनलं त्ययुतं भवेत् ७
वीरतन्त्रं च नियुतमष्टार्बुदं च रौरवम्
सहस्रं मकुटं प्रोक्तं त्रिलक्षं विमलं तथा  ८
चन्द्रज्ञानं त्रिकोट्याख्यं बिम्बं चैव सहस्रकम्
प्रोद्गीताख्यं त्रिलक्षं च ललितं वा पञ्चसहस्रकम्  ९
कोट्यर्धसंख्यकं सिद्धं सन्तानं षट् सहस्रकम्
शार्वोक्तं लक्षयुग्मं तत् षड्गुणं पारमेश्वरम्  १०
किरणं पञ्चकोट्याख्यं वातुलं शतसहस्रकम्
अष्टाविंशति तन्त्राणां श्रोतृनां च क्रमं शृणु  ११
कामिकादि महातन्त्रान् ज्ञातारस्तु त्रयस्त्रयः
श्रोतारौ तु द्वौ श्रुत्वा विजयादि दशाष्टकम्  १२

कामिकं प्रणवाख्यं तु प्रणवास्त्रिकलास्तथा
त्रिकालश्च हरः प्राप्तो श्रोतारः कामिकस्य तु १३
उपभेदं त्रयं प्रोक्तं वक्तारं नारसिंहकम्
भैरवोत्तरमेवं च इत्येते कामिकत्रयम् १४
योगजं तत्संख्यास्यं तु सुधाख्याद्भस्मनाभकम्
भस्मकादिद्भुजा प्राप्तः श्रोतारश्चेति कीर्तिताः १५
उपभेदं चात्मयोगं च सुधासन्तति तारकौ
वीणा शिखोत्तरं चैव पञ्चधा योगजं भवेत् १६
चिन्त्यशास्त्रं तु दीप्ताख्यो दीप्तात्प्राप्तस्तु गोपतिः
गोपतेरंबिका प्राप्ता श्रोतारो चिन्त्यकस्य तु १७
सुचिन्त्यममृतं वामं पापनाशं परोद्भवम्
सुभगं षड्विधं चेति चिन्त्यशास्त्रेति कीर्तिताः १८
कारणं कारणाख्यं तु कारणात्सर्व रुद्रतः
तेन प्राप्तश्चतुर्वक्त्रः श्रोतारः कारणस्य तु १९
महेन्द्रं कारणं दुर्गं विद्वेषं भीमसंहिता
पावनं मारणं चैव सप्तधा कारणं भवेत् २०
अजितं सुशिवाख्यं तु तत्प्राप्तं तु शिवस्तथा
तच्छिवाद्यच्युतः प्राप्तः श्रोतारश्चाजितस्य च २१
पार्वती च परोद्भूतं प्रभूतं पद्म संहिता
चतुर्भेदमिति प्रोक्तमजितस्य प्रकीर्तितम् २२
दीप्तमीशस्य विख्यातं ईशात्प्राप्तो त्रिमूर्तयः
त्रिमूर्तेर्हुताशनश्च श्रोतारो दीप्तकस्य तु २३
आनन्दमाययोद्भूतमद्भुतं चामृतं तथा
अमेयमब्दमाच्छाद्यमसख्यममितौजसम् २४
सूक्ष्मं सूक्ष्मस्याख्यं तच्छ्रुत्वा श्रवणस्तथा
दीप्तं तु नवधा प्रोक्तं सूक्ष्मतन्त्रं शृणुष्वथ

श्रवणीश्चैव तच्छास्त्रं प्राप्तमेतत्प्रभञ्जनम्
सूक्ष्मात्सूक्ष्मकमेकं तु तन्त्रस्य तु प्रकीर्तिताः २५
सहस्त्रं कालसंज्ञस्तु तस्मात्प्राप्तं तु भीमकम्
भीमाद्धर्मस्ततः प्राप्तः श्रोतारोऽथ सहस्त्रके २६
अतीतं मङ्गळं शुद्धमप्रमेयं तु जातिभाक्
प्रबुद्धं विबुधं हस्तमलंकारं सुबोधकम्
अंशुमानम्बसंज्ञस्य अम्बोः प्राप्तस्तथाग्रतः
अग्रात्प्राप्तस्ततो भानुश्श्रोतारोंऽशुमतस्तथा २८
वासिष्ठमात्मालङ्कारं भूततन्त्रश्च गौतमम्
विद्या पुराणमैन्द्रं च वासवं नीललोहितम् २९
ब्राह्मं प्रकारणं चैव ईशानोत्तरमेव च
अंशुमत्काश्यपं चैव अंशुमान् द्वादश स्मृतम् ३०
सुप्रभेदं दशाख्यं तु तत्प्राप्तो विघ्ननायकः
तस्मात्प्राप्तः शिवश्चैव उभभेदं न विद्यते ३१
अनाद्याख्यस्य विजयम् तत्प्राप्तः परमेश्वरः
महाघोरमघोरं च कुबेर मृत्युनाशनम् ३२
विमलं चोद्धवं सौम्यं विजयं विजयाष्टकम्
निश्वासं तु दशार्णस्य दशार्णाद्गिरिजा श्रुता ३३
निश्वासमन्त्रनिश्वासं महान्निश्वासपूर्वकम्
निश्वासोत्तरतन्त्रं च निश्वासोर्ध्वमुखं तथा ३४
निश्वासनयनं चैव निश्वासकारिका तथा
निश्वासघोरतन्त्रं च इति निश्वासमष्टधा ३५
स्वायम्भुवं निधानाख्यं तस्मात्प्राप्तस्तु पद्मजम्
प्रजापतिमयं पद्मं स्वायम्भुवं त्रिधा भवेत् ३६
अनलं व्योम्नि संज्ञस्य व्योमात्प्राप्तो हुताशनः
आग्नेयं व्योमतन्त्रं च द्विविधं अनलं तथा ३७

वीरतन्त्रं तु तेजाख्यं तेजात्प्राप्तो प्रजापतिः
प्रस्तारं फुल्लमल्लं प्रबोधं बोधबोधकौ
अमोहं मोहसमयं हाटकं शकटायिकम्
हलं विलेखनं वीरं भद्रं वीरे त्रयोदश ३८
रौरवं ब्राह्मणेशस्य तत्प्राप्तो नन्दिकेश्वरम्
कालदाहं कलातीतं रौरवं रौरवोत्तरम् ३९
महाकालमतं चैन्द्र रौरवं षड्विधं भवेत्
मकुटं च शिवाख्यस्य महादेवस्तु प्राप्तवान् ४०
मकुटोत्तरं च मकुटमित्येते मकुटं द्विधा
विमलं सर्वात्मकं यस्य तत्प्राप्तो वीरभद्रकाः ४१
उपभेदं वृषोद्भूतं वृषपिङ्गं वृषोत्तरम्
अनन्तं भोगमाक्रान्तं रौद्रं भद्रं सुदंष्ट्रकम ४२
आरेवतमतिक्रान्तमट्टहासमलङ्कृतम्
अर्चितं धारणं तन्त्रं विमलं षोडशं भवेत् ४३
चन्द्रज्ञानमनन्ताख्यं तस्मात्प्राप्तो बृहस्पतिम्
स्थिरं स्थाणुमहान्तं च शङ्करं नीलरुद्रकम् ४४
एकपादपुराणं च वारुणं नन्दिकेश्वरम्
शिवरुद्रकलाभेददेव्यामतं तथैव च ४५
शिवशेखरमाख्यातं श्रीमुखं शिवशास्त्रकम्
चन्द्रज्ञानस्य तन्त्रेति चतुर्दशमितिस्मृतम् ४६
मुखबिम्बं प्रशान्ताख्यं तस्मात्प्राप्तो दधीचिना
चतुर्वक्त्रं च संस्तोभं तुटिनीरं तु कोटिकम् ४७
आत्मालंकारवायव्यं प्रतिबिम्बं च योगजम्
कुट्टिमाख्यं तुलायोगं पटं शेखरमेव च ४८
महाविद्या महासौरं तुलाप्रत्ययमेव च
मलयं मुखबिम्बस्य भेदं पञ्चदशैव तु ४९

प्रोद्गीतं शूलनं प्रोक्तं तत्प्राप्त कवचस्तथा
कवचं चैव वाराहमङ्कुशं च धनुर्धरम्  ५०
पिङ्गलं पाशबन्धं च मतं दराडसरं तथा
शिवज्ञानं च विज्ञानं सर्वदंष्ट्र विभेदनम्  ५१
ग्रायुर्वेदं धनुर्वेदं श्रीकालं ज्ञानमेव च
गीतं भारतमातोद्यं प्रोद्गीतं षोडशं भवेत्  ५२
ललितं चालयाख्यं तु तत्प्रोक्तो ललितं भवेत्
त्रिधा भेदाश्च कौमारं ललितं ललितोत्तरम्  ५३
सिद्धतन्त्रं च सिद्धाख्यं प्रोक्तं चराडेश्वरं परम्
सारोत्तरं शशिखराडं चोशनोत्तरमेव च  ५४
शालाभेदमिदं भेदं सिद्धतन्त्रं चतुर्विधम्
सन्तानं शिवनिष्ठस्य ग्रसंवायस्ततः श्रुतः  ५५
लिङ्गाध्यत्तं सुराध्यत्तं ग्रसंख्यममरेश्वरम्
शङ्करं चानिलं द्वन्द्वं सन्तानं सप्तधा भवेत्  ५६
शार्वोक्तं सोमदेवाख्यं तत्प्राप्तो नारसिंहकम्
ईशानं शिवधर्मं च शिवधर्मोत्तरं तथा  ५७
दिव्यप्रोक्तं कुबेराख्यं शार्वोक्तं पञ्चधा भवेत्
श्रीदेव्याश्चोशनः प्राप्तः पारमेश्वरतन्त्रकम्  ५८
पद्मसामान्यमातङ्गं पुष्करं परमेश्वरम्
हंसं च सुप्रयोगं च सप्तधा परमेश्वरम्  ५९
किरणं देवपुत्राख्यं तस्मात्संवर्तकस्तथा
बुद्धं प्रबुद्धं कालाख्यं गारुडं नैर्ऋतं तथा  ६०
नीलकं धेनुकं रूत्तं भानुकं किरणे नवम्
वातुलं तु शिवाख्यस्य महाकाळस्तु प्राप्तवान् ६१
वातुलं चोत्तरं चैव नित्यं शुद्धं महाननम्
सर्वधर्मात्मकं श्रेष्ठं कालज्ञानं प्ररोहितम्  ६२

विश्वं विश्वात्मकं चैव द्वादशं वातुलं स्मृतम्
कामिकाद्यजितान्तं च सद्योजातमुखोद्भवम् ६३
दीप्तादिसुप्रभेदान्तं वामदेवमुखोद्भवम्
विजयादीनी वीरान्तं वक्त्रं घोरमुखोद्भवम् ६४
रौरवादीनि बिम्बान्तं चोद्भूतं पुरुषात्तथा
सिद्धादिवातुलान्तं तु ईशानस्य मुखोद्भवम् ६५
एकवक्त्रोक्ततन्त्रैश्च कर्षणास्थापनान्तकम्
तेन मन्त्रैस्समाराध्यमन्यतन्त्रैर्न कारयेत् ६६
सर्वमूलागमानुक्ते चोपभेदं विशेषतः
समयेषु भवेच्छास्त्रं अन्यतन्त्रैर्न कारयेत् ६७
शैवकं तु भवेच्छास्त्रं चरेच्छम्भुप्रियावहम्
तस्मात्सर्व प्रयत्नेन शिवसायुज्यमाप्नुयात्
तन्त्राणामवतारेति मन्त्रोद्धारं ततः शृणु

इति चिन्त्यशास्त्रे तन्त्रावतारविधिर्नाम प्रथमः पटलः

## मन्त्रोद्धारविधिः

अतः परं प्रवक्ष्यामि मन्त्रोद्धारं मम प्रिये
मकारं मम मन्त्रान्तं मन्त्राणां प्राणरूपकम् १
तयोर्मन्त्रात्मजीवोक्तं मन्त्रमित्यभिधीयते
अकारादि विसर्गान्तं जीवर्णं षोडशस्वरम् २
आत्मानमक्षरक्षान्तं पञ्चत्रिंशच्च कादयः
एवमेवोक्त पञ्चाशत् बीजां वेदमयो भवम् ३
सर्वेषां मन्त्रमात्मानं तेषां प्राणमिति स्मृतम्
शिवं सदाशिवं चैव महेशं स्व स्व शक्तयः ४
तेषां मन्त्रोद्धृतिं श्रुत्वा अन्येषां च शिवप्रिये
जीववर्गे त्रयोदश्यामाद्यान्तेन समन्वितम् ५

द्वितीयं च चतुर्थं च षष्ठमस्वरमेव च
व्योमव्यापि चतुर्थ्यन्तं योजयेद्देशबीजकम्  ६
एवं वस्तुमयं बीजं वस्तुनाम शिवं भवेत्
पृथिवी च जलं चैवानलो वायुश्च व्योमकः  ७
पञ्चभूतस्य वर्णानि ल व र य ह कारकाः
शिवादि सर्वदेवानां आत्मनां पञ्चभूतयः  ८
निष्कलानिष्कलोपेतं सकलात्सकलं भवेत्
पञ्चभूतं विना चेत्तु देहं नश्यति नश्यति  ९
शिवो नाम्ना चतुर्थ्यन्तं स्व स्व रूपं त्र्यक्षरम्
मन्त्राणामवसार्णानां धान्तं भान्तमिति द्वयम्  १०
अन्त्ये युक्तं शिवं मन्त्रमाद्ये युक्तं सदाशिवम्
एवं पञ्चाक्षरं मन्त्रं रुद्रेषां स्व स्व नामकम्  ११
सान्तं सार्णं च वर्णान्त्यं मन्त्राणामन्तिमार्णकम्
पृथिव्यप्तेजवाय्वर्णान् षष्ठकस्वरसंयुतान्  १२
शिवबीजं नवार्णेति स्वरान्ते बिन्दुनादयुक्
शिवात्मानं स्वयं बीजं सर्वेषां प्राणरूपकम्  १३
महार्णश्च क्रमेणैव नवार्णैश्चैव योजयेत्
इत्येवं शिवमन्त्रेति शृणु मन्त्रस्वरूपकम्
भान्तं च मम देहं तु मन्त्राणामवसानकम्
न्यस्त्वा वक्त्रं प्रदक्षिणयं साङ्गं न्यस्त्वापसव्यकम्
पञ्चाक्षरं समुद्धृत्य मौळौ योज्यान्तवर्णकम्
अस्त्रवद्योजयेत्साङ्घ्रि दीर्घं नाभ्यवसानकम् १४
तृतीयार्णं न्यसेन्नेत्रे ओष्ठे न्यस्त्वा चतुर्थकम्
द्वितीयं प्रथमार्णौ द्वौ श्रोत्रयोर्विन्यसेद्बुधः  १५
इति पञ्चाक्षरं न्यासं नवार्णं न्यासमुच्यते
प्रथमार्णं न्यसेद्बाह्वोश्शिवदेव्या च बीजवत्  १६

द्वितीयार्णं न्यसेच्चांघ्रौ बिन्दुबीजसमन्वितम्
तृतीयं चतुर्थं च न्यसेद्धृदयपार्श्वयोः १७
पादान्तरे च पञ्चार्णं षष्ठं च नाभिदेशके
सप्तमं हृदये न्यस्त्वा श्रोष्ठदेशेऽष्टमं भवेत् १८
नास्यां न्यस्त्वा च नवमं स्वरौ च च मधोमुखम्
स्वरान्तं बिन्दुनादाढ्यं मौलौ न्यस्त्वा त्रयेऽपि च १९
प्रणवं प्रभवसंयुक्तं स्वस्वबीजमधोमुखम्
ऋकारं पद्मपीठोर्ध्वे ग्रस्थितं च चुबुकासनम् २०
शिवस्य मन्त्ररूपेति सर्वेषां प्राणरूपकम्
शुक्लं पीतारुणं चैव श्यामं धूम्रं च सन्निभम् २१
ज्योतिरूपं नयेच्चाङ्गं शून्याङ्गं स्पर्शनेऽपि च
व्योमव्यापि निराधारि सर्वतत्त्वालयं प्रभुः २२
इत्थं भूतः शिवः प्रोक्तो निष्कलस्त्विति कीर्तितः
हं बीजं शिवभं बीजं स्यात् सं बीजं शक्तिबीजकम् २३
तद्वयं मेऽजपामन्त्रं सर्वकामफलप्रदम्
व्योमाग्रबीजं चोद्धृत्य स्वरं तत्र त्रयं च तु २४
योज्यमेकाक्षरं ह्येवं शिवदेव्या च वर्णकम्
शिवं च शक्तयोश्चैव सादाख्यं मन्त्रमुच्यते २५
सान्त्ये स्वरस्य संख्येषु त्रयोदशैकादशं तथा
पञ्चमत्रयमेकं च बीजे बिन्दुयुतं क्रमात् २६
ईशानं पुरुषाघोरं वामं सद्यं युतं क्रमात्
ब्रह्मणां पञ्चमन्त्राणि श्रोंकारादि नमोऽन्तयुत् २७
द्वितीयं च चतुर्थं च षष्ठकं द्वादशं तथा
त्रयोदशं प्रथमार्णेषु क्रमाद्बीजसमन्वितम् २८
हृदयं च शिरश्चैव शिखा कवचमेव च
नेत्रमस्त्रं षडङ्गानि तान्क्रमेण योजयेत् २९

आद्ये तु प्रणवं योज्य चान्त्येषु च विशेषतः
नमः स्वाहा वषड्वौषड् हुंफट्कारात्क्रमेण तु  ३०
मन्त्रमेकादशं ह्येवं सर्वेष्वङ्गमिदं विदुः
ब्रह्माङ्गानामिदं मन्त्रं मूलमन्त्रं ततोच्यते  ३१
व्योमबीजं समुद्धृत्य चतुर्दश समायुतम्
बिन्दुवर्णसमायुक्तं नानाद्यं प्रथमान्वितम्  ३२
शिवो नाम चतुर्थ्यन्तं योजयेत्तदनन्तरम्
पञ्चाक्षरं मन्त्रमेवमोङ्कारादि नमोन्तयुक्  ३३
मन्त्रं सदाशिवस्वेति मन्त्ररूपं ततः शृणु
शिवमन्त्रस्वरूपेण व्योमबीजेन बुद्धिमान्  ३४
हुंकारेण समायोज्यं सार्णं चैव हृदिन्यसेत्
स्वयमन्त्रं चतुर्थ्यन्तं मूर्धान्तिं विन्यसेत्क्रमात्  ३५
नवार्णमन्त्रमायोज्य योज्यपादात्क्रमात्सुधीः
स्थानेषु तत्तद्बीजानि पूर्वयुक्ते स्वयं न्यसेत्  ३६
सादाख्यमन्त्ररूपेति स्वयं प्राणात्मरूपकम्
शिवदेव्यां च बीजोर्ध्वे इ रेखां च विसर्जयेत्  ३७
तद्बीजबिन्दुसंयुक्तं मनोन्मन्याथ पूजकम्
सकलं निष्कलोपेतध्यानरूपं सदाशिवम्  ३८
शशि निभं पञ्चवक्त्रं प्रतिवक्त्रं त्रिलोचनम्
दशबाहुद्विपादं च जटामकुटमण्डितम्  ३९
शिवास्त्रं परशुं खड्गं वज्राभयं च दक्षिणे
नागं पाशाङ्कुशं वह्निं वरदं चापसव्यके  ४०
दिव्याम्बरधरं देवं सर्वाभरणभूषितम्
गन्धचन्दनलिप्ताङ्गं पुष्पमाला विभूषितम्  ४१
सदाशिवस्वरूपेति तस्य प्राणं परश्शिवम्
प्राणात्मकं मन्त्ररूपमर्धन्यासोक्तमुत्तमम्  ४२

वामपार्श्वे मनोन्मनीं रत्नवर्णां शशीनताम्
त्रिणेत्रां गन्धपुष्पाढ्यां केशालकविभूषिताम् ४३
पद्माभयकरां सव्ये वामे च वरदोत्फलाम्
दिव्याम्बरधरां देवीं सर्वाभरणभूषिताम् ४४
व्योमं याम्यं शिखीं वायुं बीजैरष्टस्वरान्वितम्
एवं महेशमन्त्रं तु श्रीकारं गौर्याद्यरं शुभम् ४५
महेशाश्चैव सर्वेषां शृणुमन्त्रं विशेषतः
वर्णौद्यं पूर्वमुद्धृत्य षष्ठमस्वरसंयुतम् ४६
बिन्दुयुक्तं च नादाद्यं शिवायेति युतं भवेत्
महेशात्सर्वरुद्राणां शृणु मन्त्रस्वरूपकम् ४७
शिवमन्त्रस्वरूपेण बीजार्णां स्तनयेद्यसेत्
शिवमन्त्रस्वरूपेण नादाद्यं हृदये न्यसेत्
न्यस्त्वा नमश्शिवायेति पादाद्युष्णीषकं क्रमात्
इति मन्त्रस्वरूपं तु देवीनां च ततः शृणु
इति मन्त्रस्वरूपं तु बीजार्णं चैव विन्यसेत्
स्वनाम्नां च चतुर्थ्यन्तं प्रणवं चाद्यसंयुतम् ४८
पादाद्युष्णीषपर्यन्तं क्रमान्यस्त्वा स्वरूपकम्
देवीनां मन्त्ररूपाणां स्वस्वप्राणात्मनां भवाम् ४९
सकळात्मा महेशानः रूपं नानाब्धिमं भवेत्
एकवक्त्रं द्विपादं च त्रिणेत्रं च चतुर्भुजम् ५०
अभयं वरदोपेतं कृष्णापरशुसंयुतम्
जटामकुटसंयुक्तं पद्मरागसमप्रभम् ५१
दिव्याम्बरधरं देवं शुक्लयज्ञोपवीतकम्
गन्धैः पुष्पकमालाभिस्सर्वाभरणभूषिताम् ५२
भवानीं श्यामलाभासां द्विनेत्रां युग्मपाणिकाम्
सव्ये पद्मधरां हस्तां वामे लम्बकरान्विताम् ५३

करराडमकुटोपेतां रत्नकुम्भस्तनद्वयाम्
शुक्लवस्त्रधरां देवीं सर्वाभरणभूषिताम्  ५४
एवं महेश्वरं मन्त्रं ताराडवेशस्य तच्छृणु
मन्त्राद्यर्णं जपाद्यर्णं तुरु तुरू तदनन्तरम्  ५५
तुम्बुरु तुम्बुरु पश्चादानन्दताराडवायतम्
नमोऽन्तं योजयेद्देवं नृत्तमूर्तेति मन्त्रितम्  ५६
वामपार्श्वे हरेर्देवीं गौरीबीजं तु पूर्ववत्
महेशोक्तक्रमेणैव नृत्तस्य मन्त्ररूपकम्  ५७
चतुर्भुजं त्रिणेत्रं च प्रसारित जटान्वितम्
मौलीभागीरथी सव्ये चन्द्रार्धमपसव्यके  ५८
व्याघ्रचर्माम्बरधरं पादकिङ्किणिशोभितम्
अपस्मारे स्थितं सव्यमुद्धृतं वामपादकम्  ५९
पादाग्रं सव्यतो वक्त्रं मूर्ध्वे व्यालम्बिना करम्
अन्येनाग्निधरं वामं सव्ये डमरुका भयम्  ६०
सर्वाभरणसंयुक्तं ध्यायेदानन्दताराडवम्
भवानीं श्यामलाभासां द्विनेत्रां युग्मपाणिनाम्  ६१
सव्ये पद्मधरां हस्तां वामे च लम्बितां कराम्
करराडमकुटोपेतां पूर्णकुम्भस्तनद्वयाम्  ६२
दिव्याम्बरधरां देवीं सर्वाभरणभूषिताम्
इष्टकाम्यकरं तस्य चक्रप्रस्तारणं शृणु  ६३
षड्रेखावृत्तमालिख्य तदन्ते रेखपञ्चकम्
रेखाग्रेषु न्यसेच्छास्त्रं ततो ह्रींकार संयुतम्  ६४
लिख्यस्य चक्रमध्ये तु लिख्यतां मन्त्रपूर्वकम्
अग्रे नमश्शिवायेति पञ्च पङ्क्तौ लिखेत्क्रमात्  ६५
तन्मन्त्रं विन्यसेच्चाग्रात्प्रथमावृतपङ्क्तिषु
एकैकं मुखमध्ये तु मन्त्रान्ते ते युतं क्रमात्  ६६

तद्बहिश्चावृतेषु च अग्राभ्यां लिख्यते सुधीः
पञ्चार्णं तत्स्वरूपार्णं नकारं प्रणवेष्टनम् ६७
श्रीबीजं उन्मबीजं हुंकारं व्योमवर्जकम्
तत्स्वरूपमिदं प्रोक्तं स्वस्वबीजेन वेष्टयेत् ६८
प्रणवेण ततो वेष्टय सर्वबीजान् सुबुद्धिमान्
तच्चक्रं वेष्टयेत्पश्चात् प्रणवं चाग्रतो मुखम् ६९
चक्रात्प्रणवयोर्मध्ये अग्राद्यस्त्रन्तरेषु च
तुरुतुरुमतुम्बुरून्दे च आनन्दताण्डवाय च ७०
निर्होंसेति ततो विद्याच्छिवाय नम इत्यपि
पञ्चभेदमिदं मन्त्रं पार्श्वयोश्च हरद्वयम् ७१
प्रासादाभिमुखास्सर्वे लिख्यते सुधी
स्वर्णे वा रजते वापि ताम्रे वाथ पदेऽपि वा ७२
दारुजे च विशेषे च चन्दने बिल्वकेऽपि वा
अश्वत्थे वा वटे चैव वकुले चम्पकेऽपि वा ७३
एवञ्चक्रमिदं प्रोक्तं यजनं दक्षिणाननम्
महामूलं जपेल्लक्षं सर्वकामफलप्रदम् ७४
तस्मान्मूलमहामन्त्रं क्रमच्छ्रुत्वा तु चाम्बिके
श्रीबीजमुन्मनीबीजं हुंकार व्योमबीजकम् ७५
क्रमाद्बिन्दुसमायुक्तं हरपञ्चमसंयुतम्
चक्राग्रादावृतेषु च पञ्चपञ्चाक्षरं युतम् ७६
तदन्ते तुरुतुरुं योज्य तुम्बुरुं तुम्बुरुं तथा
आनन्दताण्डवायश्च भौसंश्च शिवाय च ७७
ओंकारादि नमोऽन्तानि महामन्त्रेति चाम्बिके
षडङ्गे शिवमन्त्रोक्तं ताण्डवोक्तक्रमान्यजेत् ७८
आनन्द ताण्डवध्यानं पूर्वोक्तविधिनाचरेत्
सर्वकाम्यकरं ह्येवमष्टकर्मक्रमं शृणु ७९

लिखेत्पूर्वोक्तवच्चक्रं वर्णभेदं विशेषतः
अग्रे च पञ्च पङ्क्तीषु नमश्शिवाय लिखेत्सुधीः ८०
यनवाशि मतस्सर्वे वाशियामनमन्त्रकम्
शिवायत नमस्सर्वे वाश्शिवाय नमन्त्यके ८१
पञ्चार्णं पञ्च पञ्चेति अग्रामद्दण्डकक्रमम्
लिख्यतेषु च यन्त्राग्रं मन्त्रं विद्वेषणो भवेत् ८२
मन्त्रमान्तं भवेच्चाग्रे मोहनं भेदनं भवेत्
शिखरान्तं लिखेच्चाग्रे कर्मं मारणसम्भवम् ८३
वकाराग्रान्तरे वापि वश्याकर्षणजं भवेत्
भवेन्नकारमव्यान्त्ये स्तम्भनोच्चाटनं भवेत् ८४
चक्रभेदमिदं प्रोक्तं मन्त्रभेदं ततोच्यते
मायाबीजं द्विपार्श्वे तु श्रीबीजं प्रणवादिकम्
कामार्णमग्रपञ्चार्णयुतमाकर्षमन्त्रकम्
श्रीबीजं तद्द्विपार्श्वे तु ह्लींकारं प्रणवादिकम्
अग्रे पञ्चाक्षरैर्युक्तं स्तम्भनं भेदनं भवेत्
श्रीबीजं तद्द्विपार्श्वे तु हुंकारं प्रणवादिकम्
अग्रे पञ्चाक्षरैर्युक्तं मोहनोच्चाटनं भवेत्
ह्लींकारं तद्विपार्श्वे तु व्योमवर्णौ विसर्जने
आद्ये प्रणवसंयुक्तमग्रपञ्चाक्षरान्त्यके ८५
योजयेत्तु जपेद्धीमान् साधयेच्चक्रमारणम्
पित्रादिजन्मभाग्यर्थं लिख्यपत्रं न्यसेग्रके ८६
प्रणवम्मादिवर्णं तु कौकारं तदनन्तरम्
कंसान्द्रिनाथ संयुक्तं कालमन्त्रमिति स्मृतम् ८७
द्विभुजं श्यामवर्णं च भस्मोद्धूलितविग्रहम्
रक्तवस्त्रधरं दण्डं भस्महर्म्यं च धारिणम् ८८
रुद्राक्षं संमहाराढ्यं कालरूपमिति स्मृतम्

इष्टानृत्तमूर्तें च कर्मानुग्रहसाधकम् ८९
ह्रौकारं भ्रङ्कारं चैवानन्तेशं स्त्रौंकारं सूक्ष्मवर्णकम्
शिवोत्तमं तु प्रोंकारं नामाद्यमेकनेत्रकम् ९०
कौकारमेकरुद्रस्य स्त्रौकारं च त्रिमूर्तिकः
श्रीकराठे चैव श्रौकारं तन्तुकं तु शिखरिडनः ९१
रक्तं श्वेतं च नीलं च पीतं कृष्णं च कुङ्कमम्
अरुणं भिन्नाञ्जनप्रख्यं क्रमाद्विद्येशवर्णकम् ९२
तेषां चतुर्भुजधरा टङ्कशूलावराभयाः
त्रिणेत्रा स्वस्ववर्णोक्त वस्त्राश्चाभरणाधरा ९३
गणेश्वरादिबीजार्णं स्वनामाद्यक्षरं भवेत्
आद्यर्णं च ककारं च मकारं च ऋकारकम् ९४
वकारं च यकारं च नादाद्यन्नादमेव च
इत्येवं लोकपालानां क्रमाद्बीजाक्षरं भवेत् ९५
अस्त्राणां सर्वशक्तीनां स्वनामाद्यर्णमाचरेत्
द्रुकारं चैव ज्रूकारं क्ष्नुंकारं चेति मन्त्रयम् ९६
बीजमुख्यं तु मूर्तीनां सर्वकामेषु पूजयेत्
छखिच्छिख्याक्षरोद्धृत्य दिक्षुरं कृत्य योज्यकम् ९७
तस्याद्ये ओंनमोयुक्तं मन्त्रमष्टाक्षरं स्मृतम्
क्षुरिकाश्चाष्टवर्णोति सर्वकार्येषु योजयेत्
श्रेष्टमन्त्रस्य चोद्धरान् श्रुत्वा शिवप्रिये तव ९८
नारायणं चतुर्थ्यन्तं विष्णुपञ्चाक्षरं स्मृतम्
अष्टाक्षरं महामन्त्रं न भूतं न भविष्यति
अष्टाक्षरेण मोद्धृत्य सार्णोक्ततत्र संयुतम् १००
नमोन्ते च युतं मन्त्रं विष्णुश्च दशबीजकम्
मन्त्ररूपं न्यसेद्धीमान्वस्तुमन्त्र स्वरूपके १०१
अकारं हृदये न्यस्त्वा पश्चादष्टाक्षरेण च

प्रणवप्रभवर्णे तु प्रणवं विन्यसेद्बुधः १०२
नमोनारायणायेति न्यसेत्पादाच्छिरोन्तकम्
न्यस्त्वा स्थानेषु तद्बीजं पूर्वयुक्ते स्वयं चरेत् १०३
इति मन्त्रस्वरूपं च स्वयं प्राणात्मरूपकम्
इष्टकाम्यकरं लोके चक्रप्रस्थारणं शृणु १०४
स्वर्णं वा रजतं वापि ताम्रं वा पटमेव वा
बिम्बदेहोक्तवृत्तं वा चक्रं वा चतुरश्रकम् १०५
मन्त्ररूपं लिखेन्मध्ये प्रणवेण तु वेष्टयेत्
तत्तारश्शूलिकान्तस्मात् प्रणवं वेष्टयेत्सुधीः १०६
अग्राद्यष्टदिशास्वेवं प्रणवमष्टकं न्यसेत्
प्रासादाभिमुखास्सर्वे चलुकां वृत्तसंयुताम् १०७
प्रथमावृतमित्येव तद्यष्टावृतकं न्यसेत्
अग्र प्रणवमष्टेषु मन्त्रमष्टाक्षरं न्यसेत् १०८
आवृते प्रथमे चाग्रात्तन्मन्त्रं विन्यसेत्सुधीः
द्वितीयावृतमादीनि अग्राद्यष्टाक्षरेषु च १०९
एकैकमुञ्चमुञ्चाद्ये मन्त्रान्ते तं युतं युतम्
द्वितीयादावृते सप्तौ क्रमेणाग्राल्लिखेत्सुधीः ११०
अष्टाष्टकक्रमे वर्णानष्टानष्ट प्रणवग्रहे
प्रसादाभिमुखं लिख्य पार्श्वयोश्च हरिद्वयम् १११
इति विष्णुमहाचक्रं प्रणवेन तु वेष्टयेत्
मन्त्ररूपक्रमेणैव स्थापयेद्विष्णुदैवताम् ११२
आचार्यो भावयेत्पूर्वं द्वितीयं हृदयाम्बुजे
तृतीयं कुम्भमध्ये तु कुम्भाग्रे तु चतुर्थकम् ११३
पञ्चमं बिम्बके योज्यं तद्रूपं ध्याययेत्क्रमात्
अष्टाक्षरं जपेल्लक्षं सर्वकामफलप्रदम् ११४
वशीकरणमिदं चक्रं मतिगुह्यं महेश्वरि

प्रथमावृतमन्त्रं तु जपेत्कर्मवशीकरम्
द्वितीयावृतमन्त्रं तु जपेदाकर्षणेऽपि च
तृतीयावृतमन्त्रं तु मोहनानां जपेत् सुधीः
चतुर्थावृतमन्त्रं तु स्तम्भनानां तु सम्भवम् ११५
सप्तमावृतमन्त्रं तु भेदनानां च शंसनम्
भवेदुच्चाटनानां तु अष्टमावृतमन्त्रकम् ११६
वश्याकर्षणविद्वेषं शुभकर्ममिदं त्रयम्
स्तम्भनोच्चाटनं मृत्युर्मोहनं भेदकं त्विदम् ११७
दोषपञ्चकमित्येवं बीजभेदं विशेषतः
शुभकर्मत्रयाणां च श्रीबीजं स्याद्द्विपार्श्वयोः ११८
स्व स्व मन्त्राद्यवर्णं च युतन्तन्मन्त्रसंयुतम्
प्रणवाद्यं जपेल्लक्षं तत्तत्कर्माणि साधयेत् ११९
दोषाणां पञ्चकर्माणां ह्रींकारं स्याद्द्विपार्श्वयोः
आद्यास्योक्तजपेन्मन्त्रं लक्षणं वा प्रणवादयः १२०
तालपत्रे जपेत्काले चकास्त्रं बीज संयुतम्
लिखेत्पित्रादिमानं तु कर्मसाध्यारुके न्यसेत् १२१
यजनादि जपेन्मन्त्री ध्यानारूढं समाचरेत्
किरीटमकुटोपेतं श्यामवर्णं चतुर्भुजम् १२२
वरदाभयहस्तं च शङ्खचक्रधरान्वितम्
केयूरकटकं चैव भूषणं पद्मलोचनम् १२३
पीताम्बरसमायुक्तं शुक्लवस्त्रं च धारिणम्
पद्मासनस्थितं देवं सर्वाभरणभूषितम् १२४
गन्धचन्दनलिप्ताङ्गं गन्धमाल्यैरलंकृतम्
एवं ध्यात्वा यजेद्विष्णुं मन्त्ररूपक्रमेण तु १२५
सव्यपार्श्वे स्थितां लक्ष्मीं भूमिं स्थित्वापसव्यके
श्रीबीजं तच्छिवाद्यर्णं क्लींकार भूमिकेऽपि वा १२६

लक्ष्मीं सुवर्णवर्णाभ्यां सर्वाभरणभूषितम्
दिव्याम्बरधरां हेमपूर्णकुम्भस्तनद्वयाम्  १२७
वामे पद्मधरां हस्तां सव्ये च लम्बितां कराम्
भूम्यायां श्यामवर्णाभां शुक्लवस्त्रां च धारिणीम्  १२८
वामे च लम्बितां हस्तां सव्ये चोत्पलधारिणीम्
सर्वाभरणसंयुक्तां शैलयुग्मघनस्तनाम्  १२९
भर्ता च केशयश्चैव नारणो माधवस्तथा
गोविन्दश्चैव विष्णुश्च मधुसूदस्त्रिविक्रमः  १३०
वामनः श्रीधरश्चैव हृषीकेशः पद्मनाभकः
दामोदरश्च नामाश्च मन्त्राश्च द्वादशं भवेत्  १३१
पुरुषं सद्याच्युतानृत्तं पूर्वादीनि चतुर्दिशेत्
कपिलं यज्ञपुण्यं च नारायणान्विदिक्षु च  १३२
क्लीङ्कारं कर्मबीजं तु सर्वकामफलप्रदम्
मुनीनां चान्यदेवानां ग्रहाणां यक्षराक्षसाम्  १३३
सर्वेषां च विशेषोऽस्ति स्वनामाद्यर्णमाचरेत्
बिन्दुनादसमायुक्तं तेषां मन्त्रं प्रयोजयेत्  १३४
इति चिन्त्यशास्त्रे मन्त्रोद्धारो नाम द्वितीयः पटलः

## शौचाचमनविधिः

अतः परं प्रवक्ष्यामि शौचाचमनकर्मकम्
देशिकानां द्विजातीनामन्येषां च विशेषतः  १
ग्रहस्थब्रह्मचारीणां भिक्षूणां यतिनां तथा
शौचमाचमनन्दन्ततालुशोधनकं कुरु  २
प्रातरेव समुत्थाय तद्ग्रामस्य बहिनिर्गतः
गोवासं जलतीरं च श्मशानं चैत्य वृक्षकम्  ३
इति वर्जित्य देशे वामलयैमोश्च ग्रहेपि वा

कर्णाग्रे वा कराग्रे वा न्यसेद्यज्ञोपवीतकम् ४
दिवा सौम्याननं वापि रात्रौ वा याम्य वक्त्रकम्
तृणमादाय भूमौ तु मलमूत्रे विवर्जयेत् ५
वामहस्तं धरेद्गुह्यं मृत्युं सव्ये च सङ्ग्रहेत्
वल्मीकमुत्तमं मृत्युत्तुञ्जलतीरे न्यसेत्सुधीः ६
जलेनार्द्रीकृतां मृत्स्नां वटस्य फलमात्रकाम्
विन्यस्य वामहस्तेन घर्षयेत्तु पुनःपुनः ७
वामहस्ते जलं नीत्वा त्रि त्रि संख्या पृथक्पृथक्
गृह्यकं तु मृदाशोध्य सप्तापाने करे नव ८
द्विजातीनां गृहस्थानां मृदाशोध्य मृदं भवेत्
द्विगुणं ब्रह्मचारीणां भिक्षूणां त्रिगुणं भवेत् ९
चतुर्गुणं यतीनां च मनःशुद्ध्यन्तकँ चरेत्
प्राङ्मुखः क्षालयेत्पादौ वक्त्रं हस्तमुदङ्मुखः १०
मरीच्यगस्तिकाचूर्णैर्दन्ताञ्जिह्वांश्च शोधयेत्
जलेन शोधयेत्पश्चाद्गण्डूषं षोडशं क्रमात् ११
पादं च वन्दनं चैव हस्तौ प्रक्षाल्य पूर्ववत्
जले वामपदं न्यस्त्वा तीरे सव्यपदं न्यसेत् १२
हस्तौ गोकर्णवत्कृत्वा माषमग्नजलं गृहेत्
प्रणवेन त्रिधा ग्राह्य सर्व ------ये च १३
प्राङ्मुखो हास्य सकृत्--- संमार्ज्य चाननम्
अङ्गुष्ठानामिकाभ्यां तु अभ्युक्ष्य पाच्छिरोऽन्तकम् १४
तर्जन्यादि कनिष्ठान्तं क्रमेणागुष्ठसंयुतम्
नेत्रे नासापुटौ घ्राणे बाहू चैव स्पृशेत्क्रमात् १५
कनिष्ठेन स्पृशेन्नाभिं सर्वाङ्गुल्यैश्च मूर्धनि
ऋग्यजुस्सामवेदानां तृप्तानां तृप्तिरुच्यते १६
पादाद्यभ्युक्षणेनैव ऋषीणां तृप्तिरुच्यते

अथर्वेतिहासयाश्चैव तृप्तिरास्य द्विमार्जने १७
ससकृन्मार्जनवक्त्रं च गणेशस्य प्रियं भवेत्
नयनस्पर्शनेनैव तृप्तिस्तु सोमसूर्ययोः १८
नासापुटस्पृशाश्वान्यौ दिशां प्रीतिस्तु श्रोत्रकात्
इन्द्रं विष्णवनिलानां च बाहुनाभिहृदा स्पृशेत् १९
एवं स्पर्शनकाले तु तत्त्वन्नामं स्पृशेत्सुधीः
पश्चादाचमनं कृत्वा पूर्वोक्तविधिना सह २०
शौचमाचमनं प्रोक्तं स्नानकर्म ततः शृणु
इति चिन्त्यशास्त्रे शौचाचमनविधिर्नाम पटलः तृतीयः

## स्नानकर्मविधिः

अतः परं प्रवक्ष्यामि स्नानकर्मविधिक्रमम्
स्नानं तु त्रिविधं प्रोक्तं सर्वपापविनाशनम् १
वारुणं च तथाग्नेयं मानसेति त्रिधा भवेत्
वारुणमम्बुनास्नानमाग्नेयं भस्मस्नानकम् २
मानसं मनसा मन्त्रं स्नानमित्यभिधीयते
वारुणं तु चतुर्भेदं नद्यां स्नानं तथोत्तमम् ३
नद्या बहिर्गतं तोयं स्नानं तु मध्यमं भवेत्
तटाकमधमं विद्यात्कूपस्नानमथाधमम् ४
कूपावगाहकं स्नानं चरेत्तटाकतुल्यकम्
पुनर्मृदं च सङ्ग्राह्य शुद्धदेशेऽस्त्रमन्त्रतः ५
मृत्पिण्डं तु त्रिधा कृत्वा जलाक्तं हृदयेन तु
शुद्धिं कृत्वाम्बुतीरे च मृत्पिण्डं प्रोक्ष्य विन्यसेत् ६
प्राक्पिण्डं मूलमन्त्रेण सादाख्यमभिमन्त्रयेत्
हृदयेन तु मन्त्रेण याम्यपिण्डं च मन्त्रयेत् ७
मनोन्मन्याश्च मन्त्रेण स्थापयेत्सौम्य पिण्डकम्

अस्त्रमन्त्रेण दिग्बन्धमवकुण्ठनमाचरेत् ८
पूर्वोत्तरगते पिण्डे वारिमध्ये विनिक्षिपेत्
शिवगङ्गामिदं कल्प्य दिग्बन्धं चास्त्रमन्त्रतः ९
याम्यपिण्डं ततो ग्राह्य घर्षयन्स्नानमाचरेत्
र्पषयेत्तु विशेषेण मूर्धात्पादावसानकम् १०
घर्षयेत्तु विशेषेण मूर्धात्पादावसानकम्
घर्षस्नानात्ततः कृत्वा रजन्यामलकादिभिः
प्राणायामपरो धीमान् संकल्पं सूक्तकं पठन् ११
जलमध्ये तु हौंकारं ह्रींकारं प्रणवेष्टनम्
मूलमन्त्रं स्मरेद्धीमान् स्नापयेत्तु पुनः पुनः १२
प्राङ्मुखोदङ्मुखो वाथ निर्गतां स्वग्रके मुखम्
पुण्यतीर्थस्थलेष्वेव स्नानं चैवोत्तमं भवेत् १३
स्नानं वारुणमित्येवमाग्नेयं स्नानमुच्यते
गोमयं दग्धभस्मं वा अग्निहोत्रयुतं तु वा १४
हृदा पात्रे सुनिक्षिप्य वारि घोरेण योजयेत्
जपेन्मूलेन ब्रह्माङ्गैरभिषिच्य विलिप्ल च १५
अथवान्यप्रकारेण मूर्ध्नेशानेन लिप्यते
पुरुषेण मुखं लिप्य हृदये घोरमन्त्रतः १६
गुह्ये च वाममन्त्रेण सद्योजातेन पादयोः
हृदादीनि षडङ्गैश्च सर्वाङ्गैर्लिप्य भस्मना १७
एवमुद्धूलनं प्रोक्तं सर्वदोषहरं नृणाम्
अशक्तश्चेत्त्रिचत्वारि द्विरष्टादष्टमस्तथा १८
सन्धिदेशेषु पठ्यन्ते त्रिपुण्ड्रैर्दोषनाशनम्
भस्मं वामकरे स्थाप्य दिग्बन्धं चास्त्रमन्त्रतः १९
ईशानादि षडङ्गैश्च सव्यहस्ताभिमन्त्रणम्
मध्याङ्गुल्येन तु नीत्वाम्बु अन्यैश्च जलवर्जितम् २०

शिरो ललाटे कर्णे च नेत्रे घ्राणे तथैव च
आस्यं ग्रीवा तु चांसौ च बाहू कूर्परकौ तथा २१
मणिबन्धौ च हृन्नाभिमेद्रं पायुस्तथैव च
ऊरू च जानुनी चैव जङ्घे स्फिचौ च तथैव च २२
पादौ द्वात्रिंशदित्येते पठ्यन्ते सन्धयः क्रमात्
प्रियं चैवाष्टमूर्तीनां विद्येशानां तथैव च २३
दिक्पालानां वसूनां च द्वात्रिंशदिति कीर्तितम् २१
नाम्नके द्वय संख्येति युग्मसन्धेकतं शृणु
शिरो ललाटकर्णौ च कण्ठे च हृदयेऽपि वा २२
बाहू च कूर्परे चैव मणिबन्धे च नाभिक
मेद्रं पायुश्च ऊरू च जानुजंघे च पादयोः २५
पृष्ठे षोडश सन्धीषु पठ्यन्ते च त्रिपुण्ड्रकम्
शिवादि पञ्चमूर्तीनां वामादीनां तथैव च २४
अश्विन्यौ त्रिद्विरष्टौ च संख्ये च कल्पयेत्क्रमात्
शिरो ललाटकर्णौ च कण्ठे च हृदयेऽपि च २५
बाहू नाभिं च पृष्ठं च पठ्यन्ते चाष्टसन्धयः
ब्रह्मणश्च मुनीनां च कल्पयेदष्टसन्धिकम् २६
आग्नेयमिति विख्यातं मन्त्रस्नानं ततः शृणु
प्रक्षाल्य पादहस्तौ च आचामं च त्रिधा भवेत् २७
पात्रे तु पूरयेद्वारि दिग्बन्धं चास्त्र मन्त्रतः
व्योमव्यापि च ब्रह्माङ्गैःर्मूलेनैव सकृज्जपेत् २८
तज्जलेनैव हस्ताभ्यां मूर्ध्नात्पादावसानकम्
त्रिधा शोध्य च सर्वङ्गं बहुरूपेण मन्त्रतः २९
मन्त्रस्नानमिदं प्रोक्तं सर्वपापविनाशनम्
महावृष्टिभवे स्नानं वारुणं स्नानमुच्यते ३०
स्नानकर्ममिदं प्रोक्तं सन्ध्यानुष्ठानकं शृणु

इति चिन्त्यशास्त्रे सहस्रग्रन्थे स्नानकर्मविधिः चतुर्थः पटलः

## सन्ध्यानुष्टानविधिः

अतः परं प्रवक्ष्यामि सन्ध्यानुष्टानयोः क्रमम्
सन्ध्यामन्त्रं तु वैदिकं सूत्रभेदं विशेषतः १
सुराश्च मुनयश्चैव भूसुराश्च शिवद्विजाः
स्व स्व सूत्रं समाश्रित्य नित्यं प्रातस्तु साधयोः २
तेषु गर्भेषु शैवानां श्रेष्ठं बोधायनं भवेत्
तस्माद्बोधायनेनैव सन्ध्यामन्त्रक्रमं शृणु ३
परिब्रह्मशिवो वास्तु लोकात् सृष्टिस्थितिं करः
यज्ञार्थं तु त्रिमूर्तीनां तस्माद्यज्ञोपवीतकम् ४
भर्गो देवोक्तमन्त्रस्तु सावित्री तदनन्तरम्
दत्वा युगपदेशाभ्यां परब्रह्मशिवात्मनाम् ५
शिवात्सदाशिवं ग्राह्य तस्माद्ग्राह्य महेश्वरम्
महेशाद्विष्णुः संप्राप्तस्तस्माद्ब्रह्मा विशेषतः ६
श्रुत्वा काले हृदस्सोममन्त्राश्रोतृमला सुरा
प्रलयेषु गतं तस्माद्विष्णोस्स्यावतारकम् ७
भवेद्दत्वा सुरौ ग्राह्य ताभ्यां दत्वा प्रजापते
तद्ब्रह्मात्सर्वदेवाश्च ऋषयः पुण्यदेवताः ८
तत्तद्गोत्रक्रमेणैव धरेद्यज्ञोपवीतकम्
यज्ञोपवीतरूपं तु परब्रह्म पवित्रकम् ९
मन्त्ररूपं त्रिमूर्त्यात्मं धरेद्यज्ञफलप्रदम्
गायत्रीं चैव सावित्रीं लोकात्सृष्टिस्थितिक्रमम् १०
भर्गो नाम महेशस्तु लोकानां पितरो भवेत्
तस्मात्सृष्टिकरं ब्रह्मन् भूरादि सप्तलोकवान् ११
तदन्ते भर्गदेवोक्तं जपेत्तस्माद्भवेऽङ्गकौ

तद्वत्सावित्रिधा मन्त्रान् स्थित्वा तु भुवनत्रयम् १२
नित्यं जपेत्सुसिद्ध्यै भर्गो देव प्रसादकम्
सुराणां शत्रुनाशार्थलोकानां स्थितिकारणम् १३
ब्रह्माविष्णुमहो भर्गो आदित्यात्मे सदार्भयेत्
तस्मात्सिन्धिद्वये नित्यं तर्पयेद्भास्कराग्रके १४
प्रणवेन त्रिधाचम्य शोध्य द्विरास्यकं मुखे
तर्जन्यादि कनिष्ठान्तं क्रमादङ्गुष्ठसंयुतम् १५
नेत्रे घ्राणे च श्रोत्रे च बाहू चैव स्पर्शयेत्क्रमात्
अङ्गुष्ठेन हृदि स्पृश्य मूर्ध्नि पञ्चाङ्गुलेन तु १६
आपो हिष्ठेति मन्त्रेण प्रोक्षयेद्वारि वक्त्रके
प्रदक्षिणाम्बु विसृज्य आपो जनयथा जनात् १७
जलं सव्यकरे धार्यमाषमग्नप्रमाणतः
सूर्यश्चादि जपेन्मन्त्रान् ग्राह्यात्स्वाहावसानके १८
सूर्यवाक्यं त्यजेत्सायं सत्यवाद्यं युतं सुधीः
तदन्ते प्रणवेनैव द्विधाचाचमनं कुरु १९
दधिक्राद्यापोहिष्ठाद्या मन्त्राभ्यां प्रोक्षयेन्मुखे
आपो जनयमन्त्रेण जलास्त्रायं तु पूर्ववत् २०
तोयमादाय हस्ताभ्यां स्थित्वा भानुसमग्रके
भर्गो देवोक्तसावित्री मन्त्रेणार्घ्याम्बु निक्षिपेत् २१
त्रिधा च निक्षिपेद्धीमान् तन्मन्त्रेणार्घ्यसामृतम्
सव्यहस्ते जलं ग्राह्य सव्यपार्श्वाद्विशेषतः २२
आत्मप्रदक्षिणं कृत्वाऽसावादित्येति मन्त्रतः
अस्थितं तु भवेद्धीमान् ग्रहाणां तर्पणं कुरु २३
आदित्यसोममङ्गारं बुधं बृहस्पतिशुक्रकम्
शनिराहू च केतुं च नामभिस्तर्पयेत्क्रमात् २४
तर्पणान्ते च तर्प्या च हस्ताभ्यां गृह्य तज्जलम्

स्थित्वा सर्वं भगवत्समाराधनेति तर्पयेत् २५
सन्ध्यातर्पणमित्येवं मूर्तीनां तर्पणं शृणु
ब्रह्मा प्रजापतिर्धाता हिरण्यगर्भश्चतुर्मुखः २६
स्वयंभूः पद्मयोनिश्च परमेष्टी पितामहः
स्पृष्ट्वा च दशनामेति तप्यन्तेन तु तर्पयेत् २७
तदन्ते केशवं चैव नारायणश्च माधवः
गोविन्दश्चैव विष्णुश्च मधुसूदनस्त्रिविक्रमः
वामनः श्रीधरश्चैव हृषीकेशः पद्मनाभकः २८
दामोदरेति नामभिः द्वादशाभिश्च तर्पयेत्
महेशं चन्द्रमौळिं च नृत्तमूर्तिंस्तथैव च २९
देव्यर्धं च वृषारूढं त्रिपुरघ्नं यमान्तकम्
दक्षिणामूर्तिं वटुकं श्रीकण्ठं शूलपाणिनम् ३०
रुद्रमेकादशं चैव तर्पयेत्तु यथाक्रमम्
इन्द्रं चैव तथाग्निं च यमं च निर्ऋतिं तथा ३१
वरुणं चैव वायुं च सोममीशं च तर्पयेत्
कौशिकः काश्यपश्चैव भारद्वाजश्च गौतमः ३२
अगस्त्यश्चैव पञ्चैतान्मुनयस्तर्पयेत्तथा
अत्रिश्च विश्वामित्रश्च पुलस्त्यः पुलहः क्रतुः ३३
वसिष्ठश्च मरीचिश्च मुनयस्सप्तधा भवेत्
मूर्तीनां तर्पणं प्रोक्तं शिवानुष्टानकं शृणु ३४
शिवानुष्ठानकर्मार्थं शिवगङ्गां स्मरेज्जलम्
शिवासनं शिवमूर्तिं शिवायेति नमस्कृतम् ३५
चतुर्दशेषु पूर्णादि जलं नीत्वास्त्रमन्त्रतः
मायाबीजं लिखेत्तोयं ताड्याभ्युक्षावकुण्ठनम् ३६
कृत्वा तु सुरभिर्मुद्रां दर्शयेद्धृदयेन तु
हस्ताभ्यां तोयमादाय ततोऽयं भुवनेश्वरीम् ३७

मन्त्रेणैवं त्रिधा वक्त्रे मुखशुद्धिं समाचरेत्
आत्मविद्या शिवाख्याभिस्स्वधान्ते वारिसंग्रहेत्  ३८
कराङ्गन्यासमाश्रित्य हस्तन्यासं तु कारयेत्
सूर्यमूलेन सूर्यस्य अर्घ्यं वारि ददेत्त्रिधा  ३९
कृत्वा तत्सूर्यमूलेन जपेद्द्वादश संख्यया
पश्चाच्छक्त्यौघवौषट् स चरेदात्मप्रदक्षिणम्  ४०
वामहस्ते जलं स्थाप्य दक्षहस्तेन तर्जनम्
ईशानादिभिर्मन्त्रैश्च प्रोक्षयेद्वक्त्रदेशके  ४१
कनिष्ठानामिकामध्ये पर्वेष्वङ्गुष्ठसंयुतम्
शिवगायत्रि जप्त्वाति त्रिधा मूलेन तर्पयेत्  ४२
पूर्वेषु च क्रमेणैव जप्त्वा तर्प्य पुनः पुनः
मन्त्रमेकादशानां तु तर्पयेत्तदनन्तरम्  ४३
गणेशं सुब्रह्मण्यं च क्षेत्रपालं तथैव च
आचार्यादि क्रमेणैव तर्पयेत्क्रमशो बुधः  ४४
स्नानक्रममिदं प्रोक्तमर्चनाङ्गं ततः शृणु

इति चिन्त्यशास्त्रे सन्ध्यानुष्ठानविधिर्नाम पञ्चमः पटलः

## अर्चनाङ्गविधिः

अतः परं प्रवक्ष्यामि अर्चनाङ्गविधिक्रमम्
अष्टयामं भवेन्नित्यमुदयाभ्युदयान्तकम्  १
अष्टसन्धि यजेच्छम्भुं क्रमाद्यामं प्रति प्रति
द्वाराच्र्यं नासिकापादं तत्समं लिङ्गशोधनम्  २
स्नानकं मन्त्रिविन्यासमेकमेकं प्रति प्रति
शिवावृतार्चनं अर्धं नैवेद्यमर्धनाडिका
तत्समं होमकर्मे च बलिदानं द्वयार्धकम्
एकं वा धूपदीपादि यजेद्यामं प्रतिप्रति

वरसिद्धान्तपूजेति उत्तमोत्तममिष्यते ३
यामेषु सप्तमं त्यक्त्वा साययामेषु पूजनम्
मुनिसिद्धान्तकं प्रोक्तमुत्तमे मध्यमं भवेत् ४
चतुर्थसप्तमं त्यक्त्वा यामान्त्येषु पूजनम्
गणसिद्धान्तक्रमं प्रोक्तमुत्तमे कन्यसं भवेत् ५
सर्वसिद्धान्त यजनाच्छ्रुत्वा मध्योत्तमादयः
प्रातर्मध्याह्न रात्रिं चार्धयामान्त्ययामकम् ६
पञ्चसन्धियजेन्नित्यम्मध्यमोत्तममुच्यते
प्रातर्मध्याह्न रात्रौ च निशान्तं सिद्धितञ्चतु ७
मध्यमे मध्यमं प्रोक्तं चतुस्सन्धिमिहोच्यते
प्राक् रात्रौ तु निशान्ते तु त्रिसन्धि मध्यमाधमम् ८
प्रातरात्रौ द्विसन्धी च यजनं कन्यसोत्तमम्
एकसन्धि यजेन्नित्यं कन्यसे चाधमं भवेत् ९
नित्यपूजां विना यच्च पुरायत्रृद्धेषु पूजनम्
अधमाधममित्युक्तं कुर्यात्सायुज्यसंपदम् १०
प्रातर्मध्याह्नरात्रौ च बलिहोमं समाचरेत्
काम्यार्थमर्धयामे तु सन्धिष्वन्यासु वर्जयेत् ११
प्रातर्मध्याह्नसायाह्ने रात्रिं चैवार्धयामकम्
रात्र्यन्तकं स्वयं नामं प्रत्येकं दशनाडिकाः १२
मध्यरात्रिस्समाख्यातं रात्र्यन्तकमथ शृणु १३
रात्र्यन्ते वा जलं पुष्पं सङ्ग्रहे यजनं तथा
देवानां स्थापनं तीर्थं प्रातःकालेन बुद्धिमान् १४
स्नानान्ते चार्चनान्ते च नैवेद्याद्यन्तमेव च
उत्सवान्ते तु नृत्तान्ते शङ्खध्वनिं समाचरेत् १५
सन्धिलक्षणमाख्यातं पाद्यादीनां तु लक्षणम्
पाद्यादिद्रव्यम्

कुङ्कुमं चन्दनं दूर्वोशीरं सिद्धार्थकं तथा १६
उदकेन समायुक्तं मध्यमं पाद्यमुच्यते
चन्दनोशीरसंयुक्तं कन्यसं पाद्यमुच्यते १७
प्रत्येकं धारणा श्रेष्ठं तस्यार्धं मध्यमं भवेत्
तस्यार्धं कन्यसं ज्ञेयं पाद्यद्रव्यमिति स्मृतम् १८
उशीरं जातिकर्पूर तुटिताम्बूल पङ्कजम्
मुरोणैवोदकोपेतं श्रेष्ठमाचमनीयकम् १९
एलालवङ्गकर्पूरमुशीराति समन्वितम्
जलेनैव समायुक्तं मध्यमाचमनीयकम् २०
एलालवङ्गभस्माभं कन्यसाचमनीयकम्
एतेषां तु प्रमाणं तु पूर्ववत्समुदाहृतम् २१
अष्टद्रोणैरथाभिस्तु स्नानं कन्यसमुच्यते
द्विगुणं मध्यमं ज्ञेयमुत्तमं त्रिगुणं भवेत् २२
आपक्षीरकुशाग्राणि यवसिद्धार्थतण्डुलैः
तिलैः पुष्पैस्समायुक्तमर्घ्यमष्टाङ्गमुत्तमम् २३
सर्षपं यवशाल्यद्भिस्तण्डुलैर्मध्यमार्घ्यकम्
यवतण्डुलशाल्यद्भिरर्घ्यं कन्यसमुच्यते २४
अर्घ्यद्रव्यप्रमाणं तु पूर्ववत्परिकल्पयेत्
कर्पूरं कुङ्कुमं पत्रं लवङ्गं च फलत्रयम् २५
चन्दनोशीरलोहैश्च गन्धमुत्तममुच्यते
उशिरं चन्दनं चैव कर्पूरं च फलत्रयम् २६
घनं खंग समायुक्तं मध्यमं गन्धमुच्यते
हिमं घनं च कर्पूरं कन्यसं गन्धमुच्यते २७
द्रव्यं प्रति फलं श्रेष्ठं तस्यार्ध्यं मध्यमं स्मृतम्
तदर्धमधमं ज्ञेयं गन्धद्रव्यं प्रकीर्तितम् २८
गन्धद्रव्यं समाख्यातं पुष्पलक्षणमुच्यते

पुष्पलक्षणम्
रक्तं पीतं तथा श्वेतं कृष्णं चेति चतुर्विधम्  २९
पुन्नागं श्वेतपद्मं च शङ्खपुष्पं च मल्लिका
नन्द्यावर्तद्वयं चैव मन्दारं बहुकर्णिका  ३०
जातीलक्ष्मी च वकुळं द्विकर्णी कुरवं तथा
अतली श्वेतलोध्रं च द्रोणं श्वेतार्कमालती  ३१
धुर्तूरं मौसली चैव बृहती करवीरकम्
वेदिका रक्तमन्दारं लोध्री च पट्टिका तथा  ३२
रक्तान्येतानि पुष्पाणि राजसानि विनिर्दिशेत्
चम्पकं कर्णिकारं च कौशिकं हेमधुर्तुरम्  ३३
गोरण्डमारग्वधं च गैरिकं कर्णिकं तथा
एतत्पुष्पं तु मिश्राणि कृष्णानि तामसानि वै  ३४
मोक्षदं सात्त्विकं चैव पौष्टिकं राजसं तथा
सिद्ध्यर्थं मिश्रपुष्पाणि पत्रं पुष्पं समृद्धिदम्
बिल्वपत्रं तपस्वी च सौभद्रं धातकी तथा
अपामार्गं कुशा दूर्वा पञ्चबिल्वं शमी तथा  ३४
तुलसी च नृपं चैव जम्बूकानागनन्दिका
एकपत्रारविन्दं च विष्णुक्रान्ति कृताञ्जली ३५
ततो नीलोत्पलं पुष्पं तामसानि विनिर्दिशेत्
नीलोत्पलसमं पुष्पं न भूतं न भविष्यति  ३६
नन्द्यावर्तं श्रियावर्तं श्वेतार्कं श्वेतपद्मकम्
पट्टिकाषाढपुन्नागं मालतीमुदयं ददेत्  ३७
व्याघातं बृहती व्याघ्री पङ्कजं करवीरकम्
पाटलामुत्पलं द्रोणं मध्याह्ने तु प्रदापयेत्  ३८
धुतूरं वेदिकां भद्रीं चम्पकं बहुकर्णिकाम्
मालतीं मल्लिकां चैव दापयेत्तु प्रदोषके  ३९

नीलोत्पलं च जाद्यिवअनतद्यतं च बिल्वपत्रं कदम्बकम्
द्विकर्णीं चैव सौभद्रामर्धयामे प्रदापयेत् ४०
अन्यपुष्पाणि सर्वाणि अन्यसन्ध्यासु दापयेत्
अतिपक्वमपक्वं च मुकुळानि विवर्जयेत् ४१
केशकीटोपवृद्धानि लूतसूत्रावृतानि च
स्वयं पतितपुष्पाणि सञ्चितान्यपि वस्त्रकैः ४२
एकाहोषितपुष्पाणि वर्जयेत्तु प्रयत्नतः
पुष्पलक्षणमाख्यातं शृणु धूपस्य लक्षणम् ४३
धूपलक्षणम्
कुन्दुरं गुग्गुलुं चैव निर्यासं चन्दनं तथा
मेहं च कृष्णलोहं च कर्पूरं च क्रमेण तु ४४
सप्त षड् भूतवेदांश्च अग्न्यश्विन्यम्बरांशकान्
आहृत्य चूर्णयित्वा तु मधुना च परिप्लुतम् ४५
एतच्छीतारिधूपं तु शिवप्रीतिकरं भवेत्
कृष्णलोहं च निर्यासं चन्दनं च क्रमेण तु ४६
व्योमपक्षाश्विनी भागमीषत्कर्पूरमिश्रितम्
उत्तमं धूपमाख्यातं मध्यमं तु ततः शृणु ४७
चन्दनोशीरसंयुक्तं लोहयुक्तं मधुप्लुतम्
भागं तु पूर्ववत्प्रोक्तं मध्यमं धूपमुच्यते ४८
गग्गुलुं घृतसंयुक्तमधमं धूपमुच्यते
दीप्ताङ्गारसमायुक्तं घण्ठां वामकरान्वितम् ४९
कपिलाघृतेन दीपं स्यात्सितरक्तासितासु वा
अजाघृतमलाभे तु शुद्धतैलेन वा पुनः ५०
कपिलायां घृतं श्रेष्ठमन्येषां मध्यमं भवेत्
अधमं स्वादजासर्पिः शुद्धतैलं तु कन्यसम् ५१
वेदत्र्यङ्गुलज्वाला द्व्यङ्गुला ह्युत्तमादयः

घृतेषु महिषाज्यं च वर्जयेत्तु प्रयत्नतः ५२
सालोक्यपदसामीप्यं सारूप्य सायुज्यं तथा
प्रददेदुत्तमादीनि प्राणिनां तु शिवप्रिये ५३
इति चिन्त्यशास्त्रे प्रतिष्टा तन्त्रे अर्चनाङ्गविधि षष्ठम पटलः

## शिवाङ्गोद्भवम्

अतः परं प्रवक्ष्यामि नित्यं नित्यं शिवार्चनम्
शिवपूजासमं पुण्यं न भूतो न भविष्यति १
द्विविधं तत्समाख्यातमात्मार्थं च परार्थकम्
आत्मार्थमर्चकस्यैव भवेत्पूजाफलप्रदम् २
परार्थं चैव सर्वेषां सेव्यमान परस्परम्
फलप्रदं ददेत् -------------- ३
आत्मार्थं च द्विजातीनं भक्तानां च विशेषतः
पूजयेद्गुरुणा दत्तं परार्थं तु न विद्यते ४
तद्द्वयोरुभयोः पूजा कर्तव्यमादिशैवकैः
आत्मशुद्धिस्तु पूर्वं स्यात् तद्भेदं नवधा भवेत् ५
उपस्थानं पञ्चसंस्थं पञ्चग्रन्थिहरं तथा
शिवाङ्गोत्पत्तिकं न्यासमङ्गन्यासस्थितिर्भवेत् ६
अष्टत्रिंशत्कलान्यासमक्षरन्यासमेव च
एवं नवविधं प्रोक्तमात्मशुद्धिरिति स्मृतम् ७
इत्येवं विन्यसेद्देवं सकलीकृत विग्रहम्
स्नानं कृत्वा तु विधिवत्सन्ध्यानुष्ठानमाचरेत् ८
आलयं संप्रविश्याथ आचामं विधिनाचरेत्
प्राणायामत्रयं कृत्वा आदिशैवोऽर्कसन्निधौ ९
प्रणवस्य ऋषिर्ब्रह्मा मन्त्रमूर्तौ च विन्यसेत्
देवी गायत्रिका छन्दं श्रोत्रन्यासे तु संस्पृशेत् १०

परमात्मा च देवेति मन्त्रान्यस्त्वा सुवच्चसि
विन्यसेत्तु विशेषेण पञ्चयाङ्गुलैस्तु बुद्धिमान्  ११
भर्गो देवोक्तगायत्रीं जपेत्तु दशसंख्यया
भर्गो देवोक्तगायत्री जपेदष्टोत्तरं शतम्  १२
उपस्थानक्रमेणैव कुर्यादात्मप्रदच्चिणम्
उपस्थानक्रमं प्रोक्तं भस्मस्नानं ततः शृणु  १३
उत्तराभिमुखो भूत्वा रुचिरासनमाचरेत्
भस्म वामकरे स्थाप्य दिग्बन्धं चास्त्रमन्त्रतः  १४
मध्याङ्गुल्यजलैर्युक्तमन्याङ्गुलिविवर्जितम्
व्योमव्यापि दशार्णेन सव्यहस्ताभिमन्त्रयेत्
मूर्ध्नि पञ्चाङ्गुलीभिश्च ईशानेन तु मन्त्रतः
न्यस्त्वा च ललाटे च पुरुषेण त्रिपुण्ड्रकम्
सव्यकर्णे त्वघोरेण वामदेवेन वामतः  १५
सद्योजातेन मन्त्रेण मध्यमाङ्गुलिना स्पृशेत्
हृदये च हृदा मन्त्री विन्यसेच्च त्रिपुण्ड्रकम्  १६
सव्यबाह्वौ त्रिपुण्ड्रं च शिरोमन्त्रेण देशिकः
वामबाह्वौ च शिखया विन्यसेच्च त्रिपुण्ड्रकम्  १७
कवचेन विन्यसेद्भस्म नाभौ चाग्राङ्गुलत्रयम्
नेत्रेणैव तु मन्त्रेण भस्मजानुद्वयो न्यसेत्  १८
पृष्ठोर्ध्वे विन्यसेद्भस्म मन्त्रेणैव तु मन्त्रतः
भस्मस्नानमिदं प्रोक्तं पञ्चग्रन्थिहरं ततः  १९
सुखासीनं यथाश्रित्य रुचिरासनकं स्थितः
पादाग्रं संपुटं कृत्वा द्वयोर्जान्वन्तरेऽपि च  २०
नेत्रे नासाग्रयोर्दृश्य देहदीर्घं च तदृजु  ।  मृ
रुचिरासनमित्युक्तं प्राणायामत्रयं ततः  २१
यस्य नासिस्फुटं भानु वामं चन्द्रं च कल्पयेत्

अङ्गुष्ठाग्रेण संबन्धा वायुं चन्द्रेन रेचयेत् २२
अन्याङ्गुलीभिर्बध्वेन्दुं वायुमर्केण पूरयेत्
प्राणवत्पूरयेद्वायुं दूतिवद्दशमात्रकैः २३
प्राणायामत्रयं तस्मात्कर्णौ प्रत्येकतः स्पृशेत्
कुम्भकं तु समं वायुः पूर्णकुम्भोक्तवद्भवेत् २४
पञ्चपञ्चचतुर्थं च त्रयं च द्वयमेककम्
शस्त्रं पाशुपतं च्छित्वा मेढ्रग्रन्थिस्तु पूर्वकम् २५
नाभिग्रन्थिर्द्वितीयं तु गळग्रन्थिस्तृतीयकम्
चतुर्थं तु ललाटे च शिरोग्रन्थिस्तु पञ्चमः २६
मूर्ध्नि तस्योपरि व्योम्नि प्रणवं श्वेतपद्मके
मन्त्ररूपं तु सन्ध्यात्वा व्योमव्यापि परं शिवम् २७
तस्मिन् प्राणात्मकं योज्य पश्चाद्देहं दहेत्सुधीः
स्पृशेत्कालाग्निबीजेन दहेत्पादं शिरोऽन्तकम् २८
दर्भरज्जुकृते चात्मा ज्वालामाला च वद्दहेत्
जन्मजन्मावसाने तु कृतदोषहरं भवेत् २९
ग्रन्थिच्छेदमिदं प्रोक्तं शिवाङ्गोद्भवकं शृणु
व्योम्ने च मन्त्ररूपेति भवेत् विद्वामृतं ततः ३०
श्रावयेत्पद्मनालेन सुषुम्नाभिन्नमस्तके
आपूर्यं प्रणवत्पूर्वमात्मानममृतेन च ३१
मन्त्ररूपं न्यसेत्स्वाङ्गं मन्त्राणामवसानकम्
वस्त्रं प्रदक्षिण न्यत्वा साङ्गं न्यस्त्वापसव्यकम्
नाभिरेखाद्धि चास्त्रोक्तं न्यसेन्मौलौ यकारकम्
शिखा रक्षो नमश्श्रोत्रौ ओष्ठे चैव वकारकम्
ऋकारं पद्मपीठोर्ध्वे प्रणवप्रभसंयुतम् ३२
पञ्चाक्षरमयं ह्येवं नवार्णमुद्धृतं ततः
तस्मिन्नाद्यक्षरं बाहौ न्यसेद्देव्याय बीजवत् ३३

द्वितीयार्णं न्यसेत्पादे बिन्दुबीजसमन्वितम्
तृतीयं च चतुर्थं च न्यसेद्धृदयपार्श्वयोः ३४
पञ्चार्णादीनि पञ्चार्णं विन्यसेत्तु विशेषतः
पादादिजानुपर्यन्तं पृथिवीं चतुरश्रकम् ३५
पीतवर्णन्तु तद्बीजं शिवस्य पञ्चमं भवेत्
जान्वादिनाभिपर्यन्तमप्सु चार्धेन्दु चाकृतिम् ३६
शुक्लवर्णं तु तद्बीजं शिवार्णेषु च षष्ठकम्
नाभ्यादि हृदयान्तं च वह्निस्थानं त्रिकोणकम् ३७
प्रदक्षिणन्यस्त्वा साङ्गन्यस्त्वापसव्यकम्
नाभिरेखाध्र्वचास्त्रोक्तं न्यसेन्मालयकारकः ३८
शिखराक्षे नं श्रोत्रौ ओष्ठे चैव वकारकम्
रक्तवर्णं तु तद्बीजं नवार्णेषु च सप्तमम् ३९
गलादि च ललाटान्तं वायुस्थानं षडश्रकम्
कृष्णवर्णं स्वयं बीजं शिवबीजेषु चाष्ठमम् ४०
तत्र स्थाने च नासौ च नवमार्णं न विन्यसेत्
ललाटाद्द्वादशाङ्गुल्यं मूर्ध्निव्योमं सुवृत्तकम् ४१
धूम्रवर्णं तु तद्बीजं स्वरान्ताद्बिन्दुनादकम्
विन्यसेत्तु क्रमेणैव सकलीकृतविग्रहम् ४२
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः
भवेयुः पञ्चभूतानामधिदेवाः प्रकीर्तिताः ४३
स्वस्वबीजं च मूलं च न्यसेत्स्वस्वतनुर्भवेत्
शिवाङ्गोद्भवमेवं स्यात् करन्यासं ततः शृणु ४४
इति चिन्त्यशास्त्रे शिवाङ्गोद्भव सप्तम पटलः

## अष्टत्रिंशत्कलान्यासम्

स्थलिको हस्तपृष्टाभ्यामस्त्रमन्त्रेण चैकतः

शोधयेत् स्थलिकाभ्यां च सव्ये वामे च तत्क्रमात् १
अङ्गुष्ठादिकनिष्ठान्तमीशानात्सद्यमन्त्रकम्
मध्यमादिकनिष्ठान्तं हृदयादि शिखान्तकम् २
स्थलिकामध्ययोर्वर्म नेत्रे चानामिके न्यसेत्
सृष्टिन्यासमिदं प्रोक्तं संहारन्यासमुच्यते ३
कनिष्ठाद्यङ्गुष्ठकान्तं स्यात्सद्यादीशानमन्त्रकम्
तर्जन्यादिमध्यमान्तं हृदयाद्यङ्गानि विन्यसेत् ४
स्थलिका मध्ययोः पूर्वं वामे सव्ये च विन्यसेत्
संहारन्यासमेवोक्तं करन्यासमिदं भवेत् ५
करन्यासावसाने तु अङ्गन्यासं समाचरेत्
हस्तयोस्स्थलिकौ भ्राम्य अस्त्रमन्त्रेण तत्रिधा ६
ईशानं मूर्ध्नि विन्यस्य मुखं तत्पुरुषं न्यसेत्
अघोरं हृदयन्यस्त्वा वामदेवे तु गुह्यके ७
सद्यं च पादयोर्न्यस्त्वा हृदयं हृदयेऽपि च
शिरश्शिरसि विन्यस्य शिखायां च शिखां न्यसेत् ८
हस्ताभ्यां विन्यसेद्धीमान्कवचं स्तनमध्ययोः
नेत्रं तु नेत्रायोर्न्यस्य दिग्बन्धञ्चास्त्रमन्त्रतः ९
सृष्टिन्यासमिदं प्रोक्तं संहारन्यासमुच्यते
पादादि मूर्ध्निपर्यन्तं सद्यादीशानमन्त्रकम् १०
अस्त्रादि हृदयान्तं च स्व स्व स्थानेषु विन्यसेत्
संहारन्यासमेवोक्तमङ्गन्यासं तु चाम्बिके ११
गृहस्थस्सृष्टिमार्गेण तत्त्वन्यासं समाचरेत्
वानप्रस्थ यतीनां च संहारन्यासेव हि १२
अपत्नीको वनस्थश्चेत् संहारक्रममाचरेत्
सृष्टिन्यासं क्रमं चैव सर्वेषाञ्चोत्तमोत्तमम् १३
स्थितिन्यासं तु सर्वेषां हस्ताभ्यामङ्गुलीषु च

सव्याङ्गुष्ठं समारभ्य वामाङ्गुष्ठावसानकम् १४
दशबीजं न्यसेद्धीमान् स्थितिन्यासमिति स्मृतम्
अङ्गन्यासमिदं प्रोक्तमष्टत्रिंशत्कलां ततः १५
अष्टत्रिंशत्कलान्यासं कलाशक्तिसमन्वितम्
कलां पुमांश्च विज्ञेयो तत्कला शक्तयो भवेत् १६
शिवशक्ति तयोस्सोत भेदाश्च निष्कलो भवेत्
ईशानस्य कलाः पञ्च पुरुषस्य चतुष्कलाः १७
अघोरस्य कलाश्चाष्टौ वामस्यैव त्रयोदश
अष्टौ सद्यकलाश्चैव मकुटादिक्रमान्न्यसेत् १८
स्व स्व वक्त्रस्य बीजस्य कलाश्च शक्तयस्ततः
योजयेत्प्रणवादीनि नमोऽन्तानि क्रमान्न्यसेत् १९
ईशानस्य कलाः पञ्च शिरोमध्ये च पूर्वके
सव्यापसव्ययोश्चैव पश्चिमे विन्यसेत्क्रमात् २०
ईशानश्चेश्वरो ब्रह्मा शिवश्चैव सदाशिवः
इतीशानकलाः पञ्च शशिनी चाङ्गदाम्बिके
ब्रह्मे च मरीची च ज्वालिनी पञ्च शक्तयः
पुरुषस्य कलाश्चेताः पूर्वे च याम्यसौम्ययोः
तथा च पश्चिमे चैव विन्यसेद्वक्त्रदेशके
तत्पुरुषमहादेव तन्नो रुद्र प्रचोदयात् २१
कलाधिदेवता एते शान्तिर्विद्या प्रतिष्ठका
निवृत्त्यन्तं क्रमेणैव शक्तयः पुरुषस्य तु २२
अघोरस्य कलाश्चादौ हृदये कण्ठदेशके
अंसद्वये च नाभौ च कुक्षौ पृष्ठोरसि तथा २३
अघोरश्चाथ घोरश्च घोरघोरश्च सर्वतः
सर्वेभ्यश्च नमस्ते च रुद्रश्च इति चाष्टमम् २४
तमा मोहा क्षया निद्रा धृतिः क्षान्तिस्स्मृतिः क्षमा

अघोराष्टकलानां च शक्तयश्च ततः क्रमात्  २५
वामदेवकलाश्चैव त्रयोदश क्रमेण तु
पायु शिश्नं स्फिगूस्त्र पार्श्वजानुद्वयं द्वयम्  २६
ग्रन्थि जङ्घा द्वयं युग्मं पादाग्रं च क्रमेण तु
वामा ज्येष्ठा च रुद्रा च कालश्चैककलास्तथा  २७
विकरणा बलक्रिया चैव विकरणो बल एव च
प्रमथस्सर्वभूतश्च मन उन्मन एव च  २८
वामदेवस्य तु कलास्तत्कलाशक्तिरुच्यते
रजा रक्षा रतिः पाल्या काय संयमनी क्रिया  २९
कृष्णा मोहाक्षरा चिन्ता मोहिनी भ्रामिणी तथा
वामदेवकलानां च शक्तयश्च त्रयोदश  ३०
सद्योजातकलाश्चाष्टौ पादयोरुभयोस्तथा
हस्तयोरुभयोश्चैव बाह्वोश्चोभयोस्तथा  ३१
नासिका मूर्ध्निदेशे च विन्यसेत्तु क्रमेण तु
सद्योजातं च सद्यश्च भवे चैवाभवे तथा
अनादिश्च भजस्वान्ता भजश्चैव तथोद्भवः  ३२
सद्योजात कलाश्चैवं कलाशक्तिं ततः शृणु
सिद्धिरिद्धिर्द्युतिर्लक्ष्मी मेधाशान्तिस्स्वधा प्रजा  ३३
अष्टत्रिंशत्कला शक्तिं लिङ्गं तु पूजयेन्न्यसेत्
इति चिन्त्यशास्त्रे अष्टत्रिंशत्कलान्यासो नाम अष्टमः पटलः

## एकत्रिंशत्कलान्यासम्

महेशप्रतिमानां च एकत्रिंशत्कलां तथा
ईशानस्सर्वविद्यानां शशिन्येकं शिरो न्यसेत्  १
तत्पुरुषाय विद्महे निवृत्ये चेति वक्त्रके
अघोरं वाम सद्यानां कलां पूर्वोक्तवच्चरेत्  २

अष्टत्रिंशत्कलेषुश्च देवीनां पञ्चविंशतिः
ईशानपुरुषं चैव एकैकं तु कला भवेत् ३
अघोरे षष्ठमं ग्राह्यं वाममेकादशं भवेत्
सद्योजातं भवेत् षष्ठं एवं स्यात्पञ्चविंशतिः ४
कलाबीजावसानेषु देवी बीजसमन्वितम्
तारां च मूर्ध्नि विन्यस्य विद्यां वक्त्रे तु विन्यसेत् ५
हृदये च गले बाह्वौ जठरे नाभिदेशके
अघोरस्य कला न्यस्त्वा योनौ गुह्यप्रदेशके ६
ऊरूजानुद्वयोश्चैव द्वयोश्च जङ्घपृष्ठके
उभयोः पार्श्वयोश्चैव वामदेवकलां न्यसेत् ७
पादयोरुभयोश्चैव हस्तयोरुभयोस्तथा
स्तनयोरुभयोश्चैव सद्योजातकला न्यसेत् ८
अष्टत्रिंशत्कला ह्येवं सर्वेषां न्यासमुत्तमम्
अष्टत्रिंशत्कलायेति अक्षरन्यासमुच्यते ९
प्रणवं बिन्दुनादं च अक्षरं च नमोऽन्तकम्
अकारादि विसर्गान्तं जीवार्णं षोडशस्वरम् १०
आत्मानमक्षरात्मानं पञ्चत्रिंशच्च कादयः
मूर्ध्नि चैव ललाटे च नेत्रयोः कर्णयोस्तथा ११
गण्डयोर्नासिकयोश्च ओष्ठयोर्दन्तपङ्क्तयोः
जिह्वायां तालुरन्ध्रे च स्वरान् षोडश विन्यसेत् १२
कवर्गां दक्षिणे हस्ते चवर्गं वामहस्तके
टवर्गं दक्षिणे पादे तवर्गं वामपादके १३
पफौ दक्षिणे पार्श्वे तु वामपार्श्वे बभौ न्यसेत्
कण्ठदेशे मकारं तु स्कन्धे पृष्ठे च विन्यसेत् १४
त्वग्रक्तमांसमेधास्थिमज्ञाशुक्लादि धातुकाः
यकारादि सकारान्तान्नाभ्यादिहृदयान्तकम् १५

हृदये तु हकारं तु ळकारं वृषणेऽपि च
च्चकारमेढ्रदेशे तु विन्यसेत्तु विशेषतः १६
अष्टत्रिंशत्कला ह्येते सकली कृत विग्रहः
नवधा कर्ममेवोक्तमात्मशुद्धिरिति त्रयम् १७
स्थानशुद्ध्यादिकलयन् स्थाप्याम्मम कर्मतः
प्रथमं स्थानशुद्धिश्च द्वितीयं द्रव्यशुद्धिकम्
तृतीयं सौरपूजा च पुरायाहं च चतुर्थकम्
पञ्चमं पञ्चगव्यं च पञ्चामृतं तु षष्ठकम्
सप्तमं मन्त्रशुद्धिश्च घटस्थापनमष्टमम्
आत्मशुद्ध्यवसानेषु स्थानशुद्धिं समाचरेत्
शिवाग्रे गोमयं लिप्य भूमौ हस्तप्रमाणतः १८
लकारं तु शिवाग्रोक्तं न्यस्य तारेण वेष्टयेत्
गन्धाक्तश्वेतपुष्पाभ्यां भूमिमावाहयेत्सुधीः १९
रुचिरासनसंयुक्तां श्वेतवर्णां घनस्तनाम्
श्वेतवस्त्रधरां देवीं सर्वाभरणभूषिताम् २०
श्वेतपद्मकराभ्यां च हृदये चाञ्जलीयुताम्
एवं भूमीं च संध्यात्वा प्रोक्षयेत्प्रणवाम्बुना २१
तारबीजं च भूम्या नाम षडङ्गसंयुतम्
स्त्रीलिङ्गान्तानि संयोज्य स्व स्व स्थानेषु विन्यसेत् २२
अस्त्रमन्त्रेण दिग्बन्धमवकुराठनमाचरेत्
पूर्ववत्कल्पयेद्भूमिं भवेदुत्थायशाययाम् २३
हर्म्यं प्राकारभूम्यां च हारमाभरणाश्रिताम्
स्थानशुद्धिरिदं प्रोक्तं द्रव्यशुद्धिं ततः शृणु २४
शरावं ताम्रपात्रादि जलभाराडं च वर्द्धनीम्
पाद्यमाचमनं चार्घ्यं पात्रान्शंखादिकं क्रमात् २५
क्षालयेच्च हृदा मन्त्री निरीक्ष्य घोरमन्त्रतः

शङ्ख वा वर्धनीं वापि पूरयेत्तु शिवाम्भसा २६
पुष्पक्षतं कुशाग्रं च प्रणवेन निधाय च
विधाय दक्षहस्तेन ब्रह्माङ्गैरभिमन्त्रयेत् २७
दर्शयेल्लिङ्गमुद्रां च सुरभिं चैव मुद्रिकाम्
प्रोक्षयित्वा हृदा स्वान् पूजोपकरणादिकान् २८
द्रव्यशुद्धिरियं प्रोक्ता सौरपूजां ततः शृणु २९
इति चिन्त्यशास्त्रे द्रव्यशुद्धिपटल नवमः

## सौरपूजाविधि

अतः परं प्रवक्ष्यामि सौरपूजाविधिक्रमम्
द्विविधं सूर्यपूजा च सर्वप्राणिहितावहम् १
आयुरारोग्य जयदं यजमानस्यैव मोक्षदम्
पूजायाभितत्पुण्यं पुत्रमित्रादि सम्भवम्
बेरपूजोत्तमं विद्याच्चक्रपूजादि मध्यमम् २
सूर्यपूजा विना कुर्यादधमं तत्प्रकीर्तितम्
भान्वालयं विना चेत्तु देवाग्रे मण्डलं यजेत् ३
प्रणवेनार्घ्यकं कल्प्य तेनैव प्रोक्ष्य भूतले
चक्रमध्ये तु वृत्तं तु त्रिकोणं पुनर्वृत्तकम् ४
षट्कोणं वृत्तयुग्मं च अष्टाश्रं च कलाश्रकम्
सूर्यचक्रं तु विख्यातं मध्ये सूर्यादिमाक्षरम् ५
तच्च ह्रींकारमोङ्कारं भ्रामयेत्तु विशेषतः
त्रिकोणे उषा प्रत्युषा छाया वाद्यक्षरं लिखेत् ६
षट्कोणे नामधेयं तु वरुणादिषु विन्यसेत्
नमः पार्श्वं तु वृत्ताग्रे प्रणवं लिख्यदेशिकः ७
तद्वृत्ते सौम्ययाम्यान्तं ह्रां ह्रीं ह्रौं क्रमेण च
अष्टकोण विशेषेण पूर्वादिषु चतुर्दिशि ८

सोमं बुधं गुरुं शुक्रं क्रमादाद्यक्षरं बुधः
कुजं शनिं राहुकेतुमाग्नेयादि क्रमेण तु ९
अष्टकोणे तु बाह्ये तु कलाकाणे तु विन्यसेत्
जीवार्णं विन्यसेद्धीमानग्रादि न क्रमान्तकम् १०
मध्यमे सूर्यरूपं तु सर्वबीजं तु दर्शयेत्
प्राङ्मुखोदङ्मुखो वापि तद्रूपं पूजयेद्गुरुः ११
तेजश्चण्डेश्वरं देवं पार्श्वेन तु प्रपूजयेत्
श्वेतपुष्पैस्सुगन्धैश्च कुसरान्नं तु दापयेत् १२
धूपदीपादिकं दत्वा ताम्बूलं तु निवेदयेत्
सर्वातोद्य समायुक्तं नृत्तगीतान्तमाचरेत् १३
चक्रं विना तथा भूमौ शुद्धिं कृत्वा विचक्षणः
आचार्य हस्तमात्रेण स्थण्डिलोपरि पूर्ववत् १४
आदित्यस्य स्वरूपानां मम रूपं शिवप्रिये
त्र्यक्षरं सूर्येन्दुवह्निं प्रधानाक्षं तु सूर्यकम् १५
आदित्यं तु शिवं विद्याच्छिवमादित्यरूपकम्
उभयोरन्तरं नास्ति आदित्यस्य शिवस्य तु १६
प्रातः पूजादिकाले तु सौरपूजान्त्यचण्डकम्
सायं काले तु द्वारादि क्षेत्रान्तं पूजनं कुरु १७
चक्रपूजाविधिं प्रोक्तो बिम्बपूजाविधिं शृणु
पूजितस्सूर्यकाग्रे तु प्रणवार्घ्यं तु साधयेत् १८
शुक्लवस्त्रादि गन्धं च शुक्लयज्ञोपवीतकम्
सूर्यद्वारस्य पूजा च सव्यदक्षिणपार्श्वयोः १९
दण्डिनं पिङ्गलं चैव अस्त्रदेवं तु मध्यमे
ऊर्ध्वे च सौम्य याम्यं च गणेशं गुरुमेव च २०
ओं अं दण्डिने नमः । ओं हं पिङ्गलाय नमः ओं अस्त्राय नमः
ओं गणपतये नमः ओं गुरुभ्यो नमः

प्रभूतासनं च संकल्प्य आराध्यं पद्ममासनम्  २१
कर्णिकां च यजेन्मध्ये पूजयेद्ध्यानरूपकम्
सौरं कुङ्कुमसंकाशं सर्वाभरणभूषितम्  २२
द्विनेत्रं चारुवदनं रत्नमाल्यानुलेपनम्
चतुर्भुजसमोपेतं वरहस्ताम्बुजद्वयम्  २३
अभयं वरदोपेतं प्रभामण्डलमण्डितम्
उपवीत समायुक्तमुषाप्रत्युषयान्वितम्  २४
पद्मास्थितं रथारूढमरुणेन समन्वितम्
ध्यात्वाभ्यर्च्य षडङ्गेन परिवारसमन्वितम्  २५
सोमभौमबुधाश्चैव गुरुशुक्रशनैश्चराः
राहुकेतुक्रमेणैव ओंकारादिनमोऽन्तकम्  २६
सोमं सितं बुधं गौरं गुरुगोरोचनाद्युतिम्
शुक्रं शुक्लादि पूर्वादिदिक्ष्वथाग्नयादिकोणकान्  २७
रक्तं भौमं श्यामं सौरिं कृष्णं राहुं धूम्रकेतुम्
इत्येतत्परिवाराणां पूजयेत्तु क्रमेण तु  २८
ध्यानरूपमिदं प्रोक्तं मन्त्रन्यासं ततोच्यते
मूर्तिमूलं च विन्यस्य आवाहनादि मुद्रया  २९
ओं खं खषोलकाय सूर्यमूर्तये नमः । ओं ह्रां ह्रीं ह्रौं सः
शिवस्सूर्याय नमः
इत्येवं मूलमन्त्रेण स्नानान्तैरर्चयेद्बुधः
वस्त्राभरणकैर्भूष्य रक्तमाल्यानुगन्धकैः  ३०
पायसान्नं ददेत्पश्चात्ताम्बूलं च क्रमेण तु
पाद्यादीनि च दत्वाथ हृदयादीनि पूजयेत्  ३१
हृदयं च शिरश्चैव शिखा कवचमेव च
नेत्रमस्त्रं षडङ्गानि तन्मन्त्रेण क्रमेण तु  ३२
अङ्गन्यासक्रमेणैव धूपदीपादिवाद्यकम्

नृत्तगीतसमायुक्तं पूजाशेषं समापयेत् ३३
तेजश्चण्डेश्वरं पूज्य पूज्यमानस्समन्त्रकैः
ओं हां तेजश्चण्डेशाय नमः
सौरपूजाविधिः प्रोक्तः पुण्याहस्य विधिं शृणु ३४
इति चिन्त्यशास्त्रे सौरपूजाविधिर्नाम दशमः पटलः

पुण्याहविधिः

पुण्याहं चैव मूर्त्यर्णं कर्तृकर्म क्रियाशुचिम्
कर्ता च पुण्ययुक्तस्मात्पुण्याहं तु विधीयते १
रुचिरासनमाश्रित्य प्राङ्मुखो वाप्युदङ्मुखः
गोमयालेपिते भूमौ प्रोक्षयेदस्त्रवारिणा २
द्रोणमर्धं तदर्धं वा क्षिपेच्छाल्युत्तमादिकम्
शल्यार्धं तण्डुलं पात्रे पूरयेदुपसदंसयुत् ३
शाल्यर्धतण्डुलं पात्रे पूरयेदुपदंशयुक्
शालिमध्ये लिखेत्पद्मं हस्तमात्रप्रमाणतः
दर्भैः पुष्पैः परिस्तीर्य समामध्ये समर्चयेत् ४
प्रत्यङ्गानि जलं पूर्य कवचं वर्द्धनीं न्यसेत्
प्रणवेन न्यसेत्कूर्चं स्वर्णं क्षिप्त्वा यथाजलम् ५
गङ्गां च यमुनां चैव गोदावरीं सरस्वतीम्
नर्मदां सिन्धुं कावेरीं कुम्भमध्ये समर्चयेत् ६
सव्ये च वर्द्धनीपात्रे प्रणवेनाम्बु पूरयेत्
हस्ताभ्यां वेदविप्राणां दर्भान् युग्मान् क्रमाद्ददेत् ७
पश्चाद्दर्भपवित्रोक्तं बन्धयेन्नामिकेन तु
प्राणायामत्रयं कृत्वा प्रत्येकं दशमात्रकम् ८
हस्तं वामकरे योज्य न्यस्य जान्वन्तरे च तत्
यावत्कर्म तु संकल्प्य तद्वद्दर्भोत्तरे न्यसेत् ९

वर्द्धन्यायाम्बुमापो युत् शिवापस्वरतस्वरान्
गन्धाद्गन्धयुते चार्यं सुगन्धि विप्रवाचकः १०
पुष्पान् सुमनसाभ्यर्च्य सौमनस्यं च भूसुराः
अक्षतानक्षतैरर्च्य भूसुरान्प्रति वाचकान् ११
पात्राक्षतोपचारं तु अन्वाहार्यां ददेद्गुरुः
सोऽन्वाहार्यश्रुतीर्जप्त्वा भूसुरास्तदनन्तरम् १२
दक्षिणां दक्षिणे प्रोक्ष्य कूर्चेनं कुम्भत्योयकम्
भूसुराश्च जपेत्पश्चात् स्वस्तिं दक्षिणवाचकम् १३
बहुदेनमाचार्यमस्तु विप्रस्य वाचकम्
आचार्योक्तं जपेद्विप्राः पश्चादमृतभागकम् १४
कुम्भं हस्तस्पृशं जप्त्वा दर्भैः स्पृश्यन्तु भूसुराः
तस्मादमृतां गङ्गां तां कलशं पात्रतण्डुलम् १५
अयुधोद्धतये स्थित्वा समनस्समधीयताम्
समाहिते जपेद्विप्रः क्रमात्प्रसीदप्रसन्नकम् १६
देशिकोक्तं क्रमाद्विप्र अस्तु शान्त्यष्टकं जपेत्
प्रीतये न द्वयं मध्ये देवनामानि शान्त्ययोः १७
पुण्यानुभागकान्त्ये तु पुण्याहं भवतः कुरु
देशिकोक्तः प्रतिवाक्यं जपेद्विप्रास्त्रिधा पुनः १८
स्वस्त्यानुभागकान्त्ये तु स्वस्ति भावत्रयेऽपि च
मध्ये कर्मोचितं जप्त्वा पश्चाद्वृध्यानुभागकम् १९
वृद्धिं भावत्रयं चान्ते सूत्रवत् गुरुविप्र तान्
पूर्ववद्विवृतान्त्यादौ तत्रोक्तं देवनामकम् २०
सौम्ये कुम्भजलं सृज्य स्वस्थाने विन्यसेत्सुधीः
सुखासीनं समाश्रित्य जपेद्विप्रैश्च संयुतम् २१
प्रोक्षा तु भागं विप्रज्ञं पवित्रांशं क्रमाज्जपेत्
भूसुराणां ददेद्दर्भान्गृह्य कूर्चेन संयुतम् २२

प्रोक्षयेच्छान्तिमन्त्रेण त्रिधा सर्वं शुचिर्भवेत्
सर्वदेवप्रियकरं सर्वयज्ञफलप्रदम्  २३
पुण्याहस्य विधिः प्रोक्तः पञ्चगव्यं ततः शृणु  २४
इति चिन्त्यशास्त्रे पुण्याहविधि एकादश पटलः

## पञ्चगव्यविधिः

अतः परं प्रवक्ष्यामि पञ्चगव्यविधिक्रमम्
पञ्चब्रह्मं तु लोकानां रक्षार्थं च शिवाज्ञया  १
पञ्चगव्याववतारं वा सिद्धस्तस्मान्मलो मया
पञ्चभूतात्मकास्सर्वे ब्रह्मा कृत्वा तु निर्मलम्  २
पञ्चगावामयं तस्मात्पञ्चगव्यमिति स्मृतम्
तस्माच्छिवघटे स्थाप्य सर्वेषां स्नापयेच्छुचिम्  ३
पञ्चगव्येन संस्नाप्य बिम्बदेवप्रसन्नता
दैत्यादीतां विनाशं च दोषघ्नं श्रीकरं शुचिम्  ४
पुण्याहस्थापने तस्य सौम्ये वा पूरयेपि वा
शालिभिस्थण्डिलं कृत्वा नवप्रस्थं तु कन्यसम्  ५
द्विगुणं मध्यमं शालिं त्रिगुणं चोत्तमं भवेत्
तस्मिन्नवपदं लिख्य प्रत्येकं तालमात्रतः  ६
तण्डुलैश्च तिलैर्लाजैर्दर्भैः पुष्पैः परिस्तरेत्
शाली पृथिवी दैवत्यमापस्तण्डुलमेव च  ७
तिलं वै चाग्निदेवत्यं वायुर्लाजं तथौव च
दर्भमाकाशमित्युक्तं पञ्चभूताधिदैवताः  ८
मध्यकोष्ठे शिवं तत्त्वं पूर्वकोष्ठे सदाशिवम्
विद्यातत्वं तु याम्यायां पुरुषं सौम्यकोष्ठकम्  ९
वारुणे च कालतत्त्वं पञ्चकोणेषु पावकात्
पृथिव्यप्तेजवायवः प्रकृतिश्च क्रमेण तु  १०

तत्वकोष्ठसमायुक्तं कोष्ठपूजां समाचरेत्
कुम्भेषु वेष्टयेत्तन्तून्गवाक्षसदृशं यथा ११
क्षालयेत्तु हृदामन्त्री धूपं धूम्रेण पूरयेत्
अधोमुखस्थितौ पश्चान्न्यसेत्कोष्ठसुमध्यमे १२
हृदयेन तु संप्रोक्ष्य उद्धृत्य कूर्चसंयुतम्
देवान्पृष्ठत्रयांशे तु ब्रह्मविष्णुमहेश्वरान् १३
सव्ये विघ्नेश्वरं नन्दिं वामे स्कन्दं च कालकम्
पूर्वादि दिशि पात्रेषु चतुष्कोणेषु चामरान् १४
मध्यमे सुप्रतिष्ठं च पूर्वे सुशान्तपात्रकम्
तेजः पात्रं तु याम्यायां सौम्ये चामृतपात्रकम् १५
पश्चिमे रत्नपात्रं तु ईशे चाव्यक्तपात्रकम्
एवं पात्रान् समभ्यर्च्य धूपदीपसमन्वितम् १६
प्रस्थं घृतप्रमाणं च द्विप्रस्थं दधिरुच्यते
त्रिप्रस्थं चैव गोक्षीरं चतुःप्रस्थं च गोमयम् १७
षट्प्रस्थं चैव गोमूत्रं अर्धप्रस्थं कुशोदकम् १८
पश्चात्प्रस्थं तु तैलं वा द्विप्रस्थं पिष्टकामलम्
नाळिकेरफलं पुष्पं तज्जलं रजनीकणम् १९
त्रिप्रस्थं कल्पयेद्धीमान् पञ्चगव्योत्तमं भवेत्
तदर्धं मध्यमं प्रोक्तं तदर्धं कन्यसं भवेत् २०
तत्तद्द्रव्यं तु संपूर्णं पात्रं तत्तत्प्रमाणकम्
पञ्चगव्येन संपूर्णं प्रधानकुम्भमानकम् २१
कुम्भनाहरसांशे तु भञ्जयेद्वयमुन्नतम्
उन्नताद्रसभागे तु एकभागं गलोन्नतम् २२
गलोच्चकत्रयांशे तु एकांशमोष्ठमेव च
वक्त्रं पञ्चाङ्गुलं तारं लक्षणोक्तं तु संग्रहेत् २३
आप्यायां मध्यमे क्षीरं दधिक्रं दधिपूर्वके

शुक्लायाश्च घृतं याम्ये कपिलागाम्बुसौम्यके २४
गोमयं पश्चिमे पात्रे गन्धद्वारेण विन्यसेत्
तैलं तु विन्यसेच्चान्तौ पिष्टामलकं नैर्ऋते २५
नायौ च नालिकेरस्य पुष्पं च रजनीकणम्
कुशोदकैश्च सेशैश्च अग्न्यादि चोत्तरान्तकम् २६
ईशानादिभिस्सद्यान्तैर्वैदिकैर्ब्रह्ममन्त्रकैः
पञ्चगव्यान्पयादीनि दुग्धकुम्भे सुयोजयेत् २७
शिवगायत्रिमन्त्रेण योजयेत्तु कुशोदकम्
योजयेत्तु विशेषेण स्थापिते गोमयेऽपि च २८
क्रव्यांशं कुशोदकं मन्त्रं तेजश्शेषं तु सङ्ग्रहेत्
शेषं तु योजयेद्धीमान् सर्वद्रोणं तु चोत्तमम् २९
तदर्धं मध्यमं प्रोक्तं तदर्धं कन्यसं भवेत्
ब्रह्माङ्गैरभिमन्त्रैश्च मूलमन्त्रं जपेच्छतम् ३०
ऊर्जं वहन्ति मन्त्रेण कूर्चेनाच्छादनं सुधीः
दर्शयेल्लिङ्गमुद्रां च सुरभिं मुकुळं तथा ३१
अभ्यङ्गं प्रथमं लिप्य पश्चाद्गव्याभिषेचनम्
पिष्टमालकरात्र्यन्तं गणपुष्पं तदन्तरे ३२
स्नापयेत्पञ्चगव्येन देवानां च स्त्रीणां भवेत्
कपिलानां विशेषेण क्षीरं गोरक्तवर्णकम् ३३
दधिगोशुद्धवर्णं तु घृतं गोकपिलं तथा
जलं गोधूम्रवर्णं तु गोमयं कृष्णवर्णकम् ३४
अभावे सर्ववर्णे तु एकवर्णे तु सङ्ग्रहेत्
पञ्चगव्यमिदं प्रोक्तं पाञ्चामृतं ततः शृणु ३५

इति चिन्त्यशास्त्रे पञ्चगव्यविधि द्वादश पटलः

## पञ्चामृतविधि

पकारं सप्तकपरं मकारं तु विशेषणम्
मृतं तस्मिन्नृसंग्राह्य तस्मात्पञ्चामृतं स्मृतम् १
मधुक्षीरं दधिं चैव घृतं चेक्षुरसं तथा
नाळिकेरजलं चैव प्रत्येकं समसंख्यया २
सर्वेषामुत्तमादीनि द्रोणमर्धं तदर्धकम्
नित्ये नैमित्तिके काम्ये स्नापयेत्परमेश्वरम् ३
शिवाग्रे व्रीहि निक्षिप्त्वा भूतकोष्ठं समालिखेत्
ईशकोणे लिखेत्पद्मं दर्भैं पुष्पैश्च शोभितम् ४
मध्यकोष्ठे क्षमातत्त्वमर्चयेत्स्वस्वनामतः
मध्ये चामृतपात्रं तु सोमपात्रं तु पूर्वके
गङ्गा तत्त्वं तु दक्षिणयां सौम्यायां तु गणाम्बिका ५
आम्बिकां वारुणे कोष्ठे रमा भवेत्
कोष्ठे षट्कदिन्तत्वादर्चयेत्स्वस्व नामतः ६
विद्यापात्रं तु याम्यायां रक्तपात्रं तथोत्तरे ७
सुधापात्रं तु वारुणयां सुप्रीति गोचरेत्
इति पात्रान् समभ्यर्च्य प्रत्येकं कूर्चसंयुतम् ८
मधुवातारिमन्त्रेण मध्यपात्रे मधुन्यसेत्
आप्यायस्वेतिमन्त्रेण क्षीं पात्रे तु पूर्ववत्
दधिक्राविणेतिमन्त्रेण दधि याम्ये तु पात्रके
घृतं मिमिक्षमन्त्रेण सौम्यपात्रे घृतं न्यसेत्
एषामीशेतिमन्त्रेण इक्षुसारं तु पश्चिमे ९
आपो वा इति मन्त्रेण नाळिकेराम्बुमीशके
विन्यसेन्मधुमध्ये तु मधुकूपारमर्चयेत् १०
क्षीरे क्षीरसमुद्रं च दधिसिन्धुं दधिन्यसेत्
घृतरत्नाकरं आज्ये इक्षुसाराब्धिमिक्षुके ११

नाळिकेररसे चैव ध्यायेच्चामृतसागरम्
मध्यकुम्भे तु पूर्वादि इक्षुपात्रामृतात्क्रमात् १२
ईशानादीनि सद्यान्तं ब्रह्ममन्त्रैश्च योजयेत्
शिवगायत्रिमन्त्रेण नाळिकेराम्बु योजयेत् १३
त्र्यम्बकेन मन्त्रेण योजयेत्कदलीफलम्
पञ्चविंशतिसंख्येन मूलमन्त्रेन मन्त्रयेत् १४
धूपदीपं ददेत्पश्चाद्धेनुमुद्रां प्रदर्शयेत्
अत्रोक्तदेवताश्शक्त्या स्नापयेत्स्वस्वमूलतः १५
पञ्चामृतमिदं कृत्वा सर्वकामफलप्रदम्
पञ्चामृतमिदं प्रोक्तं कलशस्थापनं शृणु १६
इति चिन्त्यशास्त्रे पञ्चामृत त्रयोदश पटलः

## कलशस्थापनम्

तत्र शुद्धिं घटे स्थाने सद्यो वक्ष्ये सकृत्क्रमात्
द्रोणं वा द्रोणमर्धं वा शालिभिः स्थण्डिलं क्षिपेत् १
तन्मध्ये नालिनं लिख्य वह्नितालप्रमाणतः
तण्डुलैश्च तिलैर्लाजैर्दर्भैः पुष्पैः परिस्तरेत् २
स्वर्णं वा रजतं वापि ताम्रं वा मृण्मयं तु वा
रन्ध्रकुम्भा ग्रहेद्रन्धं कालं भिन्नं विसर्जयेत् ३
कुम्भानां चैव नाहं तु रसांशं द्वयमुन्नतम्
उन्नताद्रसभागे तु शिवांशाद्गलमुन्नतम् ४
गलोन्नतत्रिभागे तु एकांशमोष्ठमेव च
वक्त्रं पञ्चाङ्गुलं तारं लक्षणोक्तन्तु सङ्ग्रहेत् ५
त्रिसूत्रं वा द्विसूत्रं वा एकसूत्रमथापि वा
गवाक्ष्या सदृशं वेष्टय सद्योजातेन मन्त्रतः ६
क्षालनं वाममन्त्रेण धूपितं घोरमन्त्रतः

पुरुषेशानयोर्मन्त्री अधोमुखोर्ध्वमुन्नतम् ७
आपो वा इति मन्त्रेण वारिकुम्भेषु योजयेत्
पूरयेद्गन्धतोयेन कूर्चं न्यस्त्वा हृदा पुनः ८
स्वर्णरक्तं सुरक्तं च स्व स्व बीजेन विन्यसेत्
स्थापनार्थं तु देवानां यजेन्मन्त्र स्वरूपकम् ९
मकारं ममदेहं तु मन्त्राणामवसार्णकम्
वस्त्रं प्रदक्षिणं न्यस्त्वा साङ्गं न्यस्त्वापसव्यकम् १०
पञ्चाक्षरं समुद्धृत्य मौलौ योज्यान्त्यवर्णकम्
अस्तवद्योजयेत् साङ्घ्री दीर्घं नाभ्यवसानकम् ११
तृतीयार्णं न्यसेन्नेत्रे ओष्ठे न्यस्त्वा चतुर्थकम्
द्वितीयप्रथमार्णौ च श्रोत्रयोर्विन्यसेत्सुधीः १२
इति पञ्चाक्षरं न्यस्त्वा नवार्णन्यासमुच्चरेत्
प्रथमार्णं न्यसेद्बाहौ शिवदेव्या च बीजवत् १३
द्वितीयार्णं न्यसेत्पादे बिन्दुबीजसमन्वितम्
तृतीयार्णं चतुर्थार्णौ न्यसेद्धृदयपार्श्वयोः १४
पादान्तरे तु पञ्चार्णं षष्ठमं नाभिदेशके
सप्तमं हृदये न्यस्त्वा ओष्ठदेशेऽष्टमं न्यसेत् १५
नासि न्यस्त्वा तु नवमं तत्स्वरौ --वयोर्मुखम्
स्वरान्ते बिन्दुनादाढ्यं मौलौ न्यस्त्वा त्रयोऽपि च
हारार्णवक्रमेणैव शिवबीजेषु विन्यसेत्
प्रणवं प्रभसंयुक्त तद्बीजार्णावधोमुखम्
ऋकारं पद्मपीठोर्ध्वे अस्तिवञ्चुळुकासनम् १६
शिवस्य मन्त्ररूपेति सर्वेषां प्राणरूपकम्
स्व स्व बीजं न्यसेद्धीमाम्मूलं न्यस्त्वा सदाशिवम् १७
देवानां च हृदिस्थाने देवीनां हृदये न्यसेत्
स्व स्व मूले तु सर्वेषां स्व स्व पादे शिरोऽन्तकम् १८

विन्यसेत्तु चतुर्थ्यं तं नामादौ नाम मध्यमम्
न्यस्त्वा स्थानेषु तद्बीजं पूर्वयुक्ते लिखे न्यसेत् १९
तस्मान्मूर्ध्नि चतुर्थ्यर्णं स्वरूपं लिख्य येऽपि च
पूर्वं न्यस्त्वाक्षराणां तु न्यस्त्वा न्यस्वाक्षरं ततः २०
आचार्यो भावयेत्पूर्वं द्वितीये हृदयाम्बुजे
तृतीयं कुम्भमध्ये तु कुम्भाङ्गे तु चतुर्थके २१
पञ्चमं बिम्बके योज्य तद्रूपं ध्याययेत्क्रमात्
आचार्य हृदि पद्मोर्ध्वे ध्याययेत्तु विशेषतः २२
देव्योक्तं परिवारोक्तं हृदाङ्गुल्यैः स्पृशन्नयसेत्
स्व स्व बीजं समूलं च हृदादीनि षडङ्गकम् २३
स्व स्व स्थाने न्यसेद्धीमान् मन्त्ररूपं शुचिर्भवेत्
मन्त्रस्नानमिदं प्रोक्तं प्रणवाम्बर संयुतम् २४
पुष्पं दशाक्षरैरर्च्य कामबीजेन गन्धयुक्
पञ्चार्णं च नवार्णं दशार्णमष्टसंख्यया २५
जपेन्मूलं शताष्टौ च यजनं मानसं भवेत्
हृदये च यजेद्देवान् कुम्भाम्भोरूह मध्यमे २६
मन्त्रार्जिह्वपदाद्धृत्वा हस्तयोः पद्ममासने
गन्धपुष्पैश्च संस्थाप्य कुम्भां भोरूहमध्यमे २७
देवीनां स्थापनं देवी स्वर्णाख्योत्पलमध्यमे
देव्यै च परिवाराणां स्व स्व कुम्भेषु विन्यसेत् २८
कुम्भाग्रेष्वाम्रपर्णं च नालिकेरं तु विन्यसेत्
नालिकेराम्रपर्णं च शिरःशिखासमं भवेत् २९
पञ्चान्मन्त्रस्वरूपं तु कुम्भे न्यस्त्वा यथाक्रमम्
देहे तु प्राणवत्कुम्भमध्ये वा मन्त्ररूपकम् ३०
मन्त्ररूपं तु तत्सर्वं वस्तुरूपं तथा भवेत्
सर्वेषां च षडध्वात्मा तस्य प्राणः परश्शिवः ३१

अध्वन्यासोत्तमं विद्यादग्निकार्योक्तमुत्तमम्
कुम्भे सदाशिवं स्थाप्य वर्धन्यां च मनोन्मनीम्  ३२
आवृतेषु घटेष्वेवमविद्येश्वरान्क्रमात्
मन्त्ररूपं च बीजं च मूलं च ध्यानमेव च  ३३
एवं सदाशिवं न्यस्त्वा देव्या च परिचारकैः
नैवेद्यधूपदीपादीन्युपचाराणि कारयत्  ३४
अर्चयित्वा यथान्यायं जपेन्मूलं शताष्टकम्
दर्शयेल्लिङ्गमुद्रां च सुरभिं पद्ममुद्रिकाम्  ३५
कलशस्थापनं प्रोक्तं द्वारपूजां तत शृणु
इति चिन्त्यागमे कलशस्थापन चतुर्दश पटलः

## द्वारपूजै

पञ्चशुद्धिक्रमं पूर्वं नवधा कर्ममेव च
तदन्ते स्थानशुध्यादि घटस्थाप्यावसानकम्  १
अष्टकर्म ततो विद्याद् द्वारपूजादि सप्तकम्
प्रथमं द्वारपूजा च द्वितीयं लिङ्गशोधनम्  २
स्नानकर्म तृतीयं तु घटस्नानं चतुर्थकम्
पश्चात्पञ्चावृतिं न्यस्य नैवेद्यं चैव षष्ठकम्  ३
सप्तमं धूपदीपादि नवाष्ट सप्तमं भवेत्
शिवद्वारार्चनार्थं तु महाघण्टां प्रताडयेत्  ४
त्रिधा चास्त्रेण संताड्य दैत्यादीनां विनाशनम्
शङ्खध्वनि समायुक्तं वाद्यघोषसमन्वितम्  ५
द्वारे विघ्नेश्वरं पूज्य नालिकेरफलादिभिः  ५
हे गणेश गुहस्याग्र शिवसान्निध्यकारण
शिवपूजा प्रवृत्तोयं निर्विघ्नस्त्वं प्रसीद मे  ६
इति विज्ञाप्य पश्चात्तु कवाटमुद्धाटयेद्गुरुः

पूजान्ते रुद्रमभ्यर्च्य कवाटेन तु बन्धयेत् ७
द्वारस्योर्ध्वेऽप्यधश्चैव पतङ्गं च भुवङ्गकम्
पतङ्गोर्ध्वे गरोशं तु तस्य वामे सरस्वतीम् ८
मध्यमे तु महालक्ष्मीं पूजयेत्तु क्रमेण तु
द्वारस्य दक्षिणे नन्दीं जङ्गां च तस्य दक्षिणे ९
वामपार्श्वे महाकालं यमुनान्तस्य वामके
रक्तश्यामद्विवर्णाभौ दराडहस्तौ महाबलौ १०
सुस्थितौ चैकपादौ च दराडार्धमाश्रितान्यकौ
उग्रदंष्ट्र समायुक्तौ सूचिविस्मयहस्तकौ ११
सर्वाभरणसंयुक्तौ नागयज्ञोपवीतकौ
नन्दिकालाविति ख्यातौ महाक्रूरोग्रनेत्रकौ १२
गङ्गां च यमुनां चैव शुक्लश्यामसुरानिभौ
द्विभुजौ च द्विनेत्रे च करराडमकुटान्विते १३
सर्वाभरणसंयुक्ते हृदये चाञ्जलीयुते
द्वारमध्येऽस्त्रराजं तु पूजयेत्तु विशेषतः १४
विमलं च सुबाहुं च सव्यामेकं च वाटयोः
श्री देवीं च यजेन्मध्ये स्कन्धं च पट्टिकोपरि १५
वृषभञ्चार्चयेदग्रे पुष्पैर्धूपैर्यथा क्रमम्
प्रवेशनेऽस्त्रराज्यं च सव्यपार्श्वेन कल्पितम् १६
उद्धृत्य सव्यपादेन प्रविशेदर्धमराटपम्
मराटपान्तः प्रदेशे तु पूजयेद्वास्तुदैवतम् १७
स्नानकाले च नैवेद्ये उत्सवे धूपकालके
प्रच्छन्नपटं निस्सार्य स्नाप्ये दीपादिना यजेत् १८
शिवमन्त्रं समुच्चार्य गर्भगेहं प्रवेशयेत्
द्वारपूजामिदं प्रोक्तं लिङ्गस्य शोधनं शृणु १९
ऋग्वेदध्यानमाश्रित्य यथावद्वेदपारगान्

आधारमासनं प्रोक्तं आधेयः परमश्शिवः २०
नादं लिङ्गस्वरूपं तु बिन्दुः पीठाकृतिर्भवेत्
आधारमासनं तस्मादाधारश्शक्तिरेव च २१
तदूर्ध्वे चासनं प्रोक्तं सिह्मासनं ततोपरि
योगासनं तदूर्ध्वे तु पद्मासनं तदूर्ध्वके २२
तदूर्ध्वे विमलं प्रोक्तं तदूर्ध्वे तु विशेषतः
पिण्डिका च मनोन्मन्यां लिङ्गं सदाशिवं भवेत् २३
अर्ध्यं शिरसि विन्यस्य मन्त्रं सदाशिवस्य तु
प्रणवाचमनं हस्ते पाद्यं पादे हृदा चरेत् २४
यथावद्रूपमाश्रित्य घण्टारवसमन्वितम्
कनिष्ठानामिकमध्ये श्वेतपुष्पं तु संग्रहेत् २५
पूर्वसन्ध्यार्चितं पुष्पमङ्गुष्ठतर्जनी त्यजेत्
श्वेतपुष्पं तदन्ते तु ईशानेन प्रदापयेत् २६
पूजापर्यूषितां द्रव्याञ्चण्डेशाय निवेदयेत्
गन्धतैलेन संस्नाप्य लिङ्गपीठमनुक्रमात् २७
शोधयेद्धोरमन्त्रेण क्षालयेच्चास्त्रमन्त्रतः
पाशुपतास्त्रमन्त्रेण क्षालयेत्पिण्डिकां ततः २८
देवस्य वामपार्श्वे तु विन्यसेत्पिण्डिकोपरि
पीठानां शोधनं कृत्वा विमलानन्तरात्मकम् २९
आकाशतत्त्वमाद्यं तु पृथिवीतत्त्वावसानकम्
हृदयोक्तं तु प्रक्षाल्य आसनस्य क्रमेण तु ३०
ईशानादि क्रमेणैव वक्त्राणां वाम पार्श्वके
स्वगृहे भित्तिपार्श्वे तु न्यसेत्पञ्चासनं क्रमात् ३१
स्त्रीलिङ्गं शोधने काले अर्चकाले नपुंसके
तदूर्ध्वे स्नापने काले पुल्लिङ्गमासनं भवेत् ३२
पार्थिवाण्डं महासारं शक्तिं वा स्कन्दमेव वा

अङ्कुरं नालमुकुलं पुष्पं तत्कर्णिकोपरि ३३
स्थित्वा सदाशिवं देवमीशपात्रे मनोन्मनी
स्थापयेत्तु विशेषेण स्व स्व मूलेन बुद्धिमान् ३४
लिङ्गस्य शोधनं प्रोक्तं ततः स्नानक्रमं शृणु
अनन्तमासनं कल्प्य फणिकन्यायरूपवत् ३५
तद्बलाद्वृत्तमाश्रित्य तदावृत्तमनन्तकम्
फणामकुटसाहस्त्रं सहस्राद्ब्सप्रभम् ३६
अनन्तवासुकिश्चैव तद्बकश्चाम्बुजस्तथा च
महाम्बुजश्शङ्खपालकार्कोटगुलिकास्तथा ३७
अनन्तासनमभ्यर्च्य इन्द्रादीशावसानकम्
तत्रोर्ध्वे तु सुखासीनं ध्यायेत्तु सदाशिवम् ३८
वामे मनोन्मनीं ध्यात्वा धारयेद्रक्तवस्त्रकौ
देशिकस्य तु तद्दीर्घं बाह्वोच्चं वा मनोन्मनीम् ३९
आवृतेषु च देवानां कण्ठोत्सेधं समर्चरेत्
इत्येवमुत्तमं ध्यानं मध्यमं चाकृतिं शृणु ४०
ध्यायेल्लिङ्गाकृतिं दीर्घमासनं पिण्डकाकृतिम्
देव्या च परिवाराणां पूर्वं श्रुत्वा क्रमेण तु ४१
ब्रह्मसूत्रोक्तवद्ध्यात्वा दीर्घकं न्यासमुच्यते
आचार्यस्य मनोपूर्णं मनश्चोत्सेधवाकृतिम् ४२
ध्याययेत्तु भवोत्सेधमुत्तमोत्तममिष्यते
लिङ्गमूले तु विद्येशा दलाग्रेषु तु गणेश्वरान् ४३
पीठकण्ठे तु लोकेशा आयुधास्तद्बहिर्भवेत्
कलशन्य मुखे पृष्ठे कराभ्यां संग्रहेत्सुधीः ४४
मूर्ध्नि वेदाङ्गुलोत्सेधगोशृङ्गाग्रे प्रमाणके
शुद्धतोयैरभिषिच्याथ द्रव्यं प्रति पुनः पुनः ४५
पञ्चब्रह्म षडङ्गैश्च प्रातः काले तु देशिकः

पञ्चाक्षरं समुच्चार्य मध्याह्ने चाभिषेचयेत्  ४६
व्योमव्यापिं समुच्चार्य सायंकाले समर्चयेत्
पञ्चब्रह्ममन्त्रेण स्नापयेत्पञ्चगव्यकम्  ४७
पिष्टामलकचूर्णाद्या संलिप्य स्नानमाचरेत्
पञ्चामृतेन संस्नाप्य मन्त्रपञ्चाक्षरेण तु  ४८
घृतं मिमिक्ष मन्त्रेण घृतस्नानं तदुत्तरे
क्षीरं दधि मधुं चैव कुशाम्बुनाळिकेरकम्  ४९
ईशानादि क्रमेणैव स्नापयेद्ब्रह्ममन्त्रकैः
गन्धभूमं तु संस्नाप्य हृदयेन तु मन्त्रतः  ५०
द्रव्यं प्रति विशेषेण मन्त्रपुष्पं तु दापयेत्
प्रणवं बिन्दुनादं च हौकारं तदनन्तरम्  ५१
श्रीकण्ठाय नमेत्युक्तं मूलमन्त्रमिति स्मृतम्
मम भेदात्मना सर्वे मन्त्रपुष्पार्चनं त्विदम्  ५२
स्नाने च शयने भुक्तौ आयुधात्पञ्चमावृते
आयुधोक्तं न्यसेद्धीमानन्यकालेषु योजयेत्  ५३
स्नानकर्ममिदं प्रोक्तं शृणु कुम्भाभिषेचनम्
अनन्तं पूर्ववत्स्थाप्य विन्यसेत्पद्ममासनम्  ५४
वर्तुलं श्वेतवर्णं च मनोन्मन्यास्तु रूपकम्
उभयोरन्तरं नास्ति मनोन्मनीं समर्चयेत्  ५५
वामादिशक्तयश्चाष्टौ पूर्वादि क्रमशोऽर्चयेत्
तन्मध्ये कल्पयेद्धीमान् कर्णिकां कनकप्रभाम्
तदूर्ध्वे तु सुखासीनं ध्याययेत्तु सदाशिवम्  ५६
वामे मनोन्मनीं कल्प्य पीतवस्त्रमधोक्तवत्
कल्पयेदावृतान्देवान् स्वस्वस्थानेषु पूर्ववत्  ५७
कुम्भादावाहनार्थं तु न्यासं कृत्वा विचक्षणः
षडूर्ध्वे तु विशेषेण अष्टत्रिंशत्कला तथा  ५८

ऊरुजानुद्वयोश्चैव जङ्घाद्वयोश्च पृष्ठके
स्फिचोश्च पार्श्वयोश्चैव हस्तयोरुभयोस्तथा
पादयोरुभयोश्चैव हस्तयोरुभयोस्तथा
स्तनयोरुभयोश्चैव सद्योजातकला न्यसेत्
अष्टत्रिंशत्कला ह्येवं सर्वेषां न्यासमुत्तमम्
वर्णाध्वा चैव मन्त्राध्वा प्रातःकाले तु विन्यसेत्
अन्यसन्ध्यासु सर्वासु मन्त्राध्वानं न्यसेत्सुधीः ५९
स्थापने मासत्रृत्तेषु षडध्वन्यासमाचरेत्
व्यसेन्मूलत्रिभागेषु आत्मविद्या शिवेत्यपि ६०
शिवमन्त्रस्वरूपोक्तन्यासं कृत्वा यथाक्रमम्
आचार्यसव्यहस्ते च मध्याङ्गुलित्रिभिस्तथा ६१
मस्तकस्पर्शने जप्त्वा दशसंख्या दशार्णकम्
मन्त्रपुष्पं समभ्यर्च्य मन्त्रैः पुष्पैः प्रदापयेत्
नवबीजेन चाभ्यर्च्य धूपं दीपं समाचरेत् ६२
देशिकस्य कराभ्यां तु सव्याङ्गुष्ठात्समारभेत्
वामाङ्गुष्ठावसानं तु दशबीजं क्रमान्यसेत् ६३
कुम्भादेव समावाह्य बिम्बे संप्रोक्षणं कुरु
आहूय श्रेष्ठशुद्ध्यर्थं कुम्भाङ्गैः स्नानमाचरेत् ६४
घनस्नानं विना चेत्तु स्नापयेत्प्रणवाम्बुना
अथवा शङ्खतोयेन दशार्णैः स्नानमाचरेत् ६५
मन्त्रपुष्पं समभ्यर्च्य मन्त्रान्नं तु निवेदयेत्
लिङ्गं च पिण्डिकां चैव मन्त्रेणालम्बनं कुरु ६६
पूजाभागस्य तु वेदांशं वस्त्रेणैकेन धारयेत्
कुङ्कुमागरुकर्पूरं गन्धैः पुष्पैश्च लेपयेत् ६७
गोलका पटसूत्रं तु स्वर्णरत्नैर्विशेषतः
तस्य द्विपार्श्वयोर्भूष्य गङ्गां चार्धनिशापतिम् ६८

स्वर्णरत्नादिहारैश्च दामैश्च कुण्डलैस्तथा
भूषयेद्भूषणान्सर्वान्यज्ञोपवीतसंयुतम्  ६९
नास्ति चेद्ध्याययेद्धीमान् सर्वाभरणसंयुतम्
गन्धपुष्पं विना कृत्वा यजनं निष्फलं भवेत्  ७०
तत्तत्कालैश्च पुष्पैश्च दामैश्च मूलमन्त्रतः
अम्बरं वाममन्त्रेण चन्दनं हृदयेन च  ७१
सर्वाभरणभूष्यश्च ईशानेन तु मन्त्रतः
घटस्नानमिदं प्रोक्तं चन्दनानां क्रमं शृणु  ७२
पूर्ववश्च न्यसेत्पद्मं कल्पयेद्विमलासनम्
स्वर्णकाशं च षट्कोणं शिबिदुर्गाकृतिर्भवेत्  ७३
सूर्यमण्डलकं पूर्वं ब्रह्माणं मण्डलाधिपम्
सोममण्डलकं पश्चात्तन्मण्डलाधिपं हरिम्  ७४
अग्निर्मण्डलं चाग्नेय्यां रुद्रमण्डलमाधिपम्
शक्तिमण्डलके शक्तिं मण्डले शिवमाधिपम्  ७५
पूर्वाद्यष्टदिशास्वेवं मण्डलं मण्डलाधिपम्
विमलं चार्चयेद्धीमान्तारोच्चे पिण्डिका कृतेः  ७६
तर्धदूर्ध्वे मूलमन्त्रेण विन्यसेद्देवशक्तयः
स्थित्वाग्नौ वा नृत्तौ वापि यावदेवार्चनं कुरु  ७७
सकळं निष्कलोपेतं ध्यानरूपं सदाशिवम्
शुद्धस्फटिकसंकाशं जटामकुटमण्डितम्  ७८
द्विपादं पञ्चवक्त्रं च प्रतिवक्त्रं त्रिलोचनम्
सर्वाभरणसंयुक्तं दशबाहुसमन्वितम्  ७९
शिवास्त्रं परशुं खड्गं वज्राभयं च दक्षिणे
नागं पाशाङ्कुशं वह्निं घण्ठां चैवापसव्यके  ८०
दिव्याम्बरधरं दिव्यं सर्वाभरणभूषितम्
गन्धचन्दनलिप्ताङ्गं पुष्पमाला विभूषितम्  ८१

पद्मोत्पलकरां श्यामां वामस्थां वरदोत्पलाम्
दिव्याम्बरधरं देवीं सर्वाभरणभूषिताम् ८२
मूलमन्त्रेण चाभ्यर्च्य भवादि पञ्चविंशति
देव्यर्चने तु ध्यानानि स्त्री लिङ्गान्तानि योजयेत् ८३
परा रहस्य मतिगुह्य ------- शिवार्चना
पुष्पेषु गन्धवज्ञेयस्तिलेषु तैलवत्तथा ८४
देहेषु प्राणवत्प्राणः शिवस्सदाशिवस्य तु
शिवस्सदाशिवोर्ध्वे तु ऊर्ध्ववक्त्रोक्तवच्चरेत् ८५
अर्चकाले भवेद्वस्तु अन्येषु च हृदि वसेत्
तस्मात्सदाशिवं वस्तु सव्या प्रयोजनान्नयसेत् ८६
व्योमव्यापि निराधारी निर्गुणश्च निरञ्जनः
सर्वेषां सृष्टितत्त्वात्मा सर्वतत्वालयः प्रभुः ८७
परात्परं परंज्योतिर्वाङ्गनोतीतगोचरम्
अथवान्यप्रकारेण अर्चनान्मानसेन च ८८
कृष्णौ नेत्रौ शिखा धूम्रा रक्तपादं कराष्टकौ
धरेत्पीताम्बरज्योतिस्सर्वाङ्गं श्वेतवर्णकम् ८९
सर्वज्योतिः प्रभारूपं स्पर्शने शून्यविग्रहम्
मन्त्ररूपक्रमेणैव ध्यायेज्ज्योतिर्मयं शिवम् ९०
पञ्चार्णैश्च नवार्णैश्च दशार्णैश्चार्चयेच्छिवम्
पुष्पेषु गन्धवच्चार्च्य शिवशक्तिं शिवात्मना ९१
परिवारशिवस्यार्चा ब्रह्माङ्गैश्च यथा भवेत्
ईशे पूर्वे यमे सौम्ये पश्चिमे तु क्रमेण तु ९२
ईशानस्याम्बिका शक्ति शुक्लशुक्लं तयोर्निभम्
पुरुषस्य गणाम्बा च रक्तं कृष्णं च सन्निभम् ९३
अघोरस्य च गङ्गा च रक्तं श्यामनिभं क्रमात्
वामदेवस्य गौरी च तयोस्स्वर्णनिभं क्रमात् ९४

सद्योजातमुमादेवी श्वेतकायौ तथैव च
श्वेतवर्णधरास्सर्वे त्रिणेत्राश्च चतुर्भुजाः ९५
अभयं वरदोपेताष्टङ्कशूलधरान्विताः
शक्तीनामुत्पलं सव्ये वामे लम्बकरान्विताः ९६
गर्भविद्यगणेशस्य लोकपालस्त्रिपञ्चकम्
हृदयाद्यस्त्रपर्यन्तं पूजयेत्तु विशेषतः ९७
गर्भावरणभूते वा दलमूले तु विन्यसेत्
हृदयाद्यस्त्रपर्यन्तं पूजयेत्तु विशेषतः ९८
विद्येशानां दलाग्रेषु पीठकण्ठे गणेश्वरान्
पीठबाह्ये महेन्द्रा दीनस्त्रेणैव शिलोपरि ९९
ईशे पूर्वे यमे सौम्ये पश्चिमेशानकादयः
पञ्चब्रह्ममिदं प्रोक्तं षडङ्गान् क्रमशोऽर्चयेत् १००
हृदयं वामिनी शक्तिः श्वेताभौ पावके दिशि
शिखा च चक्रिणी शक्तिः काशश्यामौ च राक्षसे १०१
कवचं शक्ति पाशङ्गी धूम्राभौ वायुगोचरे
शिरश्च नलिनी शक्तिः पीता भावीशगोचरे
अस्त्रं च गम्भिणी शक्तिः कृष्णाभौ दक्षिणे यजेत्
नेत्रं तु खड्गिनीशक्ति श्यामालौ वामगोचरे १०२
हृदयादय एते हि त्रिणेत्रश्च चतुर्भुजाः
अभयं वरदोपेताः पाशशूलधरान्विताः १०३
अस्त्रनेत्रे च रौद्रे च शेषास्सौम्या इति स्मृताः
एवं सदाशिवात्मानः शिवस्य परिवारकाः १०४
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु
अनन्तादि शिखण्ड्यान्तान् पिण्डकाया दलेषु च १०५
रक्तवर्णमनन्तेशं भूमिं च वायुगोचरे
नीलवर्णं तथा सूक्ष्मं स्वाहाञ्चैवाग्निगोचरे १०६

शिवोत्तमं नीलवर्णं ह्यान्त्यया याम्यदेशके
पीताभमेकनेत्रं च प्रभादेव्या च नैर्ॠते १०७
कृष्णाभमेकरुद्रं च पुष्टिं च वारुणे यजेत्
कुङ्कुमाभं त्रिमूर्तिं च श्रुतिं च वायुगोचरे १०८
सौम्ये च पद्मरागाभं श्रीकण्ठं कीर्तिमेव च
शिखण्डिनं चाञ्जनाभं मेधा वै चेशगोचरे १०९
एवं विद्येश्वराः प्रोक्तास्त्रिणेत्राश्च चतुर्भुजाः
हृदयाञ्जलिहस्ताश्च शूलपाशधरान्विताः ११०
एवं सदाशिवस्यास्य परिवाराः प्रकीर्तिताः
द्वितीयावरणं प्रोक्तं तृतीयावरणं शृणु १११
स्वनामभिः पीठकण्ठे अर्चयेत्तु गणेश्वरान्
उत्तरे तु यजेद्गौरीं वृषभद्रां च पूर्वके ११२
गणेशं कुन्दली याम्ये पाशे स्कन्दं पुरेजनीम्
नन्दिं भृङ्गिणी चाग्नौ कालञ्च दरिनृत्तके ११३
भृङ्गिण्यादीनि वायौ च चण्डेशं रूपिणीशके
तृतीयावरणं प्रोक्तं चतुर्थावरणं शृणु ११४
कण्ठपादेषु लोकेशान् कल्पयेत्स्वस्वनामकान्
इन्द्रं चैव तथेन्द्राणीं स्वाहाञ्चाग्निं तथैव च ११५
यमं च कालकण्ठीं च नैर्ॠतं च नृतां तथा
वरुणं भोगिनीशक्तिं वायुं चाघोरशक्तिकम् ११६
कुबेरं गाम्भिनी शक्तिमीशानं चैव हर्षणीम्
विष्णुं च लक्ष्मीं चैव भूमिं च नैर्ॠते तथा ११७
ईशे प्रजापतिं चैव सरस्वतीं च पूजयेत्
चतुर्थावरणं प्रोक्तं पञ्चमावरणं शृणु ११८
पिण्डिका मूलशैलाग्रे अर्चयेत्तु दशायुधान्
वज्रं शक्तिं च दण्डं च खड्गं पाशं तथाङ्कुशम् ११९

गता त्रिशूलं पद्मं च चक्रं चैव दशायुधान्
लोकपालायुधान्येवं क्रमेणैवार्चयेत्सुधीः १२०
वज्राद्यायुधाष्टानां शक्तिनामष्टबुद्धिमान्
प्रसन्नात्मा च गोपाख्या गुणात्मा कोमलात्मिका १२१
विषात्मा विकृतात्मानां मङ्गलात्मा महात्मिका
इत्येवमष्टशक्तीनां स्व स्व नाम्ना समर्चयेत् १२२
याम्यदेशे समभ्यर्च्य सप्तमातृगणैर्युतम्
पञ्चमावरणस्यान्ते मूलेनैवार्चयेच्छिवम् १२३
पाद्यमाचमनं चार्घ्यं धूपं दीपं ददेत्तथा
अर्चनानां क्रमं प्रोक्तं नैवेद्यं तु ततः शृणु १२४

इति चिन्त्यशास्त्रे पञ्चावरणार्चनविधि पञ्चादश पटलः

## नैवेध्यविधिः

पूर्ववद्विमलं स्थाप्य विन्यसेद्योगमासनम्
अष्टाश्रं श्यामलाकारं भूतवर्गाकृतिर्भवेत् १
अव्यक्तं नियतिं कालं कलां पूर्वदलेषु च
कृतादि युगकाः प्रोक्तं मध्यपादं तु केशवः २
योगासनेति तन्मध्ये स्थापयेत्तु सदाशिवम्
सर्वाभरणसंयुक्तं ध्यायेत्पूर्वोक्तवत्सुधीः ३
सुखासनं समाश्रित्य मनोन्मन्या च पूर्ववत्
स्नाने भुक्तौ च भोगाङ्गे न चेदायुधधारणम् ४
पीठबाह्ये नुयसेद्धीमानन्यकाले तु धारयेत्
अन्नपूर्णेश्वरीं प्राप्य नैवेद्यार्थं शिवस्य च ५
देवी स्थित्वा शिवं भुक्त्वा ध्याययेद्देशिकोत्तमः
अथवान्यप्रकारेण देशिको ध्याययेत्स्त्रियम् ६
शिवाग्रे तु विशेषेण प्रोक्षयेदस्त्रवारिणा

स्थलिके पूरयेच्छान्नं पात्रमाधारके न्यसेत् ७
पूरयेत्तच्चतुर्थांशं फलैर्वर्गोपदंशकैः
क्षीरं दधि घृतं चैव गुलखण्डेक्षु खण्डकैः ८
कदली पनसाम्रैश्च पूरयेच्चान्नकोपरि
पाद्यमाचमनं चार्घ्यं दापयेद्धृदयेन च ९
घण्टारवसमायुक्तं शिवे धूपं समाचरेत्
अन्नसूक्तादिमन्त्रेण जप्त्वा तु वेदपारगाः १०
भूर्भुवस्स्वाम्बुना प्रोक्ष्य सव्येन परिषेचयेत्
भूतरूपाय शर्वाय प्राणरूपेति त स्मृता ११
प्रणवादि नमोऽन्तानि अन्नेषु चार्चयेत्सुधीः
अस्त्रान्ताच्च दिग्बन्धमवकुण्ठनमाचरेत् १२
सुरभिं चैव मुद्रां च दर्शयेत्तु हृदा तथा
पानीयाचमनं दद्याद्धृदा स्वाहान्त संयुतम् १३
देशिकस्य च हस्ताभ्यामन्नं पुष्पेण संस्पृशेत्
अन्नं प्राणान्नभागादौ विप्रोक्तं तु जपेत्सुधीः १४
आत्मविद्या शिवैस्तत्त्वैर्मलेनैव शिवस्य च
क्रमाद्धृदयसंयुक्तं स्वाहान्तैश्च निवेदयेत् १५
पुनराचमनं दद्यात्स्वाहान्तेन हृदा तथा
यद्वक्त्रं द्वारसम्बन्धं तद्वक्त्रे च निवेदयेत्
पञ्चवक्त्रोरगं ग्राह्यं भुक्तमेकेन पूरयेत् १६
प्रधानास्यं गृहीत्वा च पुरुषेण निवेदयेत्
अथवान्यप्रकारेण ईशानादि क्रमेण तु १७
शुद्धान्नं च गुलान्नं च कृसरान्नं तथैव च
मुद्गान्नं पायसान्नं च पञ्चवक्त्रेषु दापयेत् १८
स्वस्वमूलंहृदोक्तं च स्वाहान्तेन निवेदयेत्
भुक्तकाले हृदा वस्तु वसे श्रेष्ठं हृदा इति १९

अपूपान् पृथुकालाजान् गुलखण्डेक्षुखण्डकान्
पुनसाम्रकदल्यादि फलानि च हृदा ददेत्  २०
नालिकेररसं देयं सर्वात्महृदयेन च
पुनराचमनं दत्वा वस्त्रेणालम्बनं चरेत्  २१
नैवेद्यान्नादिकं सर्वं चण्डेशाय निवेदयेत्
नैवेद्यमिति विख्यातं धूपदीपादित शृणु
इति चिन्त्यशास्त्रे नैवेद्यविधिर्नाम षोडशः पटलः

शिवार्चनविधिः

योगं पूर्वोक्तवत्कल्प्य स्थापयेत् सिंहमासनम्
धूम्रवर्णं चतुष्कोणं सिह्मदेवाकृतिर्भवेत्  १
धर्मं ज्ञानं च वैराग्यमैश्वर्यं च चतुष्टयम्
आग्नेय्यादिषु कोणेषु क्रमेण परितोऽर्चयेत्  २
अधर्माज्ञानावैराग्यानैश्वर्यं स्याद्दिशासु च
सिह्मासने तु तन्मध्ये स्थापयेत्परमेश्वरम्  ३
सुखासनं समाश्रित्य वामदेव्या च संयुतम्
सर्वाभरणसंयुक्तं ध्यायेत्पूर्वोक्तवत्सुधीः  ४
विद्येश्वरादिसर्वेषां स्वस्वस्थानेषु पूर्ववत्
होमं बलिप्रदानं च कृत्वा चैवावसानके  ५
फलैर्लाजैश्च पूपैश्च ताम्बूलैरुपदंशकैः
दापयेद्धृदयेनैव पुनराचमनं कुरु  ६
पाद्यमाचमनं चार्घ्यदानं पूर्वोक्तवच्चरेत्
न्यासं कृत्वा विशेषेण मन्त्रमेकादशं सुधीः  ७
सव्यहस्ते धूपपात्रं वामे घण्टारवं चरेत्
धूपं नासाग्रयोः कुम्भं भ्रामन्त्रीणि चरेद्धृदा  ८
दीपमारोप्य काले तु निरीक्ष्य प्रोक्षणं तथा

ताडनाभ्युक्षणं चैव अवकुण्ठनमाचरेत् ९
दीपं नेत्रेषु तत्काले शूलमुद्रां च बुद्धिमान्
लिङ्गमेवान्तरं चैव द्वादशाङ्गुलमानतः १०
अथवा हस्तमानं वा दीपमारात्रिकं ददेत्
दीपमन्त्रेण नेत्रेषु त्रित्रिकुम्भं च भ्रामकम् ११
ईशानादिक्रमं तद्वद्वक्त्रं प्रति समाचरेत्
पश्चान्मनोन्मनीं दाप्य भोगशक्त्यास्तदन्तरम् १२
शिवप्रसादं तत्काले सव्यं तेषां यथा भवेत्
आरात्रिकं चरेद्धीमान् शिरोहृदयपादयोः १३
हस्ताभ्यामुद्धृते पश्चान्मूर्धात्पादावसानकम्
भ्रमणेन हृदा चाग्रे गत्वा गत्वा त्रिधा चरेत् १४
तत्काले तु विशेषेण नृत्तं वा रुद्रकन्यका
तनृत्तं रुद्रकन्या सा तदेतद्दीपपात्रकम् १५
मूलेन दापयेद्भस्म दर्पणं दर्शयेद्धृदा
दर्शयेल्लिङ्गमुद्रादि छत्रं च चामरं हृदा १६
पाद्यं तु पञ्चमात्रं च त्रिमात्राचमनीयकम्
द्वादशं मध्यमात्रं च धूपमात्रं च सप्तमम् १७
दीपं तु दशमात्रं च नीराञ्जनं तु षोडश
भस्मदापनकं सप्त दर्पणं दर्शमात्रकम् १८
छत्रं च पञ्चमात्रं च चामरं विंशतिस्तथा
ऋग्वेदाध्ययनं पश्चात् पञ्चाङ्गं तदनन्तरम् १९
भक्तानां गानकं पश्चात् नृत्तगीतं ततोपरि
भक्तानां दापयेद्भस्म प्रच्छन्नपटकं क्षिपेत् २०
ततोऽनन्तासनं स्थाप्य तदूर्ध्वे सिह्मासनम्
विमलं तु तदूर्ध्वे तु मनोन्मन्यास्तदूर्ध्वके २१
शयनं कल्पयेद्धीमान् लिङ्गानां च विशेषतः

राक्षसं मानषं लिङ्गं शयनं तद्द्वयं भवेत्  २२
स्वयम्भुवालयं चैव गाणवादिस्थितिर्भवेत्
अथवान्यप्रकारेण शयनं समखण्डकम्  २३
वर्धमानं स्थितं चैव आसीनं तु शिवाधिकम्
यानं त्रैराशिकं लिङ्गं कलयेत्तु विचक्षणः  २४
सुखासीनं स्थितं नृत्तं शयनं च चतुर्विधम्
पूजाकाले सुखासीनं अन्यकाले तु पूर्ववत्  २५
भवादि पञ्चविंशच्च शिवसोहोद्विशेषतः
तेषु विंशति संयोज्य शिवव्योमार्कमण्डले  २६
पञ्चसोहं तु लिङ्गेभ्य ---सततं वसेत्
शिवार्चनमिदं प्रोक्तं सायरक्षाविधिं शृणु  २७
इति चिन्त्यशास्त्रे शिवार्चनविधिर्नाम सप्तदश पटलः

## नित्यार्चनविधिः

शिवार्चनं विधिं वक्ष्ये सर्वसिद्धिकरं परम्
पञ्चशुद्धिक्रमेणैव पूजयेच्छिवमव्ययम्  १
शौचमाचमनं स्नानं पादप्रक्षालनं तथा
पूजास्थाने स्थितः कुर्यादासनोपरि देशिकः  २
मण्डलं कारयेत्तत्र -----
-------------वृत्तं तन्मध्ये तु त्रिमण्डलम्
चतुरश्रमर्धचन्द्रं त्रिकोणं च षडश्रकम्  ३
सुवृत्तं च पृथिव्यादिमण्डलाकृतयः क्रमात्
पृथिव्यादीनि बीजानि शृणु प्रज्ञाहिताय वै  ४
मण्डले चतुरश्रे तु लकारं वज्रलाञ्चितम्
ध्यायेत्तद्धेमवर्णाभं -----
अर्धचन्द्रनिभं पद्मलाञ्चनेन तु लाञ्छितम्  ५

वकारं पूजितं वारि योनिमन्त्रं सदा प्रतम्
त्रिकोणं रक्तवर्णाभं कालानलशतोपमम् ६
स्वस्तिकेन तु संछन्नं रकारेणोज्ज्वलं शुभम्
षडश्र चैव रक्ताभं यकारेणैव लक्षितम् ७
आकाशमण्डलयुतं वृत्तं लाञ्छनबिन्दुकम्
लंकूळीशं महाबीजं हकारेणोज्ज्वलं हि नत् ८
ध्यायेत्सदाशिवाभासं ममले देवताः पृथक्
चन्द्रवारुणवह्नीश सदाशिवमयं पृथक् ९
ब्रह्मविष्णुमण्डलेशानं पृथङ्मूर्तिशिवस्तथा
सदाशिवगतो बिन्दुनादं ततोपरिक्रमात् १०
नादोपरि स्थिता शक्तिः शक्तिमध्ये शिवःपरः
शिवो ब्रह्म परं धाम परमात्मा सनातनः
तत्त्वं सूक्ष्मं परेशानं मुक्तिस्थानं निरञ्जनम् ११
---------------------महत्पदम्
पश्यन्ति सूरयः सर्वे सर्वसङ्कल्पवर्जिताः १२
पर्याय वाचकं नाम परब्रह्म इति त्रिधा
विष्णुर्ब्रह्मा शिवः साक्षात् वासुदेवस्सनातनः १३
आमनन्ति परं तत्त्वं पठन्ति मुनिसत्तमाः १४
एक एव महादेवः परमात्मा निरञ्जनः १४
गुरुप्रसादमार्गेण सिद्धान्तोक्तेन वर्त्मना
तस्मात्संछास्त्र सिद्ध्यर्थं गुरुवन्दनपूर्वकम् १५
सिद्धान्ते सर्व कर्माणि भूतशुद्धिं ततः कुरु
दहनाप्लावनं कुर्यान्नाडीशोधनकर्मणा १६
प्राणस्थितिः प्रकर्तव्यं प्राणापानेन सुव्रत
---------------------- तत्त्ववित् १७
निक्षिप्य ब्रह्मकमले शिवं हंसेन योगवित्

योगेन वायुनासाद्य नाडीशोधनमारभेत् १८
ध्यायेम्महेशतो ग्राह्यं पीताभासमनोपमम्
स्फटिकाभाङ्गमाभासज्वालया बिन्दुतोपमम् १९
हृत्पद्मनिलयं --------
---------ममलमहंकारं स तत्परम्
त्वं शब्दनिलयं योगि असिशब्दे व्यवस्थितम् २०
तत्त्वमस्यापि वाक्यार्थं साधनं सनकादिभिः
सब्रह्म सशिवस्सेन्द्रस्सोऽक्षरः परमस्वराट् २१
ऋतं सत्यमिति ख्यातं परं ब्रह्म परात्परम्
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपमुमापतिम् २२
एवं सदाशिवं ध्यायेत् खे ब्रह्मपङ्कजं ततः
सदाशिवमजं ध्यात्वा प्राणायामं सदारभेत् २३
दहनाप्लावनार्थाय नाडीयजनमारभेत्
इडा च पिङ्गला चैव सुषुम्ना च त्रिधा भवेत् २४
विश्वस्याधारमत्यन्तं नाडीनां नायकत्रयम्
तस्मात्त्रयेण कर्तव्यं नाडी शुद्धिर्यथाक्रमम् २५
सूक्ष्मानन्दामृता चैव पिङ्गला माइडागुह
सूर्याग्निसोमसंयुक्ता पुनस्तत्त्रिविधा मता २६
रजस्तमस्सत्वमिति ब्रह्मरुद्रहरिस्तथा
ऋग्यजुस्साम च त्रीणि तस्मात्-------
-------------छुद्धिः प्रचक्षते २७
अकारं च उकारं च मकारं च त्रिधा भवेत्
बिन्दु चान्तर्गतो नाडी तुरीयं मुक्तिकारणम् २८
अकारो दक्षिणे भागे उकारो वामभागिकः
मकारो मध्यसंयुक्तस्तस्मात्त्रिः प्रदक्षिणम् २९
हकारो दक्षिणः पक्षः सकारो वामसंस्थितः

मध्ये नादमयस्थाने तस्मादन्तर्गतश्शिवः ३०
अविना दक्षिणं सव्यमुत्तरं वामसंयुतम्
विषुवद्वयोदयं मध्ये पुंस्त्री चैव नपुंसकम् ३१
शङ्करं दक्षिणं भागं वामभागमुमामयम्
सूक्ष्मं शिवमयं मध्ये त्रिःप्रकारं शिवामृतम् ३२
दक्षिणं बिन्दुसंयुक्तं वामं नादकलाकुलम्
मध्ये समरसं प्रोक्तं तदूर्ध्वे परमं पदम् ३३
तत्परं ब्रह्म परमं सर्वभूतेषु संस्थितम्
तेषां मध्ये महाशक्तिरन्तर्वेदि मनोन्मनीम् ३४
वागीशी परमानन्दज्योत्स्नादि ब्रह्मवारिणी
चैवकी वैखरी सूक्ष्मा पश्यन्ति मध्यमा सुधा ३५
स्वाहाकारी जगद्धात्री शब्दसंकुल---------
------------प्रणवं सङ्गीतं वादिनी स्थिता
श्रीमती च दयां सत्या विकल्परहिता शिवा ३६
योनिमध्ये गता नारी नारीनारायणस्थिता
स्थितिप्रलयसंयुक्ता सृष्टिमूला शिवप्रिया ३७
एभिर्नामयुता शक्तिरनन्ता नामकोटिका
तस्य मध्ये शिवस्थित्वा प्राणायामेन शोषयेत् ३८
उभाभ्यां तु बिपेद्वायुं संयम्य मनुना त्रिधा
गुदादनिलमुद्धृत्य प्रासादप्रणवेन तु ३९
दक्षिणेन पिबेत्पूर्वं कलामात्रेण मन्त्रवित्
कलाभिष्षोडशदशद्वादशाभिस्त्रिधोच्यते ४०
सूर्यसोमाग्निदैवत्यं निष्कलं शिवमव्ययम्
दक्षिणेऽर्ककलास्थानं वामे चन्द्रकला स्थितम् ४१
सकला सा समायुक्तं मध्ये वह्निसुषुम्नया
तस्य भेदमतो वक्ष्ये शृणु सर्वार्थसिद्धये ४२

अकारश्च इकारश्च उकारश्च तथैव च
ए ओ अमिति पुंलिङ्ग दक्षिणे वायुगोचरम् ४३
आ ई ऐ औ अः स्थिता वामतो वायुगोचरम्
एताश्चन्द्रकला ज्ञेया अमृताश्चन्द्र संयुता ४४
ऋ लृ लृ सुषुम्नायां प्राणमध्ये विषुद्वयाम्
दक्षिणस्थानमन्त्रेण धारयेद्वायुमात्मनि ४५
वह्निमण्डलमार्गेण तद्बीजेन समाधिना
वामेन विसृजेत्तत्र चन्द्रमध्येन बीजयुक् ४६
युवां मनसाम -------- कलायुतम्
चन्द्रमण्डलमध्येन ज्योत्स्नाध्यानेन मुख्यधीः ४७
नाभिचक्रगतं वायुं सुषुम्नाख्येन पूरयेत्
प्रणवध्यानमार्गेण हंसहंसेति कौदिता ४८
औकारान्तमिदं मन्त्रं षण्णादमिति पठ्यते
रहस्यमेतद्विज्ञानं गोपनीयं प्रयत्नतः
परकाय प्रवेशस्य साधनं विषनाशनम् ४९
एवं मृत्युञ्जयं मन्त्रं ओं जुं सः ओमिति स्मृतम्
मात्रा षोडशकेनैव पूरयेद्विधि चोदनात् ५०
चतुष्षष्टि कृतं कुम्भं द्वात्रिंशन्मात्रया स्पृशेत्
एवं षोडशकेनैव प्राणायामेन शोधयेत् ५१
नाडीशुद्धिमवाप्नोति सर्वपापैः प्रमुच्यते
प्रातः काले शुचिस्नात्वा हविष्याशी जितेन्द्रियः ५२
धारयेन्मासमात्रेण पञ्चपातकनाशनम्
-------------पैः ५३
ऋषिभिस्सततं योगं मयातीतं सनातनम्
आयुष्करं बलकरं यौवनं सजरापहम् ५४
काशश्वासहरं पुच्छव्याधिनाशं सुखप्रदम्

वन्ध्यानां पुत्रजनकं वायस्थापनमुत्तमम् ५५
समाधियोगस्यारम्भं वैदिकैरपि पूजितम्
ज्ञयकासापस्माराणां संपर्कव्याधि नाशनम् ५६
कुष्ठघ्नं गौरवालस्याद्देहलाघवकारणम्
तस्मात्सर्वप्रयत्नेन प्राणायामं समभ्यसेत् ५७
पश्चादाकाशगमनं ब्रह्मयोगस्य कारणम्
निर्वाण निर्गुणं व्योमव्यापि प्रसाधकं च तत् ५८
एवं क्रमेण गुरुणा आज्ञायुक्तस्य सिद्ध्यति
प्लावयेदमृतेनैव स्वधामन्त्रेण मन्त्रवित् ५९
अकारादि ज्ञकारान्तान्यज्ञराणि क्रमान्न्यसेत्
अकारं मूर्ध्नि विन्यस्य आकारं तु ललाटके ६०
इकारं दक्षिणे नेत्रे ईकारं वामनेत्रके
उकारं दक्षिणे कर्णे ऊकारं वामकर्णके ६१
ऋकारं दक्षिणे घ्राणे ॠकारं वामघ्राणके
ऌकारं दक्षिणे गण्डे ॡकारं वामगण्डके ६२
एकारमुत्तरौष्ठे च ऐकारमधरौष्ठके
ओकारमूर्ध्वदन्तेषु औकारमधोदन्तके ६३
अंकारं चैव जिह्वायां अःकारं तालुमध्यमे
एवं विधि क्रमेणैव विन्यसेत्षोडश स्वरान् ६४
कवर्गं दक्षिणे हस्ते चवर्गं वामहस्तके
टवर्गं दक्षिणे पादे तवर्गं वामपादके ६५
पफौ दक्षिणे पार्श्वे तु वामपार्श्वे बभौ न्यसेत्
नाभौ मकारं तस्योर्ध्वे यादिसान्तन्तु विन्यसेत् ६६
कक्षकुक्षौ त्रिकेन्यस्य हकारं हृदि विन्यसेत्
ळकारं गुदमूले तु ज्ञकारं गुह्यके न्यसेत् ६७
एवं विन्यस्य बीजानि शक्तिबीजं समुच्चरन्

करन्यासं प्रकुर्वीत चास्त्रमन्त्रेण ताप्य चा ६८
अङ्गुष्ठादि कनिष्ठान्तं पञ्चब्रह्मन्यसेत्क्रमात्
मध्यादि तर्जन्यान्तं च षडङ्गादीनि विन्यसेत् ६९
अष्टत्रिंशत्कलान्यासं कारयेच्छक्तिसंयुतम्
प्रदक्षिणक्रमेणैव पूजयेद्गुरुमण्डलम् ७०
त्वन्नामसङ्ग्रहौ द्वौ च द्वारे बाह्ये वृषं न्यसेत्
लिङ्गे वा प्रतिमायां वा मण्डले वापि पूजयेत् ७१
शुद्धिं कृत्वास्त्रमन्त्रेण आसनं कल्पयेत्क्रमात्
अनादिपरमात्मान्तं कल्पयेत्तं प्रपूजयेत् ७२
आवाहयेत्तु देवेशं पञ्चोपचारसंयुतम्
परात्परतरं शक्तिनादबिन्दुक्रमेण तु ७३
पञ्चमुद्रा समायुक्तं सद्यान्तेन प्रमाणयुक्
पूजयेद्गन्धपुष्पेण न्यासं कृत्वा विधानतः ७४
पञ्चब्रह्मषडङ्गेन स्नानं कृत्वा विशेषतः
पाद्यमाचमनं चार्घ्यं च गन्धपुष्पं च दापयेत् ७५
वस्त्राभरणमालां च धूपदीपौदनं ददेत्
ईशानं मध्यमे देशे पूर्वे तत्पुरुषं यजेत् ७६
अघोरं दक्षिणे पूज्ये वामदेवं तु चोत्तरे
सद्यं पश्चिमदेशे तु पूजयेद्ब्रह्म पञ्चकम् ७७
पावके हृदयं पूज्य ऐशान्यां तु शिरो यजेत्
नैर्ऋत्यां तु शिखां पूज्य वायव्यां कवचं यजेत् ७८
केसरावृतक्षेत्रेषु अस्त्रं दिक्षु प्रविन्यसेत्
आदित्यं पूजयेत्पूर्वं दुर्गां दक्षिणतो यजेत् ७९
विघ्नेशं पश्चिमे पूज्य क्षेत्रपालं तु चोत्तरे
एवमावरणं प्रोक्तं पूजयेत्तु क्रमेण तु ८०
दानं कृत्वा प्रयत्नेन सर्वभूत बलिं ददेत्

नैवेद्यं दापयेत्पश्चात्ताम्बूलं दापयेत्ततः ८१
संहितां पूजयेत्पश्चान्नित्याग्निं पूजयेद्बुधः
शिवमन्त्रं जपेत्पश्चात्स्तोत्रमङ्गलवाचकैः ८२
प्रदक्षिणनमस्कारान्कारयेद्विधिना सह
दीपान्तं वा हविष्यान्तं बल्यन्तं वापि पूजयेत् ८३
सदीपान्नाडिकास्तिस्रो हविष्यं पञ्चनाडिका
बल्यन्तं चैव सप्तेन पूजयेत्त्रिविधं तथा ८४
तत्परार्थं समाख्यातं सर्वेषामात्मनः फलम्
पूजाफलं च तत्सर्वं सर्वभूताय दापयेत् ८५
अर्घ्यं दत्वा स्वशिष्याणां समाधिं कारयेद्बुधः
देवतोद्वासनं कृत्वा यथा शास्त्रोक्तमार्गतः ८६
एवं तु कारयेन्नित्यं सर्वकामफलप्रदम्
इति चिन्त्यशास्त्रे सहस्रग्रन्थे नित्यार्चनविधिर्नाम अष्टादश पटलः

## सायरक्षापूजा

अथ वक्ष्ये विशेषेण सायरक्षाविधिक्रमम्
सर्वरोगनिवृत्यर्थं सर्वप्राणिहितावहम् १
देवस्य नयनोच्छिष्टं निवृत्यर्थं प्रदोषके
लिङ्गे वा प्रतिमायां वा सायरक्षामथाचरेत् २
लिङ्गाकारं तु मिश्रं च प्रतिमां सकलाकृतिम्
प्रतिमामूर्तिरूपं च महेशं मूर्तिमेव च ३
गणेशं स्कन्दरूपं च उमादेवी तथैव च
स्व प्रधाने तु यन्मूर्तिस्सायरक्षामथाचरेत् ४
कर्तव्यां सायरक्षां तु रवेरस्तमयात्परम्
दीपं पूजादिनृत्तान्तं नाडीत्रयमथाचरेत् ५
दीपकालं सार्धनाडी तत्समं गीतनृत्तकम्

दीपकालमिति प्रोक्तं पात्रलक्षणमुच्यते ६
पात्राणां द्विविधं प्रोक्तमारात्रिं चित्ररात्रया
यातिवर्गेण कृत्वा तु लक्षणोक्तं विशेषतः ७
हैमराजत ताम्रैर्वा पैत्तलैः कांस्यकैः कुरु
त्रयङ्गुलं समारभ्य द्विद्व्यङ्गुल्यविवर्धनात् ८
आरात्रिकं चतुर्भेदं नवाङ्गुलावसानकम्
त्रयङ्गुलं समारभ्य अर्धार्धाङ्गुलवर्धनात् ९
रसाङ्गुलावसानं तु धातुभागं च चित्रकम्
द्विविधं पात्रमानं तु तन्मध्ये विन्यसेद्भ्रमम् १०
अर्धार्धाङ्गुलमुत्सेधं तदर्धार्धं तु चोष्ठकम्
आरात्रिं पादयुक्तं स्यान्नपादं चित्ररात्रिकम् ११
अङ्गुलार्धर्धपादं तु पद्मं चेदध ऊर्ध्वकम्
पूर्णचन्द्रवदाकारा मायादि शुद्धितः क्रमात् १२
आरात्रिकं तु तन्मध्ये दीपाधारं तु विन्यसेत्
सार्धाङ्गुलार्धकोत्सेधं तन्मानं मूलनाहकम् १३
तदर्धमग्रनाहं तु तिलविस्तारमोष्ठकम्
एकत्रि पञ्चधातुश्च नन्दरुद्रावसानकम् १४
चित्रारात्रिकमध्ये तु दीपधारं तु विन्यसेत्
रजनी युक्तपिष्टं च तन्मध्ये स्थानवत्कुरु १५
नानावर्णं समालिख्य परितः पद्मवत्कुरु
आरात्रिञ्चित्रमारात्रिदीपदेहं द्विधोच्यते १६
कर्पूरमुत्तमं श्रेष्ठं पट्टोऽर्थे देहमुत्तमम्
कार्पासतन्तुना देहं मध्यमं देहमुच्यते १७
शुद्धवस्त्रेण देहं च कन्यसं देहमुच्यते
कर्पूरं रूपवत्कृत्वा देहमानेन कारयेत् १८
दुकूलपट्टदेवाङ्गं कार्पासंश्वेततन्तुना

शुद्धवस्त्रं च विस्तीर्य वामहस्ते तु विन्यसेत् १९
तालुमूले न्यसेद्दर्भं दक्षिणाङ्गुलमुन्नतम्
तालमूले तदग्रे च उन्नतं शिर बन्धयेत् २०
त्र्यङ्गुलं च चतुःपञ्च देहदीर्घं तु कारयेत्
देहमानं त्रिरुच्येते परिणाहं पद्मनालवत् २१
पचनालयेऽथ कुण्डेषु नित्याग्नियजनं क्रमात्
पश्चादग्निसमूहं चेत् शुष्कगोमयकं न्यसेत् २२
रवेरस्तमयात्पूर्वे देशिकस्स्नानमाचरेत्
शुद्धवस्त्रपरीधानः शुक्लयज्ञोपवीतकः २३
पादप्रक्षालनं कृत्वा आचम्य विधिना बुधः
सूर्यास्तमनकाले च सन्ध्यावन्दनकं कुरु २४
वैदिकं तु पुरा कृत्वा पश्चाच्चैवमथाचरेत्
आलयान्तः प्रश्विश्याथ कूर्मासनोपरि स्थितः २५
उत्तराभिमुखो भूत्वा रुचिरासनसंस्थितः
भस्म वामकरे स्थाप्य दक्षहस्तेन मन्त्रयेत् २६
असुरांशं परित्यज्य अस्त्रमन्त्रमनुस्मरन्
मध्याङ्गुळ्यमलैर्युक्तमपरैर्जलवर्जितम् २७
प्रदक्षिणक्रमेणैव अङ्गुलीभिश्च मर्दयेत्
मूर्ध्नी चैव ललाटे च कर्णे कण्ठे तथैव च २८
हृदये चैव बाह्वोश्च नाभौ चैव तथोच्यते
पञ्चाङ्गुलेन मूर्ध्नि स्यात् प्रासादेन तु मन्त्रतः २९
अङ्गन्यासकरन्यासं विन्यसेद्विधिपूर्वकम्
मण्टपस्य तु तन्मध्ये या द्वारकोष्ठे विशेषतः ३०
मार्जनप्रोक्षणं चैव आसनोपरि विन्यसेत्
शुद्धवस्त्रैः परिस्तीर्य तरङ्गेणैव वेष्टयेत् ३१
पचनालयं ततः प्रोन्द्य नित्याग्नियजनं कुरु

उत्तराभिमुखः स्थित्वा प्रोन्नयेदस्त्रमन्त्रतः ३२
कुराडेषुरग्निरुद्धृत्य जुष्टोपस्थानकं चरेत्
परिस्तरणकं कुर्यात्पूर्वादिरुत्तरान्तकम् ३३
तत्पुरुषादि सद्यान्तं दर्भेणैव परिस्तरेत्
अग्निबीजमनुस्मृत्य वायुना ज्वलनं भवेत् ३४
आज्यसंस्करणं चैव स्नुक्स्नुवौ मार्जनं चरेत्
परिषेचनं ततः कुयात्त्र्यम्बकादिमनुस्मरन् ३५
आज्येन जुहुयाद्धीमान् स्व स्व मूलमनुस्मरन्
रुद्रसंख्यावसानं च हुत्वाज्यं तु विशेषतः ३६
तदन्ते व्याहृतिं हुत्वा अन्ते दीपे च रोपयेत्
परिचारकमाहूय सोष्णीषं चोत्तरीयकम्
दीपपात्रं समादाय तन्मूर्ध्नि विन्यसेत्ततः
दीपयानं ततः कुर्याच्छत्रचामरसंयुतम्
दीपज्वालासमायुक्तं वाद्यघोषसमन्वितम् ३७
मराडपान्तः प्रविश्याथ दक्षिणे चोत्तरे न्यसेत्
दीपपात्रं त्रिपादूर्ध्वे विन्यसेच्छुद्धितः कुरु ३८
दीपाधारं तदग्रे तु दीपदेहं तु विन्यसेत्
गोघृतमुत्तमं स्नेहमुत्तमं देहसंयुतम् ३९
कन्यसं वृक्षतैलेषु कन्यसं देह संयुतम्
उत्तमादि त्रयं देहं दीपाधारोर्ध्वके न्यसेत् ४०
पुरायाहं कारयेद्धीमान् पूर्वोक्तविधिवत्क्रमात्
विन्यसेत्त्रिविधं देहे होमदीपे तु रोपयेत् ४१
दीपपात्रादि शुध्यर्थं प्रोन्नयेदस्त्रमन्त्रतः
गन्धपुष्पैश्च धूपैश्च पूजयेत्तु विशेषतः ४२
गर्भगेहं प्रविश्याथ देवपार्श्वेषु तिष्ठति
देवदें नमस्कृत्वा पूजाविज्ञापनां ततः ४३

चित्रारात्रिकमादाय गणिकांश्च प्रवेशयेत्
द्वारबाह्ये प्रविश्याथ आसनोपरि पूजयेत् ४४
तत्काले पटयति क्षिप्य द्वारच्छन्नं तु कारयेत्
देवाग्रे खड्गकं न्यस्य वस्त्रेणोपरि वेष्टयेत् ४५
गन्धपुष्पैरलङ्कृत्य मूर्तिमावाहनं ततः
आचार्यहस्तमादाय आसनोपरि विन्यसेत् ४६
तदग्रे पादुकां न्यस्य आसनोर्ध्वे विशेषतः
पाद्यमाचमनं चार्घ्यमस्त्रमन्त्रमनुस्मरन् ४७
गन्धपुष्पैश्च धूपैश्च पूजयेत्तु विशेषतः
गणिकानां विशेषेण सर्वालङ्कारशोभितम् ४८
कल्पितं भस्म तिलकं पुष्पमाल्यैरलङ्कृतम्
सुमुखी प्रियवादी च गणिका च विशेषतः ४९
चित्रारात्रिकमादाय देवस्याग्रे तु विन्यसेत्
अस्त्रेण प्रोक्षणं कृत्वा परिचारकमाददेत् ५०
होमाग्नौ दीपमारोप्य धूपदीपेन पूजितम्
चित्रारात्रिकमादाय पादुकं त्रिः प्रदक्षिणम् ५१
चित्रदीपं यथासंख्यं भूतदीपादि वर्जयेत्
चित्रदीपेन गुणितं पञ्चषष्ठावसानयेत् ५२
एतत्संख्यावसानं च एकैकं भ्रामयेत्क्रमात्
उच्छिष्ट दीपमादाय तदग्रे विन्यसेत्ततः ५३
एकैकं दीपमादाय एकैकं देवदासिनी
पङ्क्तिमार्गे विशेषेण तिष्ठेदुभयपार्श्वयोः ५४
श्रीपदुकं खड्गमादाय मूले संयोजयेत्ततः
मूलादिदीपमादाय गर्भगेहं प्रवेशयेत् ५५
पाद्यमाचमनं चार्घ्यं धूपदीपैः प्रपूरितम्
धूपमन्त्रमनुस्मृत्य धूपं नासापुटद्वये ५६

दीपमन्त्रमनुस्मृत्य दीपं नेत्रेषु दीपयेत्
शिखामन्त्रमनुस्मृत्य आरात्रिं त्रिःप्रदक्षिणम् ५७
कृत्वा प्रदक्षिणं भ्राम्य क्रमेणैव शनैश्शनैः
तत्काले शुद्धनृत्तं च देवाग्रे देवदासिभिः ५८
पात्रत्रयसमायुक्तं शुद्धनृत्तक्रमं चरेत्
प्रतिमाननपश्यन्तीतृ शुद्धनृत्तं तु कारयेत् ५९
आरात्रिं भ्रमणार्हं यच्छुद्धनृत्तावसानकम्
चन्दनोशीरचूर्णं च कार्पासबीजसंयुतम् ६०
राजिकालवणसंयुक्तं तपस्वी बिल्वपत्रकम्
एतेषां मिश्रकं कृत्वा एकपात्रे विनिक्षिपेत् ६१
द्रव्यपात्रं त्रिधा भ्राम्य मन्त्रमुच्छिष्टमुन्नतम्
प्राणिनां लोकरक्षार्थं ललाटे भस्मधारणम्
आरात्रिदीपमादाय द्रव्यपात्रसुसंयुतम् ६२
पुष्पमाला समायुक्तं नृत्तं च गणिकादिभिः
पुष्पाञ्जलिं नमस्कृत्वा पुष्पमाल्यानुलेपनात् ६३
आरात्रिदीपमुद्धृत्य पुरोगमनकारिणी
चित्ररात्रिकधारिण्यो पश्चाद्गमनकारिणी ६४
वाद्यघोषसमायुक्तबाह्ये पीठाद्बहिर्न्यसेत्
अनलं कुण्डसंयुक्तं कल्पमेखलया युतम् ६५
नवाङ्गुलं तु विस्तारं तत्समं चोन्नतं भवेत्
काष्ठादग्निमथादाय कुण्डमध्ये विनिक्षिपेत् ६६
अग्निमध्ये विशेषेण आरात्रिदीपकं न्यसेत्
पात्राणां क्षालनं कृत्वा मण्डपान्तः प्रवेशयेत्
कौतुकं नृत्तमूलं च धूपदीपादिभिर्यजेत्
भसितं दापयेच्छम्भोर्भक्तानां च प्रदापयेत्
विद्वज्जनस्ततः कुर्यात्स्तुत्यस्तोत्रपुराणकान्

गीतनृत्तं ततः कुर्याद्वादित्रयसमन्वितम्
दीपार्चनविधिः प्रोक्तो दीपे हीने विधिं शृणु ६७
कुण्डेषु त्वग्निविहीने तु पुनरुद्भवमार्गवत्
हुत्वा त्रिगुणमाज्येन मूलेनैव शताहुतिः ६८
होमाग्नि दीपदग्धस्य मूलमन्त्र शतं जपेत्
पुनर्होमं ततः कुर्याद्धुत्वा द्विगुणमाचरेत् ६९
होमान्ते दीपमारोप्य दीपयानं तु पूर्ववत्
आरात्रि चित्रमारात्रि उच्छिष्टं दीपं दग्धयेत् ७०
दग्धदीपं च धूमं प्रविशेत् बिम्बमालये
मूलशक्तिं बहिः प्राप्य राक्षसानां प्रदर्शयेत् ७१
तद्दोषशमनार्थाय पञ्चगव्याभिषेचनम्
मूलमन्त्रं सहस्रं च जपेत्सर्वसमृद्धिदम् ७२

इति चिन्त्यशास्त्रे सहस्रग्रन्थे सायरक्षाविधिर्नाम एकोनविंशतिः पटलः

## लिङ्गस्थापनम्

अतः परं प्रवक्ष्यामि लिङ्गस्थापनमुत्तमम्
स्थापनस्य समं पुण्यं न भूतो न भविष्यति १
यावत्स्थापनं देवानां तावत्स्व स्व प्रतिष्टया
संक्षेपेणाधुना वक्ष्ये तस्माच्छिन्त्येति कीर्तिताः २
क्रियाक्षक्राळीझषको मिथुनश्चार्कसङ्गते
शशाङ्कप्रबले काले सिताचार्यप्रकाशके ३
नृपकर्तुश्च जन्मर्क्षादनुकूलदिनेषु च
तिष्यादित्येन्दु पौष्णार्क विधि वातोत्तरत्रयाः ४
श्रेष्ठामध्यावसौमित्र श्रवणामूलभेषु च
बुधचन्द्रसिताचार्यवारेषु सोदयांशके ५

रिक्तां पर्वाष्टमीं त्यक्त्वा चान्ये वा शुक्लपक्षके
विष्कम्भं परिखं वज्रं व्यतीपातं च वैधृतिम्  ६
गण्डातिगण्डशूलं च त्यक्त्वा शेषाश्शुभावहाः
करणे कुक्कुटं वर्ज्यं वर्जयेच्चरराशिकम्  ७
शेषाः शुभाः प्रतिष्ठायां करणैश्चैव राशयः
बालस्थाप्ये विशेषोऽस्ति लग्नेन्यस्त्वा स्थिरोभयोः  ८
शुभग्रहास्सुते लाभे धने केन्द्रे च संस्थिते
पापलाभत्रये षष्ठे तिष्ठन्तो प्रतिष्ठाश्शोभनाः  ९
व्यये धर्माष्टधीतिष्ठैः पापैश्चैव हरेत्क्रमात्
आचार्यमन्त्रदातारं शिल्पिनं प्रतिमामपि  १०
निरूपणे गुणाधिक्ये सर्वेषां स्थापनं शुभम्
लिङ्गसंस्थापनात्पूर्वं स्थापयेद्बाललिङ्गकम्  ११
बाललिङ्गं विना कुर्यान्मूललिङ्गं न कारयेत्
अन्येषां देवतानां च हर्म्ये चाङ्गविहीनके  १२
शिल्पिकर्म प्रवर्ते तु स्थापयेद्बाललिङ्गकम्
मूलहर्म्यस्य वैशान्ये पावके याम्यसौम्ययोः  १३
बालबिम्बस्य हर्म्यं तु लक्षणोक्तं तु कारयेत्
तन्त्रोक्तदेवहर्म्याग्रे पार्श्वयोर्यागमण्डपम्  १४
कल्पयेद्दशरन्ध्राष्ट्र हस्तं च चतुरश्रकम्
विकारस्तम्भसंयुक्तभानुस्तम्भयुतं तु वा  १५
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
वितानध्वजसंयुक्तं दर्भमालाभिरावृतम्  १६
गात्रवेष्टनसंयुक्तं चित्रवस्त्रैरलङ्कृतम्
स्वर्णदामै रत्नदामैः पुष्पदामैश्च शोभितम्  १७
क्रमुकं नाळिकेरं च लिकुचं मातुलङ्गकम्
एवं फलैश्च पुष्पैश्च समन्तादुपशोभितम्  १८

कृत्वा मध्यांशके वेदिं तच्चतुर्थांशमुन्नतम्
उपवेदि समायुक्तं निम्नोन्नतविवर्जितम्  १९
कुराडानि परितः कुर्यादिन्द्राद्यष्टदिशासु च
श्रुत्यश्रं योनिचन्द्रार्धं त्र्यश्रं वृत्तं षडश्रकम्  २०
पद्ममष्टाश्रकुराडानि लच्चणोक्तं तु कारयेत्
चक्र चक्रान्तयोर्मध्ये वृत्तकुराडं प्रधानकम्  २१
पञ्चाग्नौ चतुरश्राणि दिशासु श्रेष्ठवृत्तकम्
एकाग्नौ चैव कुराडं च पूर्वे वा चतुरश्रकम्  २२
देव्याश्चैव विशेषोऽस्ति योनिकुराडं प्रधानकम्
वेदाश्रं च सुवृत्तं च पद्मकुराडं चतुर्दिशि  २३
स्राग्नेयादिषु कोर्णेषु योन्याकाराणि कल्पयेत्
चतुरश्राणि कुराडानि सर्वेषामुत्तमोत्तमम्  २४
कुराडानि लच्चणोक्तानि कारयेद्यागमराडपे
तस्य सौम्य दिशे कृत्वा चाच्चिमोच्चार्थमराटपम्  २५
बिम्बायामप्रमाणेन तन्मध्ये वेदिकां कुरु
द्वादशाङ्गुलमुत्सेधं दर्पणोदरसन्निभम्  २६
वेदिकावारुणे भागे स्नानश्वभ्रं तु कल्पयेत्
बिम्बं तु विन्यसेद्धीमान्स्नानवेद्यां च स्थरिडले
देशिको वा विशेषेण स्थापनेष्टदिनस्य तु  २७
पूर्वं च मराडलं वापि मासं वा पच्चमेव वा
स्रङ्कुरादिनमादौ वा स्रन्तर्यागं समाचरेत्  २८
स्रन्तर्यागे विशेषोऽस्ति यजेत्स्थापनवेदिका
नित्यानुष्ठानकर्मं तु स्नानादिं नित्यवच्चरेत्  २९
पश्चात्तन्त्रोक्तदेवानां प्राणायामत्रयं कुरु
जलं स्पृष्ट्वा जपेन्मूलं हृदयेनाञ्जलित्रयम्  ३०
पञ्चाच्चरेण तोयैश्च त्रिःप्रकारं तु तर्पयेत्

शिवमन्त्रं नवार्णं च दशार्णं तर्पयेत्ततः  ३१
तन्त्रोक्तदेवगायत्रीजलं मूलेन तर्पयेत्
कनिष्ठानामिकामध्ये जपेत्सर्वैश्च संख्यया  ३२
त्रिःप्रकारेण मूलेन तर्पयेत्तु पुनः पुनः
जलकर्ममिदं प्रोक्तं भस्मस्नानं तु पूर्ववत्  ३३
अङ्गन्यासादिकं सर्वं नित्यवत्सर्वमाचरेत्
पश्चात्तन्त्रोक्तदेवस्य मन्त्ररूपं न्यसेत्क्रमात्  ३४
अग्निबीजं न्यसेन्नाभौ चन्द्रबीजं हृदिन्यसेत्
आदित्यार्णं न्यसेन्मूर्ध्नि स्व स्व मन्त्रेण देशिकः  ३५
मन्त्ररूपं न्यसेद्देवान् हृदयाम्बुजमध्यमे
पञ्चार्णं वा नवार्णं वा दशार्णमिष्टसंख्यया  ३६
जपेत्तन्त्रोक्तदेवस्य मूलमष्टोत्तरं शतम्
हृदये यजनं कृत्वा नाभौ होमं प्रकल्पयेत्  ३७
नित्याग्निं योजयेन्नित्ये योजयेत् रविमण्डले
अन्तर्यागमिदं प्रोक्तं शृणु तन्त्रां गुरोदया  ३८
पुष्पस्नानं तु पूर्वं वा द्वितीयमक्षिमोक्षणम्
तृतीयं बेरशुद्धिं च चतुर्थं ग्रामदर्शनम्  ३९
जलाधिवासनं पश्चात् षष्ठं कौतुकबन्धनम्
सप्तमं शयनं कल्प्यं अष्टमं यागपूजनम्  ४०
नवमं दक्षिणादानं दशमं रत्नक्षेपणम्
एकादशाष्टबन्धं चाष्टगन्धं च द्वादशम्  ४१
अक्षरन्यासकं पश्चात् पश्चात्पुष्पावगाहनम्
होमं पञ्चदशं पूर्णटस्नानं तु षोडश  ४२
एते षोडश कर्माणि शैलजस्थापनस्य तु
तत्तन्त्रावसाने तु षोडशार्णं क्रमान्न्यसेत्  ४३
आज्ञानुज्ञायद्दत्तं च नालिकेरं तु सङ्ग्रहेत्

गणेशं पूजयित्वा तु अनुज्ञां पूर्वमाचरेत् ४४
पूर्वोक्तेन विधिना कारयेदङ्कुरार्पणम्
वास्तुहोमं समाश्रित्य पर्यग्निकरणं कुरु ४५
गोमयालेपनं कृत्वा पुण्याहं वाचयेत्ततः
अष्टमृत्पञ्चगव्यादिपत्रकाषायवारिभिः ४६
घटस्नानं तु संस्थाप्यार्चयेद्धृदयेन तु
पृथिव्यादिजि बीजानि न्यसेत्पादाच्छिरोऽन्तकम् ४७
लिङ्गं च पिण्डिकां चैव रक्तवस्त्रेण वेष्टयेत् ४८
लक्षणोक्त्या च वेद्यूर्ध्वे शालिभिस्तण्डुलं क्षिपेत्
तन्मध्ये नाळिनं कल्प्य प्रोक्षयेद्धृदयेन तु ४९
तिलैर्लाजैश्च दर्भैश्च पुष्पैश्चैव परिस्तरेत्
लिङ्गपीठे समुद्धृत्य तस्योर्ध्वे शाययेत्सुधीः ५०
प्राक् च्छिरश्चोर्ध्ववक्त्रेण शाययेत्पीठसंयुतम्
हृदये यजनं कुर्यादेकवस्त्रेण वेष्टयेत् ५१
अग्निकार्योक्तमार्गेण होमयेदेशिकोत्तरे
मूलेन होमयेत्सर्वं हृदयेन चरुं हुनेत्
देवस्य त्वा इदं विष्णु ब्रह्मजज्ञाद्धुनेद्धृतम् ४८
हुत्वा तु सप्तसंख्येन नेत्रमन्त्राद्दशाहुतीः
पञ्चविंशतिमूलेन द्रव्यान्ते व्याहृतिं हुनेत् ५४
पूर्णां हुनेत्ततः पश्चात्कौतुकं बन्धयेद्बुधः
प्रभाते सूत्रविन्यासं सुमुहूर्ते समाचरेत्
रुद्रभागस्य जायामं षोडशांशेन भोजयेत् ४९
चतुर्थांशं द्वितीयं च ऊर्ध्वे मूले त्यजेत्क्रमात्
एकांशं मुकुले न्यस्त्वा रन्ध्रांशं नालमालिखेत् ५०
कृसरं कल्पयेद्धीमान् पक्षसूत्रद्वयं लिखेत्
तयोस्सूत्रद्वयं चैव साधयेत्पृष्ठदेशके ५१

प्रथमे लक्षणं प्रोक्तं द्वितीयं लक्षणं शृणु
पूजाहं गन्तु भान्वंशे ऊर्ध्वे न्यस्त्वा गुणांशके ५२
एकांशमुकुल न्यस्त्वा वस्वंशं नालमुच्यते
पक्षसूत्रद्वयं चापि पूर्वोक्त विधिना सह ५३
द्वितीयं लक्षणं प्रोक्तं तृतीयं लक्षणं शृणु
रुद्रांशे रुद्रभागे तु त्यक्त्वाप्यूर्ध्वे गुणांशकम् ५४
एकांशं मुकुलं कृत्वा नालं सप्तांशकं भवेत्
रुद्रांशं नवधा कृत्वा त्यक्त्वोर्ध्वे च द्वयांशकम् ५५
मुकुलमेकभागं तु पञ्चांशं नालमिष्यते
नालयामधियस्तस्य मुकुलं कृत्वा तु मूलकम् ५६
पार्श्वयोरुभयोस्सूत्रं बन्धयेत्पृष्ठदेशके
कदलीमुकुलं वापि पद्मं वा युगळं तु वा ५७
लिङ्गं वा शूलरूपं वा छत्रं वा लक्षणं न्यसेत्
सर्वेषां चैव लिङ्गानां मुकुलं चोत्तमोत्तमम् ५८
त्रियम्बकेन मन्त्रेण नालसूत्रं तु विन्यसेत्
ब्रह्मजज्ञानमन्त्रेण लेखयेद्ब्रह्मसूत्रकम् ५९
नेत्रेण मुकुलं लिख्य लिख्येयं स्वर्णसूचिना
तयोर्मन्त्रं च संलिख्य सर्व देवाक्ष मोक्षिणाम् ६०
मधुवातेतिमन्त्रेण मधुना तर्पयेत्ततः
घृतं मिमिक्षमन्त्रेण तर्पयेत्तु घृतं ततः
बाललिङ्गे विना सूत्रं मध्य नेत्रेण लिख्यते ६७
मधुवातेतिमन्त्रेण मधुना तर्पयेत्ततः
द्वयोर्मन्त्रं तयोर्ल्लिख्य सर्वदेवेऽक्षिमोक्षणम् ६८
सिताक्षि मण्डलं न्यस्त्वा तन्मध्ये कृष्णमण्डलम् ६१
तस्य मण्डलयोर्मध्ये ज्योतिर्मण्डलमालिखेत्
दर्शयेन्नेत्रमन्त्रेण तर्पयेत्तु घृतं ततः ६२

बाललिङ्गे विनासूत्रे मध्यनेत्रेण लिप्यते
मधुवातारि मन्त्रेण मधुना तर्पयेत्ततः ६३
दर्शयेद्धान्यराशिं तु गोवत्सां ब्रह्मकन्यकाम्
प्रच्छन्नपटमानीय मानस्थाने नयेच्छिवम् ६४
स्थापयेद्वेर शुद्ध्यर्थं विधिना पञ्चगव्यकैः
मृत्कषायैश्च कन्दैश्च पत्रैर्गन्धैश्च वारिभिः ६५
पञ्चब्रह्मैश्च संस्थाप्य स्नापयेत्स्व स्व मन्त्रतः
पञ्चामृतैः फलैः पुस्पैर्नालिकेरोदकादिभिः ६६
गन्धतोयादिभिः स्नाप्यार्चयेन्मूलमन्त्रतः
रक्तवस्त्रेण संवेष्ट्य पश्चाद्ग्रामप्रदक्षिणम् ६७
वस्त्रैराभरणैः पुष्पैर्गन्धैर्माल्यैश्च पूजयेत्
हृदयेन समभ्यर्च्य न्यसेत्पञ्चाक्षरं जपेत् ६८
धूपदीपसमायुक्तं वाद्यघोषसमन्वितम्
छत्रचामरसंयुक्तं सर्वालङ्कारसंयुतम् ६९
रथे वा शिबिकायां वा रत्नसिंहासनेऽपि वा
रज्जुना कृतयन्त्रे वा कृत्वा ग्रामप्रदक्षिणम् ७०
हर्म्यप्रदक्षिणं कृत्वा जलतीरे प्रवेशयेत्
बालबिम्बप्रतिष्ठायां त्यजेद्ग्रामप्रदक्षिणम् ७१
जलतीरे प्रपां कृत्वा शालिभिः स्थण्डिलं क्षिपेत्
तन्मध्ये नलिनं लिख्य दर्भैः पुष्पैः परिस्तरेत् ७२
स्थापयेच्छिवकुम्भं तु तन्मध्ये सप्ततीर्थकम्
गङ्गां च नर्मदां सिन्धुं गोदावरिं सरस्वतीम् ७३
यमुनां चैव कावेरीं तन्मध्ये स्थापयेत्सुधीः
वर्धनीं स्थापयेद्धीमानावृतौ लोकपालकान् ७४
तैलं शिरोऽर्पणं कृत्वा वारिमध्ये विशेषतः
यथास्थाने तु संस्थाप्य तत्तद्दिक्पालकुम्भके ७५

अथवा चार्चयेद्धीमान्राक्षसांश्च विसर्जयेत्
तन्मध्ये दारुपीठे तु लिङ्गपीठं विशेषतः
प्राक्शिरश्चोध्ववक्त्रं च शाययेद्वारिमध्यमे ७६
बिम्बयोश्च शिरोभागे तीर्थकुम्भे च विन्यसेत्
त्रिरात्रं वा द्विरात्रं वा एकरात्रमथापि वा ७७
अथवा एकयामं वा बिम्बं तोयेऽधिवासयेत्
यागस्थानं प्रवेश्याथ देशिको मूर्तिपैस्सह ७८
वास्तुहोमं समाश्रित्य पर्यग्निकरणं कुरु
भूसुरान् भोजयित्वाथ उच्छिष्टं तु विसर्जयेत् ७९
गोमयालेपनं कृत्वा पुण्याहं वाचयेत्ततः
प्रागुक्तविधिनानेन पूजयेद्यागमण्टपे ८०
वेद्यां लब्धशतास्त्रैश्च निरीक्ष्य प्रोक्षणं कुरु
शालिभिः स्थण्डिलं कृत्वा चाष्टद्रोणं तदर्धकम् ८१
तन्मध्ये नलिनं लिख्य तिलैर्लाजैश्च शोभयेत्
दर्भैः पुष्पैः परिस्तीर्य प्रोक्षयेत्प्रणवाम्बुना ८२
जलाद्बिम्बं समुद्धृत्य तीर्थकुम्भाभिषेचनम्
तिरे वा मण्टपे वापि स्नानवेद्यां तु विन्यसेत् ८३
स्नापयेत्पञ्चगव्यैश्च पुष्पगन्धोदकादिभिः
लिङ्गपीठे ष्टकादीनि प्रवेश्य यागमण्डपे ८४
वेद्यूर्ध्वे विन्यसेद्धीमानर्चयेन्मूलमन्त्रतः
स्नापयेत्पञ्चगव्यैश्च पुष्पगन्धादिकादिभिः ८५
लिङ्गं पीठोष्टकादीनि प्रवेशे यागमण्टपे
वेद्यूर्ध्वे विन्यसेद्धीमानर्चयेन्मूलमन्त्रतः ८६
रक्षासूत्रं तु विधिवत् रुद्रभागे तु धारयेत्
पीठनाळाग्रके बध्वा देवानां सव्यहस्तके ८७
देवीनां वामहस्ते तु अस्त्रस्य मध्यपत्रके

बृहत्सामेति देवानां देवीनां त्र्यम्बकं तथा ८८
भस्मानि तन्तुनाक्तं तु रक्षासूत्रं तु धारयेत्
पञ्चभिश्शयनं कल्प्य देशिकस्य तु बुद्धिमान् ८९
चर्मजं रोमजं चैव अण्डजं मुण्डजं तथा
कार्पासं चैव पञ्चैते शयनं संप्रकल्पयेत् ९०
तेषामूर्ध्वे शयेद्बिम्बान् प्राक्शिरश्चोर्ध्ववक्त्रकम्
पीठं च नन्दिकावर्ता विन्यसेल्लिङ्गमन्त्रतः ९१
स्व स्व मूलेनाचाभ्यर्च्य न्यस्त्वा मूलाच्छिरोऽन्तकम्
आत्मविद्या शिवान् तत्त्वान् पादाद्भागत्रये न्यसेत् ९२
दर्शयेल्लिङ्गमुद्रां तु सुरभिं पद्ममुद्रिकाम्
लिङ्गं च पिण्डिकां चैव एकवस्त्रेण वेष्टयेत् ९३
लिङ्गस्यैव शिरोभागे कल्पयेत्स्थापितान्घटान्
त्रिसूत्रं वा द्विसूत्रं वा एकसूत्रमथापि वा
सद्येन वेष्टयेत्कुम्भं गवाक्षसदृशं तथा ९४
क्षालयेद्वाममन्त्रेण धूपितं घोरमन्त्रतः
पुरुषेशानमन्त्राभ्यां कुम्भानूर्ध्वमुखान्न्यसेत् ९५
आपो वा इति मन्त्रेण कुम्भेषु वारि पूरयेत्
कूर्चं न्यस्य हृदा चैव स्वस्वबीजेन पूरयेत् ९६
स्व स्व बीजेन विन्यस्य स्वर्णरत्नं सुरत्नकम्
स्थापनार्थं तु देवानां यजेन्मन्त्रस्वरूपकम् ९७
मन्त्ररूपं तु यत्सर्वं तत्सर्वं तु मकारकम्
वस्त्रं प्रदक्षिणं न्यस्त्वा साङ्गं न्यस्त्वापसव्यकम् ९८
नाभिरेखोर्ध्ववक्त्रोक्तं न्यस्य मौलौ यकारकम्
शिकारमक्षौ नमश्श्रोत्रावोष्ठौ न्यस्त्वा वकारकम् ९९
बिन्दुनादं न्यसेद्बाहौ नादं सर्वाङ्गवेष्टनम्
नादाद्यर्णं तु पादौ तो बिन्दुबीजसमन्वितम् १००

अक्षराद्यं यमार्णं च न्यस्त्वा हृदयपार्श्वयोः
पृथिव्यादीनि वर्णानि न्यसेत्पादशिरोऽन्तकम्  १०१
षष्ठस्वरं च बिन्दुं च नासि न्यस्त्वावधोमुखम्
प्रणवं प्रभयोर्युक्तं तद्बीजार्णमधोमुखम्  १०२
स्व स्व बीजं न्यसेद्धीमान् सदाशिवशिरोपरि
देवानां च हृदि स्थाने देवीनां स्तनयोर्न्यसेत्  १०३
स्व स्व मूलेन सर्वेषां स्व स्व पादशिरोऽन्तकम्
विन्यसेत्तु चतुर्थ्यन्तं नमादौ नाममध्यमम्  १०४
न्यस्त्वांशे तस्य बीजं तु पूर्वयुक्तं लिखेन्न्यसेत्
तस्मान्मूर्ध्नि चतुर्थ्यन्तं तथा लिख्य नयेत्सुधीः  १०५
पूर्वयुक्ताक्षराणं चाधस्ताच्चाक्षरं ततः
पद्मपीठसमायुक्तं हस्तिं च चुलुकासनम्  १०६
चक्रबीजं च मूलं च मन्त्रमेकादशं प्रति
ईशानादीनि सद्यान्तं मूर्धात्पादान्तकं न्यसेत्  १०७
हृदादि नेत्रास्त्रान्तं स्व स्व स्थानेषु विन्यसेत्
देवीनां च विशेषेण स्त्रीलिङ्गान्तं नियोजयेत्  १०८
प्रणवादि नमोऽन्तानि स्वस्वबीजसमन्वितम्
हृदादीनि षडङ्गानि न्यस्त्वा मन्त्रशुचिर्भवेत्  १०९
प्रणवाम्बरसंयुक्तं कामबीजेन बन्धयुक्
दशाक्षरार्णादारभ्य जपेन्मूलेन देशिकः  ११०
मन्त्ररूपं तु सर्वेषां स्व स्व प्राण प्रतिष्ठया
आचार्यो भावयेत्पूर्वं द्वितीयं हृदयाम्बुजे  १११
तृतीयं कुम्भमध्ये तु तस्याङ्गे तु चतुर्थकम्
पञ्चमं योजयेद्बिम्बे तद्रूपं ध्यापयेत्क्रमात्  ११२
आचार्यहृदि पद्मोर्ध्वे ध्यापयेत्तु विशेषतः
देव्युक्तं पूर्ववारोक्तं हृदाङ्गुल्या स्पृशन्नयेत्  ११३

हृदये स्थापितान्देवान्कुम्भाम्भोरुहमध्यमे
पद्माज्जिह्वां पदां गत्वा हस्तयोः पद्मरूपयोः
गन्धपुष्पैश्च संस्थाप्य कुम्भाम्भोरुहमध्यमे
देवीनां स्थापने देवी स्वर्णस्योत्पलमध्यमे
देव्यास्तु परिवाराश्च स्वस्वकुम्भेषु विन्यसेत्
सामके जेतु विशेषोऽस्ति बिम्बात्कुम्भेषु विन्यसेत्
यात्राहोमं हुनेत्पूर्वे पञ्चाङ्गाश्रयगान् ग्रहान् ११४
स्व स्व नाम्ना क्रमाद्धुत्वा समित्पुष्पं घृतं चरुम्
नालिकेरं च शिरसा शिखया त्वाम्रपत्रकम् ११५
अम्बरं गन्धपुष्पं च स्व स्व बीजेन बुद्धिमान्
पश्चान्मन्त्रस्वरूपं तु कुम्भन्यस्त्वा यथाक्रमम् ११६
देहे तु प्रणवं कुम्भे ध्येयं मन्त्रस्वरूपकम्
मन्त्ररूपं तु यत्सर्वं वस्तुरूपं शिवप्रिये ११७
सर्वेषां च षडध्वात्मा तस्य प्राणः परश्शिवः
अध्वन्यासोक्तवत्स्थाप्य अग्निकार्योक्तमुत्तमम् ११८
कुम्भे सदाशिवं स्थाप्य वर्धन्यां तु मनोन्मनीम्
आवृताष्टघटे चैव अष्टविद्येश्वरान् क्रमात् ११९
मन्त्ररूपं च बीजं च मूलं च ध्यानमेव च
एवं सदाशिवं न्यस्त्वा देव्युक्तं परिवारकैः १२०
नैवेद्य धूपदीपं च उपचाराणि संयजेत्
अर्चयित्वा यथान्यायं जपेन्मूलं शिवप्रिये १२१
दर्शयेदब्जमुद्रां च सुरभिं मुकुलं तथा
दिग्बन्धं चावकुण्ठं च अस्त्रमुद्रां प्रदर्शयेत् १२२
नैवेद्यधूपदीपादीन्युपचाराणि कारयेत्
वेदकुम्भं चतुर्दिक्षु स्थापयेद्वेदपारगान्
होमकर्म समारभ्य चाचार्यो मूर्तिपैस्सह १२३

आचार्यानुज्ञया सर्वे होमं कुर्युश्च मूर्तिपाः
प्रधान देशिकं हुत्वा अन्यकुण्डेषु मूर्तिपैः १२४
अग्न्याधानादिकं सर्वमग्निकार्योक्तमार्गतः
पञ्चार्णं च नवार्णं च दशार्णं चैव देशिकः १२५
बिल्वाश्वत्थसमिद्धुत्वा क्रमात्तद्वर्णसंख्यया
पलाशोदुम्बराश्वत्थवटं पूर्वादिदिक्षु वै १२६
शमीखादिरबिल्वार्कमाग्नेयादिविदिक्षु वै
प्रधाने तु पलाशं च सर्वेषां होममाचरेत् १२७
समिदाज्यचरूल्लाजान् तिलसिद्धार्थकान्यवान्
माषमुद्गं च शालिं च सक्तुमेकादशं हुनेत् १२८
ईशानादीनि चास्त्रान्तस्वस्वबीजेन होमयेत्
शक्तीनां होमके मन्त्री स्त्रीलिङ्गान्तानि योजयेत् १२९
तत्तद्देवस्य गायत्र्या सप्तसंख्या हुनद्घृतम्
क्षीरैर्गुळैः फलैः पत्रैः पुष्पैश्चैव हुनेत्ततः
द्रव्यं प्रति विशेषेण मूलमन्त्रं हुनेत्क्रमात् १३०
द्रव्यान्ते व्याहृतिं हुत्वा सहस्रं वार्धमेव वा
अष्टोत्तरशतं चैवाथवा होममाचरेत् १३२
ततः स्पर्शाहुतिं हुत्वा इष्टसंख्येन बुद्धिमान्
कुम्भे स्पर्शाहुतिं हुत्वा स्पृष्ट्वा जप्त्वा च बुद्धिमान्
देशिकश्शिल्पिभिस्सार्धं गर्भगेहं प्रवेशयेत् १३३
मध्यसूत्रे न्यसेद्धीमान् पीठविस्तारसूत्रकम्
न्यस्त्वा प्रागुदग्ग्राणि तन्मध्ये विन्यसेच्छिवम् १३४
कूर्मशिलावटे शोध्ये प्रोक्षयेत्पुरुषेण तु
पश्चाच्छिल्पिं विसृज्यैव स्नानादिसर्वमाचरेत् १३५
सकलीकरणं कृत्वा प्रोक्षयेत्पञ्चगव्यकैः
स्व स्व बीजेन मूलेन स्वर्णरत्नं सुपूजयेत् १३६

अवटेषु न्यसेद्बीजं प्रणवास्त्रं प्रति प्रति
कूर्मं वा पद्मपुष्पं वा तत्तद्वाहनमेव वा १३७
तन्मध्ये विन्यसेद्धीमान् पद्मरागेन संयुतम्
वज्रं मरतकं नीलं पुष्परागं प्रवालकम् १३८
मौक्तिकं चैव वैडूर्यं गोमेदं च दिशि क्रमात्
परिवारे तु बीजैश्च विन्यसेत्तु यथाक्रमम् १३९
धेनुमुद्रां प्रदर्श्याथ नववस्त्रेण वेष्टयेत्
देशिकं तु यजेत्पश्चात् दक्षिणां दापयेत्सुधीः १४०
क्षेत्रं गां स्वर्णवस्त्रांश्च वृषमाभरणादिकम्
देशिकस्य ददेत्कर्तुमनस्यैव प्रियावहम् १४१
मूर्तिपादौ ददेत्कर्ता मनस्येवं प्रियावहम्
मूर्तिपानां ततो दत्त्वा सुप्रीतार्थं तु दक्षिणाम्
समुहूर्तस्य पूर्वे तु सर्वातोद्यसमन्वितम् १४२
शङ्खध्वनिसमायुक्तं वाद्यघोषसमन्वितम्
धूपदीपसमायुक्तं छत्रचामरसंयुतम् १४३
उद्धृत्य शयनालिङ्गं पिण्डकया समन्वितम्
घृतं शिरोऽर्पणं कुर्याद्धेमदूर्वाङ्कुराक्षतैः १४४
रत्नसिह्मासने वापि शिबिकारज्जुयन्त्रके
धामप्रदक्षिणं कृत्वा द्वारे दत्त्वाम्बु पाद्यकम् १४५
सुस्थिते सुस्थिरे लग्ने स्थाप्य द्वाराभिसंमुखम्
नन्द्यावर्तशिलां योज्य पीठं पश्चात्प्रवेशयेत् १४६
लिङ्गोर्ध्वाद्योजयेत्पीठं योजयेत्तु शनैश्शनैः
स्व स्व मूलेन संयोज्य वालुकाभिः प्रपूर्य च १४७
लिङ्गमूर्ध्नि च संस्पर्शेत्सव्यहस्ताङ्गुलित्रयम्
स्थाप्य चन्द्रार्कवत्तिष्ठ दशबीजं जपेद्दश १४८
लाक्षासर्जरपाषाण मधूच्छिष्टं च गुग्गुलुम्

शङ्खधूलिं गुलं चैव महिषाज्येन संयुतम्  १४९
गुलवट्टाडयेद्धीमान् लूखले मुसलेन तु
त्रयम्बकेन मन्त्रेण बन्धयेदष्टबन्धनम्  १५०
त्रिबन्धं बालबिम्बस्य अथवा मृरामयं सुधीः
पूर्वोक्त विधिना चैव बेरशुद्धिं समाचरेत्  १५१
एवं क्रमेण विधिवत् षडध्वन्यासमाचरेत्
ततः कुम्भाभिषेकार्थं रक्षासूत्रं तु धारयेत्  १५२
लिङ्गं च पिण्डिकां कृत्वा गन्धपुष्पावगाहनम्
श्वेतवस्त्रेण संवेष्टय दिग्बन्धं चास्त्रमन्त्रतः  १५३
कुण्डस्थानं समाश्रित्य पूर्ववत्परिषेचयेत्
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धनेत्  १५४
पूर्णाहुतिं च शिरसा हुत्वा कुम्भे च योजयेत्
नैवेद्यधूपदीपादीन्युपचाराणि योजयेत्  १५५
उद्धृत्य शिरसावाह्य शिवकुम्भं च देशिकः
अन्यकुम्भान् समादाय मूर्तिपाश्शिरसा वहेत्  १५६
सर्वातोद्यसमायुक्तं कृत्वा धामप्रदक्षिणम्
लिङ्गाग्रे विन्यसेत्कुम्भान् क्रमेण पादिकोपरि  १५७
श्रुतिकुम्भान् गृहीत्वा तु स्नापयेत्परमेश्वरम्
सुमुहूर्ते विशेषेण न्यसेन्मन्त्रस्वरूपकम्  १५८
धूपदीपं समाश्रित्य यजेन्नीराजनादिभिः
अर्चयेद्गन्धपुष्पैश्च कल्पयेत्पद्मासनम्  १५९
मन्त्ररूपं समादाय कुम्भाद्बिम्बे सुयोजयेत्
कुम्भाम्भोरुहमध्याच्च बिम्बस्य हृदि पद्मके  १६०
न्यस्त्वा वस्तुमयं बीजं प्रोक्ष्य मन्त्ररूपकम्
बिम्बमूर्ध्नि समापूर्य साङ्गं मन्त्रस्वरूपकम्  १६१
कुम्भतोयाभिषेकेन इष्टनामं तु कल्पयेत्

तस्य वामे तु विन्यस्य वर्धन्याश्च मनोन्मनीम् १६२
बीजान्विद्येश्वराणां च आवृतान्विन्यसेद्बुधः
मूलेन विन्यसेद्धीमान् कुम्भैः स्नात्वार्चयेत्क्रमात् १६३
पायसान्नादि नैवेद्यं पञ्चवक्त्रे निवेदयेत्
ताम्बूलं दापयेत्पश्चादुपचारैश्च संयजेत् १६४
एवं यः स्थापयेल्लिङ्गं स पुण्यां गतिमाप्नुयात् १६५
इति चिन्त्यशास्त्रे लिङ्गस्थापनविधिर्नाम विंशतिः पटलः

अर्धनारीश्वरवाख्यस्वामः

रुद्ररूपं सदारौद्रं माज्ञासिद्धिप्रदं शुभम्
सौररूपं सदानार्यास्तस्ताद्वित्वं विधीयते १
आज्ञाकार्यश्शक्तिशमकरि सदा ------
तस्मात्सरान्द्र सौच्य सौसामर्धनीश्वरं पदम् २
देवस्व वामदेवीतामेकचित्तः प्रसूधिः
गुरुपूजां प्रकृत्वा तु अर्धनारीश्वरं यजेत् ३
क्रव्येरक्तनिभाकारं श्यामलाभं त्व वामकम्
पद्मासन स्थितौ देवे चार्धाश्शिकविनेत्रका ४
ललाट नयने देवामक्षेणमनौपमम्
दशहस्ति समोपेत मकुट द्व द्व मूषितम् ५
देवस्य भागे षणमुद्रां पञ्चमुद्रां तु वामके
पञ्चमुद्रा समायुक्ता शिरोमाला समन्वितम् ६
कपालं कुकूटपीठं च फलं चैवापसव्यके
खड्वाङ्गं च त्रिशूलं च अक्षमाला शिवात्मकम् ७
निंवद्य हस्तमेकं तु दासनं सव्यबाहुभिः
द्वौ हस्तौ गजकर्मेव सारश्चेदद्ध बाहुका ८
एवं ध्यात्वा विशेषेण पूजयेद्गन्ध पुष्पकैः

मूलमन्त्रं जपध्यान कर्तव्यं तत्त्वसिद्धिदम् ९
वश्यमाकर्षणं चैव पुभोगं तथैव च
अतीतानागतज्ञानं वर्तमानं हरणैव च १०
भूमित्यागं तथा वेशम्मेधवित्वं प्रभाविताम्
मगड ---- द्राश्च देवगरुड किन्नरा ११
राक्षसाश्च सुरा यक्षाः किंकुर्वाण द्विधीपतम्
सर्वज्ञतां लभेत्तत्वं विश्वमारजयं लभेत् १२
इति चिन्त्यशास्त्रे सहस्त्रग्रन्थे अर्धनारीश्वरमेकविंशति पटलः

## मासपूजाविधिः

अतः परं प्रवक्ष्यामि मासपूजाविधिक्रमम्
धर्मादिमोक्षपर्यन्त चतुर्वर्गफलप्रदम् १
मासपूजां विनान्यैश्च पूजनैर्निष्फलं भवेत्
प्रजावृद्धिकरं नृणां राज्ञां विजयवर्धनम्
न कुर्याच्चेत्तु मोहेन सर्वदोषकरं भवेत्
तस्मात्सर्वप्रयत्नेन कर्तव्यं मासपूजनम्
नित्यपूजावसाने तु नैमित्तिकमथाचरेत्
पुष्यमासादिसंयुक्तं मार्गशार्षकमन्तकम्
पुष्यस्य पुष्यनक्षत्रे दापयेद्गन्धमुत्तमम्
माघस्य माघनक्षत्रे दापयेद्धृतकम्बलम् २
कम्बलं गोघृतोपेतं घृतकम्बलनाम तत्
कम्बलं रोमजं प्रोक्तं गोघृतेन समन्वितम् ३
गोघृतं च जले योज्य चोद्धृत्य कम्बलान्वितम्
माघमास्य तु तदृक्षे घृतकम्बळमेव च ४
फाल्गुने चोत्तरे ऋक्षे कालपुष्पाणि दापयेत्
चैत्रायां चैत्रनक्षत्रे दान्तं चैव तु विन्यसेत् ५

ज्येष्ठायां मूलनक्षत्रे विन्यसेत्तु फलानि च
विष्णु ऋक्षादिनक्षत्रे कार्पासेनैव तन्तुना
श्रावण्यां विष्णुनक्षत्रे तिलं चैव तु दापयेत्
तिलं चैव विशेषेण शुद्धतैलसुमिश्रितम्
श्रविष्ठात्याज्यनक्षत्रे कन्यामासस्य बुद्धिमान्
लाजं च क्षौद्रसंमिश्रं विन्यसेल्लिङ्गपीठयोः
वैशाखाया विशाखेऽर्क्षे चक्षुञ्चेव तु विन्यसेत्
अन्नं प्राणात्मकं श्रेष्ठं सर्वजन्तु प्रतिष्ठितम् ६
अन्नरूपं विशेषं तु मम रूपं द्विधा स्मृतम्
अन्नपूजापरं श्रेष्ठं न भूतं न भविष्यति ७
तस्मात्सर्वप्रयत्नेन अन्नपूजां समाचरेत्
ज्येष्ठाया मूलनक्षत्रे विन्यसेत्तु फलानि च ८
ज्येष्ठमासान्त्यमासस्य विन्यसेत्तु पवित्रकम्
अन्यमासस्य चाश्विन्यां सर्पीं चैव तु विन्यसेत्
सर्पिं ऐव जले योज्य यदि चिक्कणवद्भवेत् १२
आश्विमासस्य चाश्विन्यां सर्पिश्चैव तु विन्यसेत्
कार्तिक्यां कृत्तिका ऋक्षे दीपपूजां समाचरेत्
उक्ताश्च दीपपूजाया दीपवृक्षोक्तदारवः
दारुवर्गोक्तवृक्षेषु वृत्तं वा चतुरश्रकम्
द्वारार्धं च त्रिपादं वा द्वारोत्सेधमथापि वा
पीठबाह्ये तु परितो विनसेत्तु क्रमेण तु
दारुं प्रति विशेषेण त्रित्रिवृत्तं प्रकारयेत् १३
दारवश्च त्रिभागश्च तत्त्रिभागसमन्विताः
प्रतिचक्रेऽर्कदारुश्च भानुदीपं तथा क्रमात् १४
कुडबं कुडबार्धं च दीपं प्रति सुयोजयेत्
दापयेत्तु विशेषेण दीपाधाराणि लोहजैः १५

सायं पूर्वे तु निश्चित्य अङ्कुराएयर्पयेद्बुधः
ज्वालोपेतं च तद्दीपं एकमेकं तु विन्यसेत्  १६
मार्गशीर्षकमासस्य आर्द्राऋृक्षे तु विन्यसेत्
कुङ्कुमं चैव विधिवद्धिमतोयेन मिश्रितम्  १७
सर्वमासेषु कर्तव्यमार्द्रर्क्षे तु विशेषतः
एवं सर्वं समापाद्य पूजानियम उच्यते  १८
प्रातस्सन्ध्यावसाने तु मासपूजां समाचरेत्
प्रातस्सन्ध्यार्चना चैव त्रिपादेन त्रिनाडिका  १९
मासपूजा विनस्यैव उपसन्धिस्त्रिपादिका
देशिकस्नापयित्वैव नववस्त्रेण वेष्टायेत्  २०
सन्धार्य चोत्तरीयं च उष्णीशं बन्धयेद्बुधः
पुण्याहं वाचयित्वैव पञ्चगव्यं च साधयेत्  २१
पञ्चामृतं ततः स्नाप्य नीराजनमथाचरेत्
अष्टोत्तरशतं चैव स्नपनं होममाचरेत्  २२
हैमे वा राजते ताम्रे द्रव्याणि च प्रविन्यसेत्
विन्यस्य वस्त्रकं न्यस्त्वा संपातं च प्रदापयेत्  २३
द्रव्याणि तत्तदुक्तानि रुद्रशाङ्करमन्त्रकैः
स्थूलपञ्चाक्षरं प्रोक्तं शाङ्करैर्मन्त्रकं ददेत्  २४
श्रीरुद्रं पञ्चशान्तिं च घोषशान्तिं जपेत्ततः
द्वारपूजां ततः कृत्वा गर्भगेहं प्रवेशयेत्  २५
अभिषेकक्रमं कृत्वा द्रव्यं वस्त्रं च विन्यसेत्
द्रव्ययोजनकाले तु दीपं चैव विशेषतः  २६
परितो दीपमारोप्य पूर्वादीशान्तमेव च
प्रदक्षिणक्रमेणैव दीपमारोपयेत्ततः  २७
पायसं चैव शुद्धान्नं व्यञ्जनं च यथाक्रमम्
ताम्बूलं दापयित्वैवं मुखवासं ददेद्गुरुः  २८

धूपदीपादिकं दत्त्वा नृत्तगीतादि कारयेत्
ग्राचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः २६
भक्तानां परिचाराणां यथाशक्ति च दक्षिणाम् ३०
पुष्यादिगन्धैर्घृतकम्बळैश्च पुष्पैश्च दान्तैश्चरुपूजनैश्च ।
फलैः पवित्रैस्तिललाजसर्पिर्दीपैस्तथा कुङ्कमपूजनेन ३१
इति चिन्त्यशास्त्रे मासपूजाविधिर्नाम द्वाविंशति पटलः

## मार्गशीर्ष पूजा

ग्रतः परं प्रवक्ष्यामि यजनं मार्गशीर्षके
तन्मासस्य फलं पूजा चान्यमासेषु दुर्लभम् १
देवी परश्शिवं कामी नव शक्त्यादिसंयुता
निशान्ते चान्त्ययामे तु शिवस्य व्रतमाचरेत् २
तस्मात्सदाशिवे वस्तु यं सहस्रं तु सम्भवेत्
व्रतपूर्णे तु संप्राप्य ददेत्सायुज्यसंपदम् ३
तयोः प्रीतिव्रतं तस्मादन्त्ययामे तु मासितः
यावत्पूजां समाश्रित्य सर्वकामफलप्रदम् ४
प्रातःपूजामिदं प्रोक्तं नक्षत्रयजनं शृणु
ग्रार्द्राक्षं शम्भुनक्षत्रं तद्रक्षं व्रतनायकम् ५
पुरा काले शिवं काम्यं गिरिकन्याश्रितं व्रतः
भविष्ये लोकरक्षार्थं होमौ गच्छेच्छिवं त्रिधा ६
शमीरुत्तरकोशास्त्री पुरे तत्र निकेतनम्
वसेत्काले तपो भित्त्वा विप्रियां पुम्मजायते ७
कन्यानिर्वतिमाश्रित्य डोलारोहणसंयुतम्
व्रतपूर्णे शिवं प्राप्य तत्स्त्रियं पाणि सङ्गहेत् ८
भवस्य च व्रतं तस्माच्छिरोऽब्दं तु प्रतिप्रति
यावत्कृत्वा व्रतं लोके सर्वकामफलप्रदम् ९

कन्यायां च चरेद्देवी भर्तृलोके महीयते
पूर्णयुक्तमयुक्तं वा आर्द्रर्क्षमष्टनाडियुत् १०
तद्दिने व्रतमाश्रित्य विधिकर्मोत्तमोत्तमम्
अष्टनाडिक्षये चैव व्रतं पूर्वदिने चरेत् ११
एकमासि द्विनक्षत्रे व्रतमन्त्यदिने चरेत्
आर्द्र ऋक्षस्य तत्पूर्वे शतभियुक्त युक्तके १२
दिनं च दशमे तस्मिन् क्रमेण व्रतमाचरेत्
वीरशक्त्यां समाश्रित्य चरेत्प्रत्योक्त वाम्बिका १३
अथवा भोगशक्त्याश्च क्रमेण व्रतमाचरेत्
व्रतस्य सूतकं प्रोक्तं क्रमाच्छ्रुत्वाङ्कुरादयः १४
व्रताङ्कुरार्पणं पूर्वं रक्षासूत्रं द्वितीयकम्
विघ्नेशयजनं पश्चात् चतुर्थं व्रतपञ्चकम् १५
भक्तसम्भावनं पश्चात् द्रव्यस्नानं तु षष्ठकम्
शिवशक्तिमहेशानां यजनं सप्तमं भवेत् १६
अष्टमं देविकायानं नवमं रात्रिचूर्णकम्
दशमं तीर्थसंस्नानं दीपमेकादशं भवेत् १७
द्वादशं शिवयानं च पूरकर्म त्रयोदश
व्रतकानामन्तकं पश्चा ड्डोलामारोहणं ततः १८
प्रभूतहविषं पश्चादेते कर्म च षोडश
तत्तत्तन्त्रान्तरे देव्याष्षोडशार्णं हृदि न्यसेत् १९
अङ्कुरादिक्रमं प्रोक्तं कृत्वा कौतुकबन्धनम्
उत्तमं मध्यमं चैव अधिवासं द्विधा भवेत् २०
उत्तमं वसुनक्षत्रं मध्यमं मृगशीर्षकम्
वसु ऋक्षे च सायाह्ने सर्वालङ्कारसंयुते २१
तैलैश्चामलकैर्गव्यै रजनीभिरभिषेचयेत्
नववस्त्रैश्च सन्धार्य सर्वाभरणभूषिताम् २२

गन्ध चन्दन लिप्ताङ्गां पुष्पमाल्यैरलङ्कृताम्
न्यस्त्वा तां मण्टपे देवी शाल्युप्ततण्डुलोपरि २३
गणेशपूजनं कृत्वा पुण्याहं वाचयेत्ततः
शान्तिकुम्भं तु देव्यग्रे तदग्रे होममाचरेत् २४
अग्निकार्योक्तमार्गेण पूर्वोक्तविधिनाचरेत्
अग्निमध्ये तु तां देवीं ध्यायेत्पूर्वोक्तवत्सुधीः २५
अग्नेः कुम्भे समावाह्य देव्याश्च मूलमन्त्रतः
नैवेद्यं धूपदीपं च नृत्तगीतसमन्वितम् २६
स्थालिके तण्डुलोर्ध्वे तु रक्षासूत्रं प्रविन्यसेत्
परिधानोत्तरीयोक्तं कृत्वा सूत्रमलङ्कृतम् २७
परिचारकमूर्ध्न्यैव कृत्वा धामप्रदक्षिणम्
देव्यग्रे तु प्रविश्याथ शुद्धिपुण्याहमाचरेत् २८
त्रयम्बकेन मन्त्रेण भस्मान्तं धारयेत्सुधीः
गौरीं चैव घटं चैव नववस्त्रेण वेष्टयेत् २९
अपरेऽह्नि दिवा पूज्य देवीं चैव फलादिभिः
अधिवासमिदं प्रोक्तं विघ्नेशयजनं शृणु ३०
व्रतारम्भदिने रात्रौ शतयुक्तमयुक्तके
विघ्नेशयजनं रात्रौ चरेत्पूजावसानके ३१
गणेशस्थानमाश्रित्य वस्त्राभरणभूषितम्
गन्धमाल्यैरलङ्कृत्य अर्चयेत्तु यथाविधि ३२
पायसं गुलसम्मिश्रं मोदकं मुद्गसंयुतम्
अपूपं नालिकेरं च कदलीं चेक्षुखण्डकम् ३३
लाजद्विविधसंयुक्तं तिलमाषं कुलुत्थकम्
इत्यादिद्रव्यकैश्चैव पूजयेत्तु गणाधिपम् ३४
विघ्नेशयजनं प्रोक्तं व्रतारम्भं ततः शृणु
विधिवद्विघ्नराजस्य कृत्वा पूजावसानके ३५

देव्यग्रे तु सुखासीनः देशिको ब्राह्मणैश्चरेत्
व्रतकर्म तु संकल्प्यं यथा तन्त्रोक्तवत्सुधीः ३६
पुण्याहं पञ्चगव्यं च स्थापयेत्तु यथाविधि
स्थापयेद्व्रतदेवीं च नववस्त्रेण धारयेत् ३७
सर्वाभरणकैर्भूष्य गन्धमाल्यैरलङ्कृतम्
पूर्ववन्मण्टपे स्थाप्य शाल्युप्ततण्डुलोपरि ३८
अर्चयित्वा विधानेन गन्धपुष्पादिभिस्सह
प्रणवार्घ्यजलं प्रोन्दय देव्यास्तु शिरसोपरि ३९
भर्गोदेवोक्तगायत्रीमन्त्रेण प्रोन्दयेत्त्रिधा
देशिकः शिवगायत्रीं जप्त्वा तु दशसंख्यया ४०
पायसान्नमपूपं च ताम्बूलं च निवेदयेत्
धूपदीपं हृदा दत्वा नृत्तगीतसमन्वितम् ४१
व्रतगानश्रावणार्थं भक्तमाहूय सन्निधौ
व्रतारम्भमिदं प्रोक्तं भक्तगानमिदं शृणु ४२
श्रीमद्वातपुरे जातं भक्तं देव्यग्रकेऽपि वा
शिवाग्रेऽपि विशेषोऽस्ति हस्ते पुस्तकसंयुतम् ४३
नैवेद्यधूपदीपं च ताम्बूलं च ददेदपि
स्वर्णमालादिभिर्भूष्य धारयेत्पट्टबन्धनम् ४४
ददेत्समीपं पश्चात्तत्सर्वान् ग्राह्य च भक्तकान्
अनुज्ञार्थं मोऽट्टशब्दं लघुत्वं गानयेत्क्रमात् ४५
गानान्ते दापयेद्भस्म देव्यैश्च देशिकस्तथा
भक्तानां च ददेद्भस्म सर्वकामफलप्रदम् ४६
तद्भस्म सर्वभक्तेषु पट्टबन्धं प्रकाशितम्
ग्रामप्रदक्षिणं कृत्वा सर्वालङ्कार संयुतम् ४७
दिनं प्रति दशाहान्तं भक्तस्योत्सवमुत्तमम्
द्विकालमुत्तमं यानमेककालं तु मध्यमम् ४८

देव्यग्रे सेवितं यानं कन्यसं तु प्रकीर्तितम्
भक्तसम्भावनं प्रोक्तं द्रव्यस्नानक्रमं शृणु ४९
द्वितीय दिवसे देव्या दिवा पूजावसानके
पञ्चामृतेन संस्नाप्य देवीगायत्रिमन्त्रतः ५०
पूर्ववन्मण्टपे स्थाप्य सर्वाभरणसंयुतम्
अर्चयेत्तु विधानेन गन्धमाल्यैरलङ्कृतम् ५१
भर्गो देवस्य गायत्रीमन्त्रेण प्रोक्षणं कुरु
देशिको दशसंख्येन शिवगायत्रिकां जपेत् ५२
नैवेद्यं धूपदीपं च नृत्तगीतादिभिर्यजेत्
भक्तेन गानकं पृच्छेत्पश्चाद्भस्म तु पूजयेत् ५३
तद्रात्रौ तु विशेषेण तद्देव्याः स्नानकं नयेत्
अन्यानि सर्वकर्मानि दिवि पूर्वोक्तवच्चरेत् ५४
द्वितीयतद्दिनोक्तं च नवाहान्तं दिनं प्रति
देव्याश्च यजनं कृत्वा द्रव्यभेदैर्विशेषतः ५५
तृतीयदिवसे क्षीरं चतुर्थे स्नापयेद्दधिम्
पञ्चमे मधुना स्नानमिक्षुस्नानं तु षष्ठकम् ५६
सप्तमे तु फलस्नानं नालिकेरेण संयुतम्
पुष्पाम्बुमष्टमे स्नाप्य गन्धाम्बु नवमे दिने ५७
दशमे च दिने प्रातर्नित्यपूजावसानके
गव्यादिकं नवद्रव्यं देव्याश्चैवाभिषेचयेत् ५८
फलानि कृत्वा नैवेद्यं श्वेतवस्त्रेण वेष्टयेत्
द्रव्यस्नानमिदं प्रोक्तं शिवस्य यजनं शृणु ५९
आर्द्रायाश्च स्वनक्षत्रे पूजयेत्तु सदाशिवम्
पञ्चगव्यामृतं क्षीरं दधिसर्पि मधुस्तथा ६०
इक्षुसारफलानीव नालिकेरसमन्वितम्
पुष्पगन्धोदकैश्चैव क्रमेणैवाभिषेचयेत् ६१

अष्टोत्तरशतं वापि एकाशीतियुतं तु वा
पञ्चाशत्स्नपनं वापि स्नापयेत्तु सदाशिवम्  ६२
दापयेन्नववस्त्रेण मालां चाभरणादिभिः
गन्धकुङ्कुम पङ्कैश्च सर्वाङ्गं लेपनं कुरु  ६३
अर्चयेत्तु विधानेन पायसान्नं निवेदयेत्
तस्य शक्तिं यजेत्पश्चात् स्नपनोक्तं यथा विधि  ६४
यजनं ततः कृत्वा महेशनृत्तसुन्दरौ
गव्यादिस्नपनान्तं च क्रमेणैवाभिषेचनम्  ६५
गन्धकुङ्कुमलिप्ताङ्गौ सर्वाभरणभूषितौ
गन्धमाल्यैरलङ्कृत्य नैवेद्यैश्च यजेत्सुधीः  ६६
शिवादियजनं प्रोक्तं देव्याश्चैवोत्सवं शृणु
व्रतकौतुकदेवीं च यानार्थालङ्कृता भवेत्  ६७
धूपदीपसमायुक्तं छत्रचामरसंयुतम्
शङ्खदुन्दुभिभेरी च वाद्यघोषसमन्वितम्  ६८
नानाभक्तजनैर्युक्तं प्राकारे वा प्रदक्षिणम्
तीर्थतीरं प्रविश्याथ मण्डपे स्थापयेत्सुधीः  ६९
देवीयानमिदं प्रोक्तं रात्रिचूर्णक्रमं शृणु
देवीयानं विना कृत्वा रात्रिचूर्णं स्वयं गृहेत्  ७०
तीर्थतीरे च देव्यग्रे शालिभि स्थण्डिलं कुरु
मध्ययोश्चालिखेत्पद्मौ दर्भैः पुष्पैः परिस्तरेत्  ७१
भेरीं चोलूखलं स्थाप्य पूर्वपश्चिमयोः क्रमात्
गणेशयजनं कृत्वा पुण्याहं वाचयेत्ततः  ७२
विधिवच्चार्चयेद्भेरीं ताडयेच्चास्त्रकैस्त्रिधा
लूखलं विष्णुदैवत्यं मुसलं रुद्रमेव च  ७३
शूपं च ब्रह्मदैवत्यं स्व स्व नामभिरर्चयेत्
नव वस्त्रे च संधार्य दूर्वाकूर्चसमन्वितौ  ७४

रजनीं लूखले क्षिप्त्वा तस्योर्ध्वे मुसलं न्यसेत्
मुसलं मध्यमं स्पृश्य व्योमव्यापिं स्मरेद्गुरुः ७५
अधोमुखं तु संस्पृश्य चूर्णशब्दं तु गानयेत्
रुद्रकन्याकराद्रात्रिं चूर्णयेत्तु पृथक्पृथक् ७६
तच्चूर्णं सङ्गृहीत्वा तु अङ्कुराक्षतसंयुतम्
तैलोक्तं दापयेद्देव्या देशिकस्य तु दापयेत् ७७
तैलं शिरोऽर्पणं कृत्वा देशिकस्य तु दापयेत्
भूसुराणां च शैवानां तैलं सभोजं ददेत् ७८
गणिकागणानां दत्वा तैलं च रजनीं क्रमात्
तासां लीलारजन्यम्बु पञ्चबाणोत्सवोक्तवत् ७९
यन्त्रलीलाविनोदाय देव्यालोकनमाचरेत्
चूर्णक्रममिदं प्रोक्तं तीर्थस्नानं ततः शृणु ८०
तीर्थस्य मण्टपे स्थाप्य स्नपनं विधिवत्सुधीः
पूर्वरात्रौ संस्थाप्य तीर्थकुम्भांश्च सङ्ग्रहेत् ८१
महातीर्थतटाके तु विन्यसेद्वारिमध्यमे
अर्चयेन्नवशक्तींश्च वारिमध्याष्टदिक्षु वै ८२
सप्ततीर्थं समभ्यर्च्य धूपं दत्वा हृदाय च
पञ्चाचार्यांश्च देवीं च आधाय वारिमध्यमे ८३
त्रिःप्रकारं तु संस्नाप्य गौर्यावार्यवगाहनम्
आपो वा इति मन्त्रेण स्नापयेत्तीर्थकुम्भकम् ८४
तीरे च पूर्ववत्स्थाप्य मूलमन्त्रेण चार्चयेत्
तत्र स्थाने तु संस्थाप्य स्नपनं स्नापयेत्ततः ८५
नववस्त्रोत्तरीयं च मालाश्चाभरणादिभिः
अलं कृत्वा तु संलिप्य गन्धकुङ्कुमपङ्कजाः ८६
तीर्थस्नानमिदं प्रोक्तं दीपकर्म ततः शृणु
तीर्थान्ते शिवदीपं तु दर्शयेत्तु विशेषतः ८७

अश्वत्थतरुणा कृत्वा पात्रे वा शमिकेऽपि वा
पूगपत्राङ्घ्रिचर्मे वा कदलीपत्रकेऽपि वा ८८
स्थलिके स्थण्डिलोर्ध्वे तु तत्पात्रं विन्यसेत्सुधीः
पुण्याहगव्यैस्संप्रोक्ष्य रमां पात्रे समर्चयेत् ८९
पात्रपादं घृतं पूर्य गर्भो गायत्रिमन्त्रतः
गर्भो देवोक्तसावित्री मन्त्रेण दीपमाचरेत् ९०
दीपं तु दशबीजेन यजेदादाय देशिकः
वसुदीपान्तमारोप्य आदाय रुद्रकन्यकाः ९१
आचार्यस्तु यदा दीपं देव्याधारोक्तवद्धरेत्
देव्यैश्च दर्शयेद्दीपं स्मरेद्रूपं शिवस्य तु ९२
दशबीजं त्रिधा जप्त्वा मोचयेद्वारिणोपरि
रुद्रकन्या तदादाय दीपान् पश्चान्मुमोचयेत् ९३
दीपकर्ममिदं प्रोक्तं महेशस्योत्सवं शृणु
ब्रह्माविष्णुश्च लोकेशगणदेवऋषीश्वराः ९४
सेवार्थं च स्वनक्षत्रे यानं वा परमेश्वरम्
सर्वालङ्कारसंयुक्तं धूपदीपसमन्वितम् ९५
वेदघोषसमायुक्तं छत्रचामरसंयुतम्
ग्रामप्रदक्षिणं कृत्वा डोलाग्रे तु प्रवेशयेत् ९६
देव्याश्च व्रतपूर्णार्थं स्थित्वा तत्र महेश्वरः
महेशस्याग्रके देवीं डोलाग्रे स्थण्डिलोपरि ९७
पादुकां वाथ कूर्चं वा विन्यस्य तर्पयेच्छिवम्
महेशस्योत्सवं प्रोक्तं पूरकर्म ततः शृणु ९८
तीर्थतीरे भवानीं च सर्वालङ्कारसंयुतम्
डोलायां पश्चिमे भागे प्रविश्य विन्यसेत्सुधीः ९९
मार्जनाद्गोमयं भूमौ लेपयेच्चतुरश्रकम्
तस्मिन्स्थले समालिप्य शालिपिष्टाम्बुना सुधीः १००

मध्ये पद्मं समालिख्य अष्टद्रोणयवं क्षिपेत्
तदर्धतण्डुलं कृत्वा तिलैर्लाजैश्च शोभयेत् १०१
पद्मवच्छोभयेद्धीमान्दर्भैः पुष्पैः परिस्तरेत्
तन्मध्ये विन्यसेद्गौरीं महेशाभिमुखीं तथा १०२
कोणं प्रतिशिवं शालिमध्ये पञ्चशिवं क्षिपेत्
शिवपूर्णं तु पात्रे तु मध्ये शाल्यूर्ध्वके न्यसेत् १०३
प्रस्थप्रमाणपत्रे तु पूरयेद्विन्यसेत्सुधीः
दूर्वाक्षतान्यसेत्पात्रे श्वेतपुष्पैश्च संयुतम् १०४
लवणं रजनीं चैव तण्डुलं च यवं तिलम्
शकृच्चूर्णं क्रमेणैव प्रतिप्रस्थं तु विन्यसेत् १०५
पायसं गुलसम्मिश्रं अपूपं विन्यसेदपि
गणेशं पूजयेत्तत्र पुण्याहं कारयेत्ततः १०६
देव्याश्शिरसि मध्ये च गर्भो देवस्यमन्त्रतः
पुण्याहवमृतं प्रोक्ष्य कर्मांशं प्रोक्षणं परम् १०७
गणेशमर्चयेत्सव्ये दुर्गायामपसव्यके
वामादिशक्तयश्चाष्टौ इन्द्राद्यष्टदिशासु च १०८
मनोन्मनीं च देव्याश्च विग्रहे तु समर्चयेत्
शिवगायत्रिमन्त्रेण जपेदेकोनविंशतिम्
तत्पुष्पं दापयेद्धीमान्देवीगायत्रिसंयुतम्
द्रव्यादिदर्शनार्थं तु प्रोक्षयेद्धृदयेन तु
शिवपूर्णयवांश्चैव गायत्र्या दर्शयेद्बुधः १०९
प्रस्थपूर्णयवान्दृष्ट्वा भर्गो सावित्रिमन्त्रतः
दूर्वाक्षतैश्च शिरसि स्वयं मूलेन चार्चयेत् ११०
लवणं कण्ठदेशे तु शिवबीजं नवं स्मरेत्
रजनीं हृदये देशे स्मरेत्तु दशवर्णतः १११
तण्डुलं उदरे चैव वामदेवेन संस्पृशेत्

प्रणवेन तु संयोज्य नाभौ चैव यवं तथा  ११२
ऊर्वोश्चैव तिलं योज्य अर्घ्यं दत्त्वा विचक्षणः
पादयोस्सद्यमन्त्रेण सकुचूर्णं तु संस्पृशेत्  ११३
एवं क्रमेण संयोज्य अर्घ्यं दत्वा विचक्षणः
उमादेव्याश्च हस्ताभ्यां पानीयं त्रिः प्रदक्षिणम्  ११४
देशिकोऽपि करेणैव दद्यात्पुष्पाञ्जलित्रयम्
शिरसा वदनं कृत्वा जानुमण्डलसंयुतम्  ११५
देव्याश्चैवाष्टशक्तीनां पायसान्नं तु दर्शयेत्
अपूपं चैव ताम्बूलं क्रमेणोक्तं तु दापयेत्  ११६
मनोन्मनीं चैव देव्या विग्रहाया समर्चयेत्
शिवगायत्रिमन्त्रेण जपेदेकोन विंशतिम्  ११७
उपचाराणि सर्वाणि दापयेत्तु विचक्षणः
पूरकर्ममिदं प्रोक्तं व्रतगानं ततः शृणु  ११८
देवीपूरव्रते पूर्णे आहूय व्रतगानकम्
पायसापूप ताम्बूलं धूपदीपान् क्रेददेत्  ११९
आर्द्रायां व्रतगानं च क्रमात्पृच्छे महेश्वरीम्
डोलागानस्य च पृच्छार्थं देव्याश्चैव प्रसादनात्  १२०
पुनर्डोलाग्रके भक्तान्शैवान्सर्वान्प्रवेशयेत्
ततश्चैवान्यभक्तेषु गानां पृच्छ्य शिवप्रियाम्  १२१
व्रतगानान्तकं चोक्तं डोलाया रोहणं शृणु
देव्याः स्वतन्त्रधामाग्रे आश्रयां च शिवाग्रके  १२२
डोलस्थानमिदं स्थाप्य लक्षणोक्तं तु कारयेत्
स्तम्भात्स्तम्भान्तरं तारं द्वयदीर्घ त्रिहस्तकम्  १२३
पञ्चसप्तनवं वापि एकादश त्रयोदशम्
हस्तं पञ्चदशं वापि क्रमाद्धस्तार्ध संयुतम्  १२४
एवं भूतगतं दीर्घं रज्जुविष्टावसानकम्

ऊर्ध्वोऽलङ्कारविष्टं तु चक्षुर्मानेन कारयेत् १२५
स्तम्भे स्तूपियुतं वापि मध्ये स्थूपियुतं तु वा
शालाकारसमं कृत्वा चित्रवस्त्रैरलङ्कृतम् १२६
स्वर्णरत्नैश्च दामैश्च पुष्पैः पत्रैः फलादिभिः
अलंकृत्वा विशेषेण कदलीपूगसंयुतम् १२७
विष्टायां बद्धरज्जौ च हंसे डोलां च बन्धयेत्
पुण्याहामृतकैः प्रोक्ष्य अर्चयेत्तु विशेषतः १२८
याम्यस्तम्भे विधातारं सौम्ये चक्रायुधं यजेत्
पृष्ठे च रुद्रमभ्यर्च्य डोलायास्तोरणे शिवम् १२९
डोलाहंसे समभ्यर्च्य क्रमेण नवशक्तयः
सायंकाले सुलग्ने तु डोलायां परमेश्वरीम् १३०
रोहणं कारयेदीशं श्राव्य डोलाय गानकम्
गानान्ते दापयेद्भस्मं शिवमालोक्य चाज्ञया १३१
सर्वालङ्कारसंयुक्ता नृत्तगीतसमन्वितम्
ग्रामप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति १३२
महेशं चैव भक्तं च स्वस्थानं तु प्रवेशयेत्
डोलायां रोहणं प्रोक्तं प्रभूतहविषं शृणु १३३
नास्ति नास्ति शिवस्यापि प्रभूतहविषस्समम्
हविषां चान्नदाता यो मनोपूर्णफलं लभेत् १३४
अनेकव्यञ्जनं सर्पिर्दधिक्षीरगुलं फलम्
सर्वान्नं तत्समं भक्ष्यान् प्रभूतहविषं ददेत् १३५
सर्वेषां च निवेद्याथ धूपदीपादिभिर्यजेत्
प्रभूतहविषं प्रोक्तं व्रतान् श्रुत्वोत्तमादिकान् १३६
शिवोत्सवं समाश्रित्य देव्याश्च व्रतमुत्तमम्
एवमेव समाश्रित्य व्रतं देव्यास्त्वथोत्तमम् १३७
समये कौतुकं बध्वा तद्दिनान्तं समाचरेत्

तद्व्रतं कन्यसं प्रोक्तं सर्वकामफलप्रदम्  १३८
इति चिन्त्यशास्त्रे मार्गशीर्षमासपूजाविधिर्नाम त्रयोविंशत्पटलः

## विषुवायनपूजै

अतः परं प्रवक्ष्यामि विषुवायनपूजनम्
सर्वाश्च वायुसंख्याभिर्नित्यपूजां चरेच्छिवे  १
पुरुहुतसुराणां च दिव्याश्चैवोत्तरायणम्
दक्षिणायनकं रात्रिर्मृगकर्क्यादितः क्रमात्  २
भानुवृत्तदिनं तस्मात्तन्त्रिंशन्मासिकं भवेत्
मासं भानुगुणं चाब्दं तच्छतं दैवमायुषम्  ३
भूर्भुवस्सुवर्महर्जनतपस्सत्य च सप्तसु
लोकेषु स्व स्व देवानामायुस्संख्याक्रमं शृणु  ४
भूलोकं च सुरायुश्च तत्समं द्विगुणं तथा
त्रिगुणं च चतुःपञ्चषड्गुणं च क्रमेण तु  ५
भूर्भुवस्वादिसत्यान्तलोकेषु च सुनरायुषाः
तेषु लोकं मुनीनां च सत्यलोकसुरायुषम्  ६
द्विगुणं च चतुर्गुण्यं षड्गुणं गुणमष्टकम्
विंशतिश्च चतुर्गुण्यं अष्टोत्तरचतुश्शतम्  ७
कलिद्वापरत्रेतायां कृतेति युगमौनयः
तस्माच्चत्वार्युगायुद्रोमशस्यायुषं क्रमात्  ८
रोमश्चायुर्वसुगुणमष्टावक्रायुषं क्रमात्
कल्यब्दं कोटिगुण्यं च वसिष्ठस्यायुसंख्यकम्  ९
द्वापराब्दं तु शङ्खघ्नं काश्यपब्रह्मणायुषम्
त्रेताब्दमरविन्दघ्नमायुषं तु शतक्रतोः
पद्मेनैव कृताब्दघ्नं पद्मजब्रह्मणायुषम्
चत्वार्युगसमुद्रघ्नं चक्रपाणिनमायुषम्

अष्टावकायु पाद्यघ्नं हरं प्रलय तारडवम्  १०
वसिष्टायुं परं गुरयं तन्महेशासु संख्यया
काश्यपायु परार्थघ्नः परार्थ लिङ्गायु संख्यया  ११
लीयन्ते सर्व तत्त्वानि गम्यन्ते तु गकारकः
लयनाद्गमनात्तस्माल्लिङ्गमित्यभिधीयते  १२
लिङ्गकल्पान्तरे देवी पृथिव्यां च महेश्वरी
प्रलयं अग्निना दग्धं महावातप्रकोपनम्  १३
सर्वे च सर्वतत्त्वात्मा शिव सायुज्यमाप्नुयात्
सर्व संहारकाले तु लिङ्गकल्पान्तरं भवेत्  १४
शिवस्य रात्रिकालेति लिङ्गकल्पान्तरं दिवा  १५
दिवा रात्रौ मन्त्रवाक्यं नास्ति नास्ति शिवस्य च
तद्दिनस्य तु संख्यया शतसंवत्सरान्तरे  १६
मन्त्ररूपं क्रमेरौव शुक्लज्योतिर्भवेच्छिवम्
तद्वत्तु च शताब्दैश्च रन्तज्योतिर्भवेच्छिवम्  १७
पीतज्योतिर्भवेत्पश्चात्तद्वत्संवत्सरं शतम्
कृष्णं पश्चाच्छताब्दं तु शताब्दं धूम्रकं भवेत्  १८
नास्ति नास्ति शिवस्यायुः पञ्चवर्णं पुनः पुनः
भवेत्सन्निष्कळं देहं ज्योतिर्मन्त्रस्वरूपकम्  १९
व्योमव्यापि शिवं तस्मात्पुनस्सर्वोद्भवं भवेत्
उद्भवं सर्वदेवानां स्व स्व संख्यायुषः शतम्  २०
तत्तदायुषस्संख्यया दिनं निश्चित्यते सुधीः
नित्यपूजां समाश्रित्या सर्वांश्च परमेश्वरम्  २१
भूलोके च सुरांश्चैव शिवनित्यार्चनं शृरगु
मृगलग्नोद्भवे भानुः प्रातस्सन्ध्यार्चनं भवेत्  २२
क्रियां भानौ गते काले मध्याह्नयजनं चरेत्
कर्क्यां भानौ गते काले कारयेद्रात्रिपूजनम्  २३

अर्धयाममहापूजा तुलायामर्कसङ्गते
कृत्वा नित्यार्चनं देवं शिवलिङ्गे यथा भवेत्  २४
श्रुत्वा प्रातस्तु सर्वेषां भवेत्स्वस्वायुसंख्यया
प्रातः कालं त्रिमूर्तीनां क्रियां भानौ गते भवेत्  २५
मूर्तानां च मुनीनां च प्रातर्नाम विषुद्वयम्
सुराणां लोकपालानां प्रातर्नाम द्वयायनम्  २६
तस्माद्यावच्चरेल्लोके विषुवायनपूजनम्
सर्वदेवप्रिकरं सर्वपापविनाशनम्  २७
आयुः करं पुष्टिकरं सर्वकामफलप्रदम्
संक्षेपेणाधुना वक्ष्ये पूजानां च विधि क्रमम्  २८
अयने वै व्यतिक्रान्ते विषुवाख्यं समाचरेत्
रात्रौ चैव विशेषोऽस्ति विषुवायनसङ्क्रमम्  २९
अर्धरात्रौ तदन्ते वा प्रभाते वा यजेच्छिवम्
मण्टपं तु विशेषेण गोमयेन तु लेपयेत्  ३०
गणेशं पूजयेद्धीमान् पुण्याहं वाचयेत्ततः
तैलमामलकं पिष्टं च रात्रिचूर्णं घृतं तथा  ३१
गव्यं पञ्चामृतं सर्वं विधिवत्स्थापयेत्सुधीः
नवकान्नव संख्येषु कलशेष्विष्टसंख्यया  ३२
स्थापयेत्तु विधानेन मन्त्ररूपक्रमेण तु
अर्चयेद्विघ्नराजं च द्वारपालान् प्रपूजयेत्  ३३
गर्भगेहं प्रविश्याथ लिङ्गशोधनमाचरेत्
गन्धतैलं घृतं दिव्यं क्रमेणैवाभिषेचयेत्  ३४
नालिकेर फलं पुष्पपिष्टकामलकादिभिः
घर्ष्यस्नानं तु संस्नाप्य देव्याश्च रात्रिचूर्णकम्  ३५
पञ्चामृतफलादीनि नालिकेर रसादिभिः
स्नापयेत्तु विधानेन स्थापयेच्छुद्धवारिणा  ३६

यथावत्स्थापितान्कुम्भान्स्नापयेत्तु यथा क्रमम्
मन्त्रपुष्पं समभ्यर्च्य मन्त्रान्नं तु निवेदयेत् ३७
घृतान्नं पायसान्नं च गुलमुद्गान्नमेव च
मृगमेषकुलीराश्च तौलिमासेषु कल्पयेत् ३८
कुङ्कुमं चैव कर्पूर कस्तूरी रोचनैः क्रमात्
मास्सु संलेपयेल्लिङ्गे सर्वगन्धैश्च संयुतम् ३९
पञ्चावरणमार्गेण सर्वपुष्पैस्समर्चयेत्
मृगमासि विशेषेण बिल्वकैः करवीरकैः ४०
पङ्कजोत्पलदूर्वाभिः क्रमेणैवार्चयेच्छिवम्
विघ्नराजार्चितस्तुभ्यं सदाशिव नमो नमः ४१
गाणवाभ्यर्च्यते तुभ्यं व्योमव्यापि नमो नमः
सुब्रह्मण्यार्चितस्तुभ्यं सर्वव्यापि नमो नमः ४२
सूर्यसोमार्च्यतस्तुभ्यं ज्योतिरूपाय ते नमः
गिरिकन्यार्चिते तुभ्यं हौं शिवाय नमो नमः ४३
मेषमासे विशेषार्च्यं पद्मैश्च श्वेतपङ्कैः
तुलसीविविधैश्चैव बिल्वपत्रैः क्रमेण तु ४४
प्राजापत्यार्चितस्तुभ्यं सदाशिवाय नमो नमः
चतुर्वेदार्चितस्तुभ्यं व्योमव्यापिन्नमो नमः ४५
पद्मनाभ्यर्चितस्तुभ्यं सर्वव्यापिन्नमो नमः
नारसिह्मार्चतस्तुभ्यं ज्योतिरूपाय ते नमः ४६
कारणाभ्यर्चितस्तुभ्यं हौं शिवाय नमो नमः
एवं मन्त्रार्चनं कृत्वा कर्कटे ह्यर्चनं शृणु ४७
करवीरैश्श्वेतरक्तैः कल्हारैश्चोत्पलैस्तथा
बृहती श्वेतपुष्पैश्च अर्चयेत्तु विशेषतः ४८
ओं द्रां हां इन्द्रार्चितस्तुभ्यं सदाशिवाय नमो नमः
ओं द्रां हां अग्निर्यर्चितस्तुभ्यं व्योमव्यापिन्नमो नमः ४९

ओं द्रां हां यमार्चितस्तुभ्यं सर्वव्यापिन्नमो नमः
ओं द्रां हां नैर्ऋत्यर्चितस्तुभ्यं ज्योतिरूपाय नमो नमः
ओं द्रां हौं सौम्यार्चितस्तुभ्यं हौं शिवाय नमो नमः ५०
इति कर्कार्चनं प्रोक्तं तैले चैवार्चनं शृणु
बिल्वं कपित्थं निर्गुण्डी वारणं चरणं तथा ५१
पञ्चबिल्वमिदं भूत्यै विशेषार्चा क्रमेण तु
वसिष्ठेनार्चितस्तुभ्यं सदाशिवाय नमो नमः ५२
काश्यपश्यार्चितस्तुभ्यं व्योमव्यापिन्नमो नमः
अगस्त्येनार्चितस्तुभ्यं सर्वव्यापिन्नमो नमः ५३
रोमशस्यार्चितस्तुभ्यं ज्योतिरूपाय ते नमः
अष्टावक्रार्चितस्तुभ्यं हौं शिवाय नमो नमः ५४
विषुवायनकालेषु विशेषार्च्यमिदं क्रमात्
तस्मिन्विषुद्वये चैव तीर्थकार्यं प्रधानकम् ५५
अयनोक्तमानयोश्चैव तद्वत्तीर्थं तु पर्वयोः
मृगे भानुगते काले शिवदीपव्रतं चरेत् ५६
तद्व्रतं सर्वदेवानां मनुष्याणां च तारकम्
शिवप्रसादकं सौख्यमिष्टसंख्यायु वर्धनम् ५७
शेषं देव्याश्च तत्काले चरेद्भर्तृसुखावहम्
स्वस्वाग्रे तु विशेषेण शालिभिः स्थण्डिलं क्षिपेत् ५८
तन्मध्ये पद्ममालिख्य दर्भैः पुष्पैः परिस्तरेत्
गणेशं पूजयित्वा तु पुण्याहं तु समाचरेत् ५९
आज्यस्थालीं विशेषेण स्वर्णं वा रजतं तु वा
कांस्यं वा मृण्मयं वापि कालं भिन्नं विसर्जयेत् ६०
सूत्राणि वेष्टयेद्धीमान् घृतं संपूर्य तत्र वै
पञ्च प्रस्थोत्तमं प्रोक्तं तदर्धं मध्यमं भवेत् ६१
तदर्धं कन्यसं प्रोक्तं त्रिविधं परिकीर्तितम्

दीपसूत्रं तु कार्पासं विन्यसेच्छतसंख्यया ६२
गिरिकन्यार्चितस्तुभ्यं हौः शिवाय नमो नमः
इति मन्त्रेण संदीप्य दीपस्यारोहणं कुरु ६३
दीपमध्ये तु तं ध्यात्वा शिवं शान्तस्वरूपकम्
पञ्चार्णं च नवार्णं च दशबीजैश्च चार्चयेत् ६४
नवार्णं पञ्चसंख्येन जपेद्देव्या नमस्कृतम्
जपेत्पुष्पैः फलाद्यैश्च शोभयेद्दीपपार्श्वयोः ६५
देवानां चैव पत्निनां प्रभूतहविषं ददेत्
धूपदीपादिभिः पूज्य पूर्वोक्तविधिना सह ६६
सन्धिद्वयं समभ्यर्च्य दीपं घृतावसानकम्
देवीनां स्व स्व माङ्गल्यं दीपादाहूयते शिवम् ६७
नृपनायाश्रिते लोके भर्त्रायुः पुत्रवर्धनम्
विषुवायनकालेषु स्नानं यावत्समाचरेत् ६८
सर्वपापविनाशं च पुण्यतीर्थफलप्रदम्
स्व स्व मासेषु मन्त्रैश्च यावत्तर्पणमाचरेत्
ब्रह्महत्यादि दोषघ्नं सर्वदेवप्रिया भवेत् ६९
स्व स्व मासेषु मन्त्रैश्च जप्त्वा शम्भुं प्रदक्षिणम्
तत्संख्यात्रिगुणं वापि पञ्चगुणयन्तरं तु वा ७०
यथा यावच्चरेल्लोके इष्टकामार्थसाधनम्
सर्वयज्ञफलं पुण्यं शिवसायुज्यमाप्नुयात् ७१
इति चिन्त्यशास्त्रे विषुवायनपूजाविधिर्नाम चतुर्विंशति पटलः

## शिवरात्रिविधिः

अथ वक्ष्ये विशेषेण शिवरात्रिविधिक्रमम्
सर्वमासेषु कर्तव्यं माघमासे प्रशस्यते १
कृतत्रेतायुगे द्वे च द्वापरे च कलौ युगे

युगे युगे तु संपूज्य कृते किन्तु गुहो यजेत् २
ब्रह्मेन्द्र ऋषिभिश्चैव कलौ संपूजितो हरः
शिवरात्रिस्समुद्दिष्टा तद्भेदं किं वद प्रभो ३
एवं चतुर्विधं प्रोक्तं पक्षसिद्धान्तमेव हि
पूर्वसिद्धान्तमेवं स्यात् सिद्धान्तं पक्षमेव हि ४
परसिद्धान्तमेवं हि तद्भेदं शृणु सुव्रत
एकमासे द्विपक्षे तु अधिके व्रतमाचरेत् ५
उदयादि समारभ्य दीपान्तं च त्रयोदिशी
अस्तमानं समारभ्य उदयान्तं चतुर्दशी ६
तद्रात्रिश्शिवरात्रिः स्यादुत्तमोत्तममिष्यते
एतत्तु पक्षसिद्धान्तं मम प्रीतिकरं भवेत् ७
अस्तमानं समारभ्य यामत्रयं चतुर्दशी
शेषं पर्वयुतं चेत्तु शिवरात्रिरिति स्मृता ८
तद्रात्रिश्शिवरात्रिः स्याच्छिपूजां समाचरेत्
पूर्वसिद्धान्तमेवं हि सर्वदोषहरं भवेत् ९
अस्तमानं समारभ्य यावद्विंशति नाडिका
पश्चात्पर्वयुतं चेत्तु दोषयुक्तं न संभवेत् १०
सा रात्रिश्शिवरात्रिः स्याच्छिवपूजां समाचरेत्
परसिद्धान्तमेवं हि सर्वप्राणिहितावहम् ११
यामद्वयं च भूता च पर्वयामद्वयं भवेत्
शिवपूजा न कर्तव्या सर्वदोषकरं भवेत् १२
कृष्णपक्षे विशेषेण पूजानियम उच्यते
अस्तमानं समारभ्य त्रिपादेन त्रिनाडिका १३
नित्यपूजासमाप्तौ तु शिवरात्रिं समाचरेत्
एकयामं ततः पश्चाद्यामद्वयं च सङ्ग्रहेत् १४
सन्धिद्वयं शिवं पूज्य यथोक्तं कारयेत्सुधीः

चतुर्थयामं कर्तव्यं त्रिपादेन त्रिनाडिका १५
चतुर्थपूजा कर्तव्या अर्धयामं त्रिनाडिका
शेषनाडी च भोगार्थं शेषं प्रागुदयाच्चरेत् १६
तद्दिनात्पूर्वरात्रौ तु बिल्वपत्राधिवासनम्
अधिवासक्रमेणैव कारयेद्देशिकोत्तमः १७
विघ्नेशं पूजयेत्सर्वं सौरपूजां विधिक्रमम्
पूर्वे तु स्नपनं प्रोक्तं अष्टोत्तरशतं भवेत् १८
पञ्चगव्यं बिल्वपत्रं मुद्गान्नं पूर्वयामके
द्वितीये स्नपनं प्रोक्तं पञ्चाशत्कलशं भवेत् १९
पञ्चामृतारविन्दं च पायसान्नं द्वितीयके
तृतीये स्नपनं चैव पञ्चविंशति संख्यकम् २०
मधुजातिश्च कर्तव्यं शुद्धान्नं च निवेदयेत्
चतुर्थे स्नपनं चैव नवकुम्भेषु पूजयेत् २१
इक्षुसारं तथा प्रोक्तं नन्द्यावर्तं गुलान्नकम्
चतुस्सन्ध्यर्चनं कुर्यात् बिल्वपत्रैः समन्वितम् २२
यामं प्रति विशेषेण नववस्त्रेण वेष्टयेत्
पयो दधिघृतं चैव नालिकेरं क्रमेण तु
अन्यानि रसवस्तूनि स्नानकालेऽभिषेचयेत् २३
चित्रवस्त्रैरलङ्कृत्य सर्वपुष्पैस्सुपूजयेत्
शुद्धान्नं व्यञ्जनोपेतं यामं प्रति निवेदयेत् २४
तत्समं धूपदीपादीन्पादेन क्षेत्रपूजनम्
एवं विशेषतः कुर्याद्विदयामं तु तन्निशि
अर्धयामे विशेषेण द्वितीयं मिश्रपूजनम्
यामं प्रति विशेषेण बलिहोमं समाचरेत्
यामं प्रतिविशेषेण क्षेत्रपालं समर्चयेत् २५
यामान्ते तु प्रकर्तव्यं भोगाङ्गं सम्यगर्चयेत्

तदग्रे चराडपूजां च उपसन्ध्यां समाचरेत्  २६
पूजाविधानमेवं स्यान्नाडिका लद्मणं शृणु
अहोरात्रमष्टयामं वेदयामं तु तन्निशि  २७
अस्तमयं समारभ्य सार्धेन सप्तनाडिका
तद्याम्यादौ यजेच्चैव त्रिपादेन त्रिनाडिका  २८
सायरद्मां समारभ्य निशिपूजां समाचरेत्
किञ्चिद्भदविशेषोऽस्ति चराडद्मेत्रेशहीनकम्  २९
शेषत्रिपादत्रिनाड्यां शिवरात्रिं समाचरेत्
सन्ध्यातिक्रमणाद्दोषं न्यूनं चेत्तु न दोषकम्  ३०
पञ्चगव्यं समारभ्य साधयेच्छिवनाडिका
द्वारपूजां ततः कृत्वा घटिकापादसंयुतम्  ३१
स्नानमेकेन कर्तव्यमर्चनं पादनाडिका
घटिकार्ध निवेद्यं तु तदर्धं होममाचरेत्  ३२
अन्तर्बलिविधानं च बलिदानं च नाडिका
तत्समं धूपदीपं च दिक्पादार्धं द्मेत्रपूजनम्  ३३
एवं विशेषतः कुर्याद्विदयामं तु तन्निशि
अर्धयाम विशेषेण द्वितीये मिश्रपूजनम्  ३४
तत्तदर्थविशेषेण भोगाङ्गं चैकनाडिका
अरुणसन्धिश्च कर्तव्यः सार्धनाडि समाचरेत्  ३५
एवमेव क्रमेणैव चोदयान्तं समाप्य च
शिवरात्रि समं पुरायं न भूतो न भविष्यति  ३६

इति चिन्त्यशास्त्रे शिवरात्रिविधिर्नाम पञ्चविंशति पटलः

## शिवरात्रिपूजै

अतः परं प्रवद्म्यामि शिवात्रौ शिवार्चनम्

लोके सृष्टिकरं पूर्वे ब्रह्मविष्णुहराम्बिका १
चतुर्णामुत तद्रात्रौ क्रमेणैवार्चयेच्छिवम्
लोकसृष्टिर्भवेत्पश्चात् वितृतौ रुद्रचाम्बिका २
चरेच्च सृष्ट्वा ध्यात्वा च पद्मजः पदुलोचनम्
समभ्यर्च्य तु तत्कालं भवेदब्दं प्रति प्रति ३
लयं जातरवौ कल्प्य शिवपूजावसानके
तस्मिन्नश्चित्य तैर्लोकैः कृष्णं चैव चतुर्दशीम् ४
अथवान्यप्रकारेण निश्चितार्थं तु रात्रिकम्
सृष्टिस्थितिव्रतार्थं तु शिवलीलाकरार्थकम् ५
ब्रह्माविष्णुहरो देवो क्रमाच्चतुर्युगेषु चेत्
एककाले विधिर्विष्णोर्मम दास्यं शिवार्चनम् ६
मोचनं तु भवेत्तत्र महायुद्धन्तयोर्भवेत्
युद्धकाले तयोर्मध्ये शिवो गत्वा तु संस्थितः ७
मम पादं शिरश्शीघ्रं गम्यालोकं तु यश्चरेत्
बलं तस्य त्विदं कल्प्य स्थाणुरूपोऽभवच्छवः ८
वराहश्च भवद्विष्णुर्महीं यष्ट्येव यो गते
हंसरूपोऽभवद्ब्रह्मा गतं व्योम्नि समाचरेत् ९
अतिदूरं गताभ्यां च आद्यन्तं दर्शनं नयेत्
तस्माच्च न्निनर्गतः प्राप्य स्थाणुमध्ये समर्चयेत् १०
पूजाकाले भवेद्देवः शिवरात्र्यां महानिशि
तयोः शम्भुः फलं दत्त्वा तस्मान्निश्चित्यते निशि ११
द्विविधं शिवरात्रौ तु अब्दं मासं प्रति प्रति
सर्वमासेषु चन्द्रार्चमाघमासे त्रिमूर्तये १२
शिवस्सोऽहं भवेत्काम्य सर्वदेवार्चयेच्छिवम्
तस्मात्तेषां हृदेषुश्च तद्रात्रौ तु वसेच्छिवम् १३
सर्वदेवान्यसेत्तस्मात् शिवानुज्ञां ददेत्फलम्

अब्दं प्रति शिवरात्रौ भवेत्पूजाफलं शृणु १४
एकमासे द्विपक्षे तु अपरे व्रतमाचरेत्
रात्रौ चैव त्वहोरात्रं कृष्णां चैव चतुर्दशीम् १५
भवेद्रात्रौ महादेवि पूजायाञ्चोत्तमोत्तमम्
दिवा त्रयोदशीयुक्ता तद्रात्रौ तु चतुर्दशी १६
भवेद्देवस्य तद्रात्रौ यजनञ्चोत्तमं प्रिये
भवेत्त्रयोदशीपक्षं रात्र्यादौ दशनाडिका
पश्चाद्विंशतिनाडी च चतुर्दशी तिथिर्भवेत्
तद्रात्रौ शिवरात्रिस्तु मध्यमा तु शिवप्रिये
भवेच्चतुर्दशीपक्षं रात्रौ विंशति नाडिका १७
शेषं पर्वयुतं पश्चात् व्रतं कन्यसमाचरेत्
तद्रात्रौ तु अहोरात्रं पादके त्रिंशन्नाडिका १८
भवेत्तस्मिन् चरेद्रात्रौ यजनं भूतनाडिका
तस्मिन् त्रयोदशी युक्ते पादमेकं च नाडिका १९
शेषं दिवान्त्यनाड्येव प्रदोषयजनं चरेत्
तदन्ते रात्रिपूजा वा त्रिपादेन त्रिनाडिका २०
प्रदोष रात्रिपूजां च तद्द्वयोस्तद नाडिका
तदन्ते शिवरात्रौ च सौरपूजार्ध नाडिका २१
तदन्ते पूर्वसन्ध्यर्चापादोक्तं भूतनाडिका
तत्सन्ध्यङ्का निशादीनि स्थापनं च द्विनाडिका २२
पादं वा द्वार पूजा च स्नानकर्म त्रिपादकम्
तत्समं चार्चनं विद्यान्नैवेद्यं तु तदर्धकम् २३
तत्समं होमकर्मा च बाह्यानां चैव नाडिका
तदर्ध दीपधूपादि तदर्धं गीतनृत्तकम् २४
पूर्वसन्ध्यार्चितं ह्येव पादोक्तं भुतनाडिका
एकमेव क्रमेणैव चतुस्सन्ध्यां समाचरेत् २५

चतुस्सन्ध्यावसाने तु अर्धयामार्चनं चरेत्
अर्धयामे विशेषोऽस्ति शिवस्नानं विना चरेत् २६
अर्चनं चैव नैवेद्यं धूपदीपादि पूर्ववत्
समाश्रित्य विधानेन विदं कल्प्यैकनाडिका २७
काम्यार्थं बलिसंयुक्तं शिवरात्र्यार्चनेषु च
चतुष्पादक्षयं ग्राह्यं नाड्येकं बलिमाचरेत् २८
तत्सन्ध्यन्ते तु भोगाङ्गं भवेत्पादैकनाडिका
क्षेत्रपूजार्धनाडी च प्रभातयजनं द्विधा २९
पदैकविंशनाड्यां तु एवं तद्रात्रिपूजनम्
नाडिका लक्षणं प्रोक्तं शृणु पूजां शिवे निशि ३०
अधिवासे पूर्वरात्रौ बिल्ववृक्षे विशेषतः
अथवा बिल्वपत्रं च नवाम्बरेऽधिवासयेत् ३१
यजनार्थं शिवे रात्रौ गणेशं भास्करं यजेत्
पूर्वसन्ध्यां तु संस्थाप्य तैलं गव्यं घृतं तथा ३२
अष्टोत्तरशतान्कुम्भान् स्थापयेत्स्नानमाचरेत्
द्वितीये कोन पञ्चाशत् घटान् पञ्चामृतान्तरे ३३
तृतीये तु मधुस्नानं कलशं पञ्चविंशतिः
चतुर्थमिक्षुसारं च कुम्भास्सप्तदशैव हि ३४
यामेषु च विशेषार्चं पङ्कजं तुलसी तथा
बिल्वाधिवासपत्रं च सोत्पलं च क्रमेण तु ३५
विश्वसृष्टोर्च्यते तुभ्यं सदाशिव नमो नमः
पद्मनाभार्च्यते तुभ्यं नीलकण्ठाय ते नमः ३६
शर्वरुद्रार्च्यते तुभ्यं व्योमव्यापि नमो नमः
श्रीशयाभ्यर्च्यते तुभ्यं हौं शिवाय नमो नमः ३७
इति मन्त्रैर्विशेषार्च्य चतुस्सन्धिषु चाम्बिके
मुद्गान्नं च गुलान्नं च घृतान्नं पायसान्नकम् ३८

मन्त्रान्नं च क्रमेणैव चतुस्सन्ध्यासु दीपयेत्
यामं प्रति भवेत्कर्म संक्षेपात् शृणु चाम्बिके  ३९
बिल्वपत्रैश्च धूपैश्च सर्वपुष्पैश्च दापयेत्
धारयेन्नववस्त्रैश्च दुकूलैश्चित्रवस्त्रकैः  ४०
भूषयेत्स्वर्णरत्नैश्च लेपयेद्गन्धचन्दनैः
अर्चयेद्विधिनानेन पञ्चावरणमार्गतः  ४१
तदन्ते च विशेषार्चां मन्त्रपुष्पं च दापयेत्
शुद्धान्नं व्यञ्जनोपेतं प्रभूतहविषं ददेत्  ४२
नास्ति नास्ति शिवस्यापि प्रभूतहवि संख्यया
हविषामन्नदातारं मनोपूर्णं तु तत्समम्  ४३
होमं बलिप्रदानं च धूपदीपादिभिर्यजेत्
यत्कृत्वा माघमासे तु सर्वकामफलप्रदम्  ४४
भुक्तिं निद्रां च भोगं च यत्कृत्वा तु व्रतं जपेत्
इष्टकाम्यकरं पश्चाच्छिवसायुज्यमाप्नुयात्  ४५

इति चिन्त्यशास्त्रे शिवरात्रिपूजा षड्विंशति पटलः

## आचार्यलक्षण विधिः

आचार्यलक्षणं वक्ष्ये सर्वभूतहिताय च
अहिंसकस्सत्यवादी च सर्वजीवदयापरः  १
निर्मदो निष्प्रपञ्चश्च निर्मोहो निष्परिग्रहम्
निर्व्रणो निरहंकारो निश्शाठ्यो निर्विकल्पकः  २
क्षमावान् शान्तचित्तश्च सदाचारो दृढव्रतः
जितेन्द्रियोऽल्पसन्तुष्टः क्षुद्रकर्मविवर्जितः  ३
डम्भमायाविनिर्मुक्तः क्रोधलोभविवर्जितः
जपध्यानसमायुक्तस्सर्वदोषविवर्जितः  ४
वादत्रयस्त्रिज्योतिश्च गगनत्रय संयुतः

त्रयधिष्ठस्त्रयोपेत आज्ञात्रयसुसंयुतः ५
वश्याकर्षणकस्तम्भनिग्रहानुग्रहे क्षमः
एतल्लक्षणसंयुक्तं आचार्य उपदिश्यते ६
ततो विहीनशास्त्रज्ञः परमांससुविग्रहः
समयानां तु सर्वेषां ज्ञानसारपरिग्रहः ७
देवज्ञानयुतः पुष्टः कुलीनः सर्वसम्मतः
अनिन्दकश्च वेदानां ब्रह्मविष्णुशिवात्मनाम् ८
धीमान्सुश्रवणश्चैव पुराणार्थविशारदः
क्षयकुष्ठादिरोगैश्च वियुक्तस्सर्वसुन्दरः ९
एवं लक्षणसंयुक्त आचार्य इति कथ्यते
तद्दृष्ट्वान्तेन संप्राप्तो हर्षाकुलितलोचनः १०
त्रयः प्रदक्षिणं कृत्वा प्रणमेद्दण्डवद्भुवि
श्रीनन्दिकेश्वर उवाच
वक्ष्यामि सुभगे के ते त्वनाचार्यगुणान्विताः ११
श्री भगवानुवाच
ज्ञानदीक्षाविहीनश्च गुरुभक्तिविवर्जितः
गुर्वाज्ञालङ्घकश्चैव ज्येष्ठभ्रात्रवमानकः १२
क्रोधलो भरतो मोही पैशून्यवेषडम्भकः
अनृतो हिंसको लुब्धः स्तेयः परापवादकः १३
चपलस्त्वेकदृष्टिस्तु क्षुद्रधर्मपरिग्रहः
द्रव्यतृष्णो ममीभावः सरोगी क्षोभसंयुतः १४
धूर्तको विषयासक्तो दुश्शीलः कैतवस्तथा
गुरुद्रव्याभिकाङ्क्षी च सर्वद्रव्याभिकाङ्क्षिकः १५
भिक्षुकस्तु न चाचार्यो न च पूज्यो महीतले
एतैश्चैव गुणैर्युक्तो नष्टोऽसौ नामधारकः १६
दुश्चरित्रस्तु मूढात्मा रौरवं नरकं व्रजेत्

आचार्यलक्षणं प्रोक्तं शिष्यलक्षणकं शृणु
इति चिन्त्यशास्त्रे आचार्यलक्षण सप्तविंशति पटलः १७

## शिष्यलक्षणम्

अतः परं प्रवक्ष्यामि शिष्याणां लक्षणं शृणु
अहिंसासत्य संयुक्तो अस्तेयश्चाप्यकल्पनः १
अक्रोधगुरुशुश्रूषा शौचसन्तोष संयुतः
आर्जवो मतिमान् शान्तः क्षमायुक्तो दयापरः २
उदारभावसंयुक्तो निपुणो नियमोत्थितः
अधूर्तश्शून्यलोभश्च मिथ्यापैशून्यवर्जितः ३
पञ्चनाभयमात्सर्यविद्वेषद्वन्द्ववर्जितः
सहिष्णुरूर्जितश्शान्तस्सर्वक्लेशविवर्जितः ४
आसनं दन्तधावं च पादप्रक्षालनं तथा
पादसारणं स्नानं न कुर्याद्गुरुसन्निधौ ५
करस्फोटकनृत्तं च गायनं चैव सुप्तिकम्
बद्धकेशप्रसारं च वर्जयेद्गुरुसन्निधौ ६
तैलसम्मर्दनं चैव संरम्भेण विघातनम्
स्तम्भाद्याश्रयणं चैव वर्जयेद्गुरुसन्निधौ ७
अतिहास्यमवष्टम्भं लीलामङ्गप्रसारणम्
कटिदेशकरन्यासं न कुर्याद्गुरुसन्निधौ ८
धामच्छायां गुरोच्छायां शयनं पादुकं तथा
यानं स्नानजलं चैव आसनं तु न लङ्घयेत् ९
सङ्ग्राह्यं वन्दनापूर्वे देशिकस्य प्रसादकम्
यद्वस्तु गुरवे देयं दत्वा यान्ते च वन्दयेत् १०
वाचा मधुरया युक्तो गुरवे संनिवेदयेत्
रात्रौ जले भये मार्गे प्रत्यादेशपरो भवेत् ११

वाहनोष्णीष वाद्यादीन्वर्जयेद्गुरुसन्निधौ
प्रासादशब्दसंयुक्तं भद्यभोज्यादिकं कुरु १२
व्याख्यानं च प्रतिष्ठां च मण्डलं शिष्यसङ्ग्रहम्
गुर्वाज्ञया प्रकर्तव्यमेकग्रामगतो यदि १३
सदाचार्यगुणो ग्राह्यो दोषश्चेन्न परिग्रहेत्
गुणग्राह्यो भवेत्सिद्धिर्न सिद्धिर्दोषसङ्ग्रहे १४
भक्तिपूर्वस्य शिष्यस्य न शिद्मयति चेद्गुरुः
शिष्याज्ञानकृतं पापं गुरोर्भवति निश्चितम् १५
ग्राचार्यनिपुणश्शीघ्रं गुणान्सर्वान्परीद्मयेत्
ग्रब्दशुश्रूषणान्ते तु वृणुयाद्देशिकोत्तमः १६
दीद्मामात्रेण शिष्यस्तु सर्वदोषविवर्जितः
पश्चाद्दोषेसमापन्ने मनोवाक्कायकर्मभिः १७
नमस्कृत्वा कृतं दोषं विज्ञाप्य गुरुसन्निधौ
गुर्वाज्ञा तु प्रकर्तव्यं प्रायश्चित्तविधानतः १८
ग्रसन्निधौ गुरोरेव कर्तव्यं ज्येष्ठसन्निधौ
प्रायश्चित्तं प्रकर्तव्यं नाचरेन्नरकं व्रजेत् १९

इति चिन्त्यशास्त्रे शिष्यलद्मण ग्रष्टाविंशति पटलः

## मण्टपपूजै

मण्टपस्य विधिं वद्ये लद्मणोक्तक्रमान्वितम्
घृतस्नानकसंयुक्तं कलशस्नानसंयुतम् १
ग्राचार्यदद्मिणे हस्ते मध्यमाङ्गुलि मध्यमे
पर्वदीर्घसमं तारं नाहं त्रिविधमुच्यते २
तदङ्गुलचतुर्विंशैर्हस्तमानं प्रकीर्तितम्
तद्धस्तानि महाङ्गानि उपायाद्याङ्गुलं भवेत् ३
प्रसादस्याग्रके पार्श्वे ऐशान्ये चोत्तरेऽपि वा

दक्षिणे पश्चिमे वापि मण्टपं कल्पयेद्बुधः ४
त्रिहस्तं समारभ्य द्वि द्वि हस्तविवर्धनात्
त्रयोदशकरान्तं च विस्तारं तत्समं भवेत् ५
षोडशस्तम्भसंयुक्तं चतुर्द्वारसमन्वितम्
स्थूलोच्चं चतुरङ्गुल्यं निम्नोन्नतविवर्जितम् ६
प्राक्सूत्रं दशसूत्रं स्यात्तथैव परिकीर्तितम्
अथासारविसूत्रं स्यात्तथैव परिकीर्तितम् ७
मध्ये नवपदं वेदी चोपवेदिसमन्वितम्
एकहस्तोन्नता चैव दर्पणोदरसन्निभा ८
परितश्चोपवेदीं च वेद्यन्तं चैव कारयेत्
उन्नतं चैव तारं च द्विविधं गुरुमेव च ९
नवपञ्चैककुण्डानि मानुषेषु पदेषु च
द्विपदे पूर्वकुण्डस्य ईशानासन्नदक्षिणे १०
प्रधानकुण्डमाख्यातं तत्तद्वेरोक्तवत्क्रमात्
एकाशीति पदस्यैव केचिदर्धांशसंयुतम् ११
नार्धां कुत्रचिदेवं च रविसूर्ये पदस्य च
मध्ये नवपदं ब्रह्म परितो दैविकं पदम् १२
पैशाचानि पदानीह अर्धार्धानि पदानि च
तदेव विधिवद्यत्र मार्गमित्यभिधीयते १४
दैविकानि पदानीह अर्धार्धानि पदानि च
तथैव विधिवद्यत्र मार्गमित्यभिधीयते
एकाशीति पदस्यैव मण्टपस्य विशेषतः
द्वाराणि लक्षणं चैव सदैकैकपदानि च
द्वाराणि रविसूत्रस्य मण्टपस्य विशेषतः १५
लक्षस्यैव तु रम्यस्य मण्टपस्य विशेषतः
कुम्भं च वर्धनीं चैव वेद्यूर्ध्वे स्थापिते ततः १६

यागेश्वरं च कुम्भं च वर्धनीं च विशेषतः
स्थापिते तत्र विधिना दैविकादौ द्वयोर्द्वयोः १७
सौरादिकलशानीह पैशाचार्यपदेषु च
अग्निकौशिकयोर्मध्ये सौरकुम्भमिति स्मृतम् १८
परितश्चैव कुण्डानि मानुषेषु पदेषु च
पुरतः कलशानीह पैशाचेषु पदेषु च १३
नन्द्यादि कलशानीह द्वारासन्नपदे पदे
द्वारस्य द्विपदे चैव इन्द्रस्य कलशं पदम् १६
अग्निकाश्यपयोर्मध्ये यागोपकरणं पदम्
द्वारस्य द्विपदे चैव वारुणयं कलशं पदम् २०
वारुणास्त्रपदे चैव लक्ष्मीकलशकं पदम्
वायुस्थानपदासन्नं गणेशपदमीरितम् २१
गणेशपदमासन्नं सौम्यं पदमनुत्तमम्
अथ ब्रह्मपदं चैव ईशानासन्नवामकम्द्
तथैव विधिवत्यत्रमार्गमित्यभिधीयते २२
एकाशीति पदस्यैव मण्डपस्य विशेषतः
द्वाराणि लक्ष ---- ईशानसन्नवामकम् २३
वेदकुम्भमेवं च पूर्वकुण्डसु चोत्तरे
ईशाने गुरुकुम्भं च पूर्वकुण्डसु चोत्तरे
दक्षिणस्यैव कुम्भस्य तस्य तारं तु पूर्ववत् २४
पश्चिमस्यैव कुण्डस्य सामवेदस्य दक्षिणे
उत्तरस्यैव कुण्डस्य अथवासन्नपश्चिमम् २५
सप्तपदानि शेषाणि सप्तत्रयाणि यत्र च
पदं सार्धपदोपेतं लोपितं पदमेव च २६
चतुर्दिक्षु विशेषेण एवमेवं प्रकल्पयेत्
दर्पणं पूर्णकुम्भं च वृषभं युग्मचामरम् २७

श्रीवत्सं स्वस्तिकं शङ्खं दीपं देवाष्टमङ्गलम्
दर्पणादिप्रदीपान्तमुपवेद्युपरि न्यसेत् २८
पूर्वादिषु चतुर्दिक्षु शक्तिमन्त्रेण बुद्धिमान्
देशिकः स्थापयित्वैवं वस्त्रेण परिवेष्टयेत् २९
सोष्णीषं चोत्तरीयं च पञ्चाङ्गभूषणाङ्गकम्
सकलीकरणं कृत्वा कल्पयेत्प्रणवासनम् ३०
प्रोक्षयेदस्त्रमन्त्रेण द्वाराणि तज्जलेन च
स्थित्वैव मण्डपे बाह्ये द्वाराणि तोरणं न्यसेत् ३१
शान्तिकलाय द्वाराय वैतिसम्यक् समर्चयेत्
प्रतिष्ठा कला द्वाराय नमैतिसम्यक् समर्चयेत् ३२
शान्ति तोरणाय नमोऽस्त्विति सम्यक् समर्चयेत्
द्वारेण पश्चिमे नैव मण्डपेशं विशेषतः ३३
द्वारस्य पश्चिमस्यैव ऊर्ध्वोदुम्बरके ततः
द्वारं तु सद्यमन्त्रेण देशिकस्संप्रपूजयेत् ३४
वास्तु दिव्यं समागम्य कर्मसाक्षिणमर्चयेत्
स्वामिनस्योत्तरयस्यां च वेद्यङ्गैश्चैव दक्षिणे ३५
प्राणायामत्रिकं कृत्वा शुद्धदेहं तु चिन्तयेत्
तिलतण्डलसिद्धार्थकाशदूर्वायवाक्षतैः ३६
विशेषार्घ्यं च संकल्प्य द्रव्यशुद्धिं तदम्बुना
लाजचन्दनसिद्धार्थभस्मदूर्वाकुशाक्षतान् ३७
विकिराश्चोर्ध्वसंयुक्तान् सप्तशस्त्राभिमन्त्रितान्
अस्त्राम्बु प्रोक्षितानेतान् कवचेनावकुण्ठतान् ३८
सृष्टिक्रमं च विन्यस्य शिवदेहं समर्चयेत्
स्वदक्षिणकरे चैव लेपयेद्गन्धमण्डलम् ३९
शिवहस्ते नैजहस्तं भावयेत्तन्त्रवित्तमः
यागोपकरणानीह मात्राङ्गुलेन कारयेत् ४०

षट्त्रिंशद्दर्भसंयुक्तं ज्ञानखड्गं प्रकल्पयेत्
तालमात्रसमोपेतं कारयेद्वेणिबन्धनम्  ४१
अग्रं तु द्वयङ्गुलं चैव ग्रन्थिरेकाङ्गुलं भवेत्
हस्तसङ्ग्रहणार्थाय वेदवेदाङ्गुलं भवेत्  ४२
दक्षिणे तु कटिस्थाने ज्ञानखड्गं तु संविशेत्
मण्टपे साक्षिभूतेन घटे यज्ञार्थमास्थितः  ४३
भुग्भुगर्थं च वह्नौ तु मण्टपे प्रकृतिस्थतः
हृदि रक्षार्थकं चैव एवं पञ्चविधश्शिवः  ४४
शिवपुत्र च लंबोष्ठ गजवक्त्र गणाधिप
शिवयाग प्रवृत्ताय निर्विघ्नत्वं प्रसीद मे  ४५
पुण्याहं पूर्ववत्कृत्वा पञ्चगव्यं तु साधयेत्
पुण्याहं पञ्चगव्यं च प्रोक्षयेन्मण्टपे ध्रुवम् ४६
निरीक्षणं प्रोक्षणं च ताडनाभ्युक्षणं तथा
खननोद्धारणं चैव पूरणं सेचनं तथा  ४७
एवं विकुट्टनं चैव सम्मार्जनमतः परम्
समालेपनमेवं च कलारूपेन कल्पनम्  ४८
त्रिसूत्रवेष्टनं चैव पूजनं च ततः क्रमात्
रेखा विरचिता चैव वज्रीकरणमेव च  ४९
चतुष्पदं च तत्रैव कारयेत्तन्त्रवित्तमः
अष्टादशानि कथ्यन्ते संस्काराणि च तानि च  ५०
स्थूलपञ्चाक्षरेणैव कर्तव्यं च निरीक्षणम्
प्रोक्षणं कवचेनैव ताडनं पुरुषेण तु  ५१
हृदा चाभ्युक्षणं कुर्यात् खननं वर्मणा तथा
लक्ष्म्या चोद्धरणं चैव सावित्र्या पूरणं कुरु  ५२
अथ संहितया मन्त्री समीकरणकं कुरु
ततश्चाङ्गीरया मन्त्री सेचनं सम्यगाचरेत्  ५३

विधिवत्कुरु तत्रैव कुट्टनं तु शराणुना
संमार्जनं च तत्रैव सद्येनैव ततः कुरु ५४
लेपनं पवमानेन तत्रैव विधिवत्कुरु
कलारूपं च तत्रैव बीजमुख्येन वक्त्रतः ५५
त्रिसूत्रवेष्टनं कार्यं शिवगायत्र्या परं शुभम्
शिखया यजनं कार्यं तत्रैव विधिवत्क्रियाम् ५६
शक्ति सावित्रि मन्त्राभ्यां कुरुरेखां ततः क्रमात्
स्वस्तिदेति च मन्त्रेण वज्रीकरणकं चरेत् ५७
चतुष्पदं च तत्रैव ओंकारेणैव सत्कृतम्
उत्तानं च करं कृत्वा वज्रीकृत्य त्रयाङ्गुलम् ५८
तर्जनीमध्यमे चैव अन्योन्यं च सुयुग्मकम्
तर्जन्या योगतः कार्यं द्वयमेवं तु यत्र हि ५९
समीकरणमाख्यातमिति सम्यक् परान्वितम्
भूमौ द्वयं मे पुच्छाद्यं त्रयमेव तु वेधनम् ६०
कर्तव्यं चोत्तरस्यां च कुट्टनं त्विति कीर्तिनम्
असुरानेकदूरस्थान्नेमं कृत्वा यमान्तकम् ६१
हस्ताङ्गुष्ठनखेनैव कृतं वेरेति कथ्यते
कर्माण्येतानि संप्रोन्द्य मण्टपोचितमाचरेत् ६२
वेद्यूर्ध्वे स्थण्डिलं कृत्वा अष्टद्रोणैश्च शालिभिः
तदर्धतण्डुलैश्चैव तदर्धैश्च तिलैरपि
लाजैश्च तदर्धैश्च एवमेवं क्रमेण तु ६३
शाल्यूर्ध्वे लेखयेद्धीमान् साष्टपत्रं सकर्णिकम्
प्रधानकर्णिकामध्ये शक्त्यंशं कर्णिकांशके ६४
परिवारघटानां च तन्मध्येषु च विन्यसेत्
प्रधानस्यैव कुम्भस्य हेमपङ्कजमेव च
हेमनीलोत्पलं चैव वर्धन्यां चैव कथ्यते

परिवारघटानां च हेममाषाणि कथ्यते
कुम्भे तु वेष्टयित्वैव नववस्त्रैः पृथक्पृथक् ६५
कथ्यन्ते नालिकेराणि पल्लवादीनि तत्परम्
यागेश्वरस्य कुम्भस्य वर्धन्यास्तु यथाविधि ६६
वसुप्रस्थकलाशी च तस्यार्धं चार्धकस्य च
तदर्धं तण्डुलं चैव तदर्धं तिलमेव च ६७
लाजं तदर्धमेवं च होमन्तस्योत्तराणि च
चतुः प्रस्थकव्रीहिश्च शकलं शकलं प्रति ६८
तस्याश्च चेतराणीह कल्पितानि शुभानि च
सौरपूजां ततः कृत्वा पूर्वोक्तविधिना पुनः ६९
पादप्रक्षालनं कृत्वा शुद्धमाचमनं ततः
देवं चैव तु शक्तिं च परिवारं न्यसेत्क्रमात् ७०
द्वाराणि तोरणानीह शान्त्या चैवमर्चयेत्
नन्दी चैव महाकालो भृङ्गी चैव विनायकः ७१
उक्षा च स्कन्दकश्चैव देवी चण्डेश एव च
पूर्वादिषु चतुर्दिक्षु अर्चयेत्स्वस्वनामभिः ७२
वाक्वाथ पतिमेवं च स्वनाम्ना चैवमर्चयेत्
विकरान्वीर्यवैशान्य मण्टपो योजयेत्क्रमात् ७३
मङ्गलार्धं च शोभाढ्यं विजयार्धमुदीरितम्
दर्पणं पूर्णकुम्भं च वृषभं युग्मचामरम् ७४
श्रीवत्सं स्वस्तिकं शङ्खं दीपो देवाष्टमङ्गलम्
पूर्वादि चतुर्दिक्षु अर्चयेत्स्वस्वनामभिः ७५
दर्भमाल्यैरलंकृत्य वासुकिं अर्चयेत्ततः
ततश्च हरिबन्धे च चन्द्रनाम्ना समर्चयेत्
स्वनाम्ना चैव विधिवन्महालक्ष्मीं प्रपूजयेत्
धर्मज्ञानादीन् सपदामिर्थलासनम् ७६

अर्चयेत् वृषभं तत्र स्वनामा च मनान्तकम्
यागेश्वरस्य कुम्भस्य वर्धनीमुत्तरे न्यसेत्
नालं चोत्तरदिग्भागे रम्ये च शुभसंयुते
अनन्तधर्मज्ञानादीन्सपद्मं विमलासनम्
अर्चयेद्वृषभं तत्र स्वनाम्ना च नमान्तकम्
एवमेव क्रमेणैव सङ्घद्यैश्शिवमर्चयेत् ७७
शक्तिं सम्पूज्य वर्धन्यामासनादि समर्चयेत्
हेमनीलोत्पलं चैव वर्धन्याश्चैव कथ्यते ७८
वर्धनीं पूर्वमादाय पश्चात्कुम्भं समुद्धरेत्
व्यञ्जनं यागेश्वरं कुम्भं पुष्कलावर्तकाङ्ककम् ७९
वर्धन्या वर्धकोपेता वर्धन्या व्रणसंयुतम्
पुष्कलावर्तकोपेता सद्योग्रं ज्ञान खड्गकम् ८०
प्रदक्षिणक्रमं ग्राह्यं कुम्भं च पुरतस्ततः
आघ्राणेन जलस्रावं तस्यानुगतवर्धनी ८१
जलस्रावफलं चेति सर्वाणि भुवनानि च
अविच्छिन्नजलस्रावं प्रदक्षिणपदेपदे ८२
कुम्भं च वर्धनीं चैव विन्यसेत्पूर्ववद्बुधः
आधारशक्तिधर्मादीन् स्थिरासनमिति स्मृतम् ८३
हुंफट् वौषट षडङ्गानि वर्धन्यां च समर्चयेत्
लिङ्गमुद्रयाङ्गुष्ठेन संस्पृशेत् वर्धनीं ततः ८४
इन्द्रादीशानपर्यन्तं ब्रह्मविष्णुसमन्वितम्
देशिकश्चैव विधिवत् स्व स्व नामभिरर्चयेत् ८५
ततो गणेश्वरं पूज्य गुरून्पश्चात्प्रपूजयेत्
वर्धन्योपेतकुम्भे च ज्ञानखड्गं समर्चयेत् ८६
उत्तराग्रक्रमेणैव तच्युतं त्विति कीर्तितम्
कुम्भं च वर्द्धनीं चैव परिवारान्सुपूजयेत् ८७

होमकर्माणि कृत्वैव पूर्वोक्त विधिना चरेत्
संस्कृतान्युपदंशानि नैवेद्यानि प्रदापयेत् ८८
निष्कं चैव समारभ्य नवान्तं स्वर्णमेव च
आचार्यदक्षिणान्दत्त्वा पूजयेत्तु यथाविधि ८९
मौहूर्तपरिचाराणां दापयेद्दक्षिणां बुधः
यागेश्वरस्य कुम्भस्य वर्धन्याश्च यथाक्रमम् ९०
कलशस्थानि तोयानि तत्तत्स्थानेषु योजयेत्
तत्तत्स्थानं ऋद्धियुक्तं चरकालमिति स्मृतम् ९१
ततः कुम्भं च वर्धन्यां परिवारान्विशेषतः
मूलबेरं तु संयोज्य पूर्ववत्पूजयेद्बुधः ९२
कूर्मासनकस्थानानि वीक्ष्याग्ने विधिवत्ततः
कुण्डावलग्नयोर्मध्ये कुण्डासनेषु यत्र च ९३
अकारं प्राणभव्यं च तस्यै चारञ्चराचरम्
ततस्तेरमुभौपेतं इतरं च जयान्वितम् ९४
तस्येतरं भद्रयुक्तं कर्मकर्माङ्गसंयुतम्
एतानि चैव योक्तानि समस्तमिति कीर्तितम् ९५
इति चिन्त्यशास्त्रे मण्टपपूजाविधिः एकोनत्रिंशत्पटलः

## अग्निकार्य विधिः

अतः परं प्रवक्ष्यामि अग्निकार्यविधिक्रमम्
होमार्थं चैव होतारः सुखासनं समाश्रयेत् १
वेदिका दक्षिणे चाग्नौ ऐन्द्रेशे चोत्तरानतः
नैर्ऋते वारुणे वायौ सौम्ये पूर्वाननो भवेत् २
अग्नेरायतनं द्वौ तु कुण्डे वा स्थण्डलेऽथवा
शोधनं क्षालनं चैव शोषण दहनं तथा ३
प्रोक्षणं चैव सद्यादिमन्त्रैः कुण्डं शुचिर्भवेत्

हृदा दर्भैस्त्रिधा भूमौ स्पृश्य प्रोद्त्योत्तरे त्यजेत् ४
वालुकास्तरणं हस्तमुच्चं माने त्रयङ्गुलम्
प्रागग्रास्तिस्त्ररेखास्तु तिस्त्रस्तद्वदुदीच्यगाः ५
रेखामध्ये यमे सौम्ये ब्रह्मयाम्यं च सौम्यकम्
मध्यमे वरुणे पूर्वे रुद्रं विष्णुं पुरन्दरम् ६
स्वस्वनामश्रुतिं जप्त्वालिख्य काले तु चाम्बिके
शरावे ताम्रपात्रे वा होताग्रे पार्श्वके न्यसेत् ७
क्रव्यादांशं परित्यज्य दिग्बन्धं चास्त्रमन्त्रतः
वागीश्वरस्य मन्त्रेण तदग्नौ चन्दनं क्षिपेत् ८
बहुरूपेण संप्रोक्ष्य हृदा पुष्पैस्समर्चयेत्
वह्ने रायतने मध्ये न्यस्त्वा वागीशकूर्चकम् ९
वागीशीं पद्मपुष्पाभं चतुर्हस्तां घनस्तनाम्
व्याख्यानं पुस्तकं चैव कमण्डल्वक्षधारिणीम् १०
ध्याययेत्तु विशेषेण ऋतुस्नानं सुयौवनाम्
नीलोत्पलदलाभासां ध्यायेत्कर्मोक्तवत्सुधीः ११
संपूज्याग्निं त्रिधा भ्राम्य ध्यायेद्वागीश्वरं तथा
वागीश्वरं च रक्ताभं त्रिणेत्रं च चतुर्भुजम् १२
अभयं वरदोपेतं पाशशूलकरान्वितम्
योनिमार्गेण संक्षिप्य वह्निबीजं तु संस्मरेत् १३
तद्बीजेन समिद्दर्भान् गर्भाधानेन च क्षिपेत्
हृदा यजेत्पुंसवनं सीमन्ते चार्य घोरयुक् १४
पुष्पाक्षतान्वितं क्षिप्त्वा जातकर्ममिति स्मृतम्
एकचित्तं द्विवक्त्रं च प्रत्येकं वृषशृङ्गवत् १५
मूर्ध्नौस्तु जटाचूडं षण्णेत्रं सप्तहस्तकम्
शक्तिं चैवाक्षमालां च स्त्रुत्स्त्रुवं सव्यहस्तके १६
घृतपात्रं च व्यजनं तोमरं वामहस्तकम्

बालसूर्य प्रतीकाशमुपवीत समन्वितम्  १७
त्रिमेखलं त्रिपादं च सप्तजिह्वासमायुतम्
हिरण्या कनका रक्ता कृष्णा च सव्यवक्त्रके १८
सुप्रभा अतिरक्ता च बहुरूपा च वामतः
वारुणं मध्यमं सौम्यं याम्येन्द्रं वायुमीशकम्  १९
जिह्वास्थानं हिरण्यादि सप्तजिह्वाः क्रमेण तु
अग्निरूपमिदं ध्यात्वा स्वासीनं पश्चिमाननम्  २०
ईशानेन तु संप्रोक्ष्य स्वनाम्ना शिवनामकम्
समिद्दर्भान् समादाय हस्ताभ्यां योजिते स्थिते  २१
जुष्टो मूलमन्त्रान्ते समिदग्नौ हृदा क्षिपेत्
तस्य दर्भासने होता सुखासीनस्समाचरेत्
प्रतिदिग्दशदर्भैश्च पूर्वादिषु परिस्तरेत्
देवस्य त्वेति मन्त्रेण सौम्याग्रान् पूर्वतो क्षिपेत्
भूर्भुवस्वेति दर्भैश्च पूर्वाग्रान्दक्षिणे क्षिपेत्  २२
उद्वयन्तमसश्चेति उत्तराग्रांस्तु पश्चिमे
अग्न आयाहि मन्त्रेण प्रागग्राञ्चोत्तरे क्षिपेत्  २३
उदगग्रं चैव पूर्वे देवस्य त्वेति निक्षिपेत्
तद्दर्भानग्रकं चैव पूर्वदर्भस्य यो क्षिपेत्
पात्राणि होमद्रव्याणि वामे काशोपरि न्यसेत्  २४
ब्रह्मविष्णुश्च पात्राणां तिस्त्रदर्भासनं न्यसेत्
दर्भेत्वधोमुखं पात्रं द्वन्द्वरूपेण साधयेत्  २५
तस्मिंश्च प्रोक्षणीपात्रं सङ्गृह्य वारि पूरयेत्
विदस्ति दीर्घसमं कूर्चं ग्राह्याङ्गुष्ठौ च नामिकौ  २६
अङ्गुष्ठानामिकाभ्यां तु वितस्त्यायामकूर्चकम्
हृदयेन तु मन्त्रेणाप्युदकोत्प्लावनं त्रिधा
होमद्रव्याणि सर्वाणि प्रोक्ष्य दक्षिणतो न्यसेत्  २७

पश्चात्तु वर्मणा प्रोन्दय पात्राएयूर्ध्वाननान्कुरु
सप्तदर्भान् समादाय ब्रह्मकूर्चं तु विन्यसेत्  २८
सव्यपार्श्वे तु विन्यस्य अर्घ्यबिन्दुं स्वनामतः
प्रणिपात्रे जलं पूर्य कूर्चपुष्पान्नतैर्युतम्  २९
वाममेखलयोर्मध्ये पार्श्वे वा विन्यसेत्सुधीः
न्यस्त्वा तु वारुणं मन्त्रं वरुणोऽसिधृतव्रतः  ३०
विष्णुबीजं समभ्यर्च्य वारुणं मन्त्रमुच्चरन्
घृतपात्रं तु संपूर्वं नीत्वाङ्गाराणि पश्चिमे  ३१
तस्योर्ध्वे तद्धृतं न्यस्त्वा द्विकुशाग्रं तु निक्षिपेत्
पर्यग्निं च कुशाभ्यां च अग्निमध्ये विनिक्षिपेत्  ३२
घृतं प्रदक्षिणी कृत्य विन्यसेद्योनिरूर्ध्वके
धृतोत्प्लवनकूर्चं तु ग्रन्थिं मुक्त्वा शिखि क्षिपेत्  ३३
तर्जन्यङ्गुष्ठयोर्मध्ये द्वयोर्दर्भेण वेष्टयेत्
स्रुवमग्नौ तु संस्पृश्य दर्भान्मध्यं तु मध्यमे  ३४
मूलं मूलाग्रमग्नौ तु शोधयेद्धृदयेन तु
अधोमुख स्रुवं क्षिप्त्वा पश्चात्परिधि सङ्ग्रहेत्  ३५
वारुणे याम्यसौम्ये च वर्मनेत्रास्त्रकैर्न्यसेत्
समिधोऽष्टादश गृह्य तस्मिन्द्वौ सङ्ग्रहेऽपि च  ३६
अग्निदिक्वीशदेशे च हृदा च शिरससा यजेत्
अनूयाजसमिधं च प्रणितोर्ध्वे न्यसेद्धृदा  ३७
अग्निमूर्तिं समभ्यर्च्य दिक्पालान्वरुणादयम्
परिषिच्य जलं सृज्य अदितेन्वादि मन्त्रकैः  ३८
प्रागग्रं दक्षिणे चादौ उदीच्याग्रां च पश्चिमे
उत्तरे चैव प्रागग्रं ततस्समन्ततो भवेत्  ३९
नेत्रास्सूक्ष्मरिकैश्चाग्नौ घृतेनैवाभिघार्य च
शेष पञ्चदशे ध्मानि सकृन्मूलेन होमयेत्  ४०

प्रजापते च सद्ये च वायव्याग्नेयमाहुतिम्
ततो वैदीकमन्त्रैश्च आज्यं हुत्वा यथाक्रमम्  ४१
मन्त्रैरग्निमुखान्तैश्च आप्यायस्वेति मन्त्रतः
सन्ते पयांसि मन्त्रेण स्पृश्याग्नौ दक्षिणे न्यसेत्  ४२
हुनेत्सौम्ये तत्पुरुषं बहुरूपं तु याम्यके
इन्द्रदेशे शिखां हुत्वा नेत्रं पश्चिमतो हुनेत्  ४३
मध्यमे तु शिखामन्त्रं देशिकस्तु हुनेत्ततः
अग्नावन्नप्राशनाय बीजेन पञ्चविंशतिः  ४४
चौलोपनयनव्रतं समावर्तविवाहकम्
सद्यादि ब्रह्मणभिर्हुत्वा प्रत्येकं सप्त संख्यया  ४५
समावर्तं च वैवाह्यं बालाग्नौ तु विभावयेत्
यौवनाग्नौ तु देव्योक्त तस्य वत्परिमाणकम्  ४६
वृद्धाग्नौ चैव बालाग्नौ परिवारैर्विना स्त्रियाम्
बालाग्निस्तु प्रतिष्ठायां यौवनो मङ्गलोत्सवे  ४७
प्रायश्चित्तं च नित्यं च वृद्धाग्नौ तु समाचरेत्
वागी वागीश्वरौ स्थाप्य विष्णुपात्रस्य सौम्यके  ४८
अग्नेस्तु जिह्वामध्ये तु आसनं परिकल्पयेत्
तन्त्रोक्तदेवमावाह्य प्राङ्मुखं रुचिरासनम्  ४९
इन्द्रादिसोमपर्यन्तं सप्तजिह्वाः प्रकाशयेत्
स्वाहा देव्यास्तु जिह्वायामीशदेशे प्रकाशयेत्  ५०
जटोक्तवत्प्रकाशं च तन्त्रोक्तदेवविग्रहे
अथवाग्नौ हृदि स्थाप्या ह्यरूपं परमं शिवम्  ५१
दशाहुतिप्रधाने तु परिवारैकमाहुतिम्
समिदाज्य चरून्लाजान् तिलसिद्धार्थकान्यवान्  ५२
सक्तुद्रव्याणि हुत्वा च तदन्ते व्याहुतिं हुनेत्
समिदन्नयवं लाजं सक्तुं च तिलसर्षपम्  ५३

सप्तजिह्वा हिरण्यादि क्रमाद्धुक्तं तु चाम्बिके
अन्यानि सर्वद्रव्याणि घृतानि कनके हुनेत्  ५४
शक्त्याश्चैव हुनेद्द्रव्यान् जिह्वायां च हुनेत्तथा
स्त्रीप्रधाने विशेषोऽस्ति सप्तजिह्वासु होमयेत्  ५५
तच्छक्तिपरिवाराणां स्वजिह्वायां हुनेत्ततः  ५६
शतमर्धं तदर्धं वा तत्तत्कर्मोक्तवद्धुनेत्
संस्कारादिकृतान्तं च हव्यं स्विष्टकृता हुनेत्
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत्  ५७
कूश्माण्डाहुतिभिर्हुत्वा पञ्चवारुण्य व्याहृतिम्
प्रायश्चित्तं च वारुण्यं स्वस्तिं च व्याहृतिं हुनेत्  ५८
होमं कृत्वा शिवास्त्रेण सर्वशान्तिकरं शतम्
मिन्दाहुतिद्वयं पश्चाद्दिष्टमष्टाहुतिं ततः  ५९
महस्तु व्याहृतिं हुत्वा अग्नेः पूर्णाहुतिं ततः
मूर्तिपूर्णाहुतिं पश्चादाज्य स्विष्टं च व्याहृतिम्  ६०
परिषेचनं ततो विद्यात्प्रागुक्त विधिना सह
वर्मनेत्रास्त्रमन्त्रेण हुत्वा तु परिधीं क्रमात्  ६१
आघारसमिधौ हुत्वा हृदा च शिरसाथ च
ब्रह्मोद्वासनकूर्चस्य ग्रन्थिं मुक्त्वा विसर्जयेत्  ६२
अथवाग्नौ विनिक्षिप्य अनूयाज समिद्धृदा
प्रणीतपात्रपूर्वादि प्रोक्षयेद्भिस्तु सेचयेत्  ६३
दर्भोक्तं प्रोक्षयेद्धीमान् कृत्वा पात्रमधोमुखम्
परिस्तरणदर्भाणां गृह्यैकं च विहाय च  ६४
आज्येनैव तु संस्पृश्य अस्त्रेणैव दहेत्सुधीः
तदेकं तु दहेद्भस्मं पापघ्नतिलकं कुरु  ६५
स्रुक्स्रुवाभ्यां घृतं पूर्णास्त्रंगसौवाहुतौ नयेत्
आज्यशेषं घृतं भूमौ स्रावे रक्षोप्रियावहम्  ६६

तन्त्रोक्तदेवमावाह्य तत्तत्तन्त्रोक्तवत्सुधीः
वागी वागीश्वराभ्यर्च्य योजयेद्रविमराडले ६७
यथास्थाने ततोद्वास्य अग्नेश्च परिवारकान्
नित्यनैमित्तिके कार्ये एवं यः कुरुते हि सः ६८
सर्वान्कामानवाप्ये हि शिवसायुज्यमाप्नुयात्
इति चिन्त्यशास्त्रे अग्निकार्यविधिर्नाम त्रिंशत्पटलः

## शिवदीक्षा विधिः

अतः परं प्रवक्ष्यामि शिवदीक्षाविधिक्रमम्
नराणां मोक्षसिद्ध्यर्थं सर्वपापहरं परम् १
सर्वरोगविनाशार्थं धनधान्य समृद्धिदम्
शुद्धः शिवद्विजो मुख्यस्सदाचार्यः प्रकीर्तितः २
अकलं कलमित्युक्तं शैवमेतद्द्विधोच्यते
अखलं ऋृषिगर्भं स्यात्कलं वै शिवगर्भकम् ३
भिक्षाटनस्य तत्काले कलं च शिवगर्भितम्
तत्कालेन निगर्भा च रुद्रस्य गणिका भवेत् ४
अखलं गर्हितो वापि बोधस्योगर्हसंज्ञकम्
तेषु श्रेष्ठः कलश्चैव अथवा चाकलस्तथा ५
ग्रामविप्रस्समुद्धृत्य पादस्य कुलमेव च
पञ्चैते तु प्रकर्तव्यं भूतमेवेति चोच्यते ६
विप्रं नृपं च वैश्यं च शूद्रजातिं तु दीक्षयेत्
एतच्चतुर्विधे जातौ जातांश्चैव प्रदीक्षयेत् ७
अकलो यत्र सञ्चैव कलाश्चैव दशांशतः
अन्येषां चैव कर्तव्यं देशिकं सर्वतो मुखम् ८
तिथिवारेषु नक्षत्रे सुमुहूर्ते सुलग्नके
देवालयेऽथवा चैव गुरुशिष्यग्रहे तथा ९

दीक्षास्थानं च कर्तव्यं मण्डलं तु प्रकल्पयेत्
नवाग्निं चैव पञ्चाग्निमेकाग्निं वा प्रकल्पयेत् १०
कर्तव्यमग्निदेशं तु सुप्रमाणं विनिर्मितम्
द्विहस्तं वेदिविस्तारमुत्सेधं तत्समं तु वा ११
वेदिविस्तारमेवं तु शास्त्रवत्कुण्डकल्पनम्
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् १२
दर्भमालाभिरावेष्ट्य मुक्तादामप्रलम्बनम्
प्रोक्षयेत्पञ्चगव्येन पुण्याहं वाचयेत्ततः १३
प्रोक्षयेदस्त्रतोयेन नारा च मुद्रया सह
शालिपिष्टमयानात्र पदविन्यासमुच्यते १४
षत्रिंशत्सूत्रविन्यासं पूर्वाग्रं चोत्तराग्रकम्
नन्दनन्दपदे मध्ये पद्माकारं समालिखेत् १५
तद्बाह्ये पदसंयुक्तं पदमेकं परित्यजेत्
चतुर्द्वारात्मताररूपं पञ्चपञ्च पदं त्यजेत् १६
लतापार्श्वद्वयं चैव लिङ्गं चैव चतुर्दिशि
मध्ये श्वेतमयं पद्मं श्यामवर्णे विधिक्रमात् १७
द्वारद्वारेषु संकल्प्य नानावर्णविचित्रके
हेमं कृष्णं सुरक्तं च श्वेतवर्णमयं तथा १८
लिङ्गवर्णं प्रकुर्वीत विचित्रेण समाविधिः
अर्धलिङ्गेषु पादं तु वर्णभेदो विधीयते १९
कोणे कोणे विधिः प्रोक्तः श्वेतपद्मं विधीयते
प्रोक्षयेत्कुम्भतोयेन शङ्खसन्निभमुद्रया १७
मण्डलं तत्स्वनाम्ना तु लिङ्गाढ्यं तु विधीयते
मण्टपस्य तु शुद्ध्यर्थं वास्तुहोमं समाचरेत् १८
पर्यग्निकरणं कृत्वा पुण्याहं वाचयेत्ततः
पूर्वोक्तविधिवत्स्थाप्य दर्पणे कलशेषु च १९

पूर्वादिसोमपर्यन्तं द्वारतोरण कल्पनम्
मगटपस्येशदिग्भागे मगडलं चतुरश्रकम् २०
दर्भैः पुष्पैः परिस्तीर्य पद्ममध्येषु विन्यसेत्
शिवकुम्भं वर्धनीं च स्थापयेत्पद्ममध्यमे २१
पाद्यमाचमनं चार्घ्यं पञ्चगव्यं चतुर्दिशि
पुष्पं कुशोदकं चैव गन्धोदकं च बिल्वकम् २२
विदिन्नु स्थापयेत्तत्र क्रमेणैव तु देशिकः
शिवकुम्भे शिवं स्थाप्य वर्धन्यां तु मनोन्मनीम् २३
विद्येशानावृतौ चैव स्थापयित्वा ह्यनुक्रमात्
देशिको मूर्तिपैस्सार्धं स्नात्वा वस्त्रं च वेष्टयेत् २४
आत्मार्थं विधिवत्कृत्वा विशेषं कल्पयेद्गुरुः
तर्पणान्ते विधिं प्रोन्द्य सर्वालङ्कारसंयुतः २५
पञ्चाङ्गभूषणोपेतश्चोत्तरीयेण वस्त्रकः
प्रविशेन्मगटपं चैव पुगयाहं वाचयेत्ततः २६
पश्चात्स्थाने प्रकर्तव्यं निर्ऋत्यां गुरुरेव हि
उत्तराभिमुखो भूत्वा रुचिरासनसंस्थितः २७
भूतशुद्धिं ततः कृत्वा करशुद्धिपुरस्सरम्
अङ्गं त्वन्नरविन्यासं पूजयेन्मगटपं हृदा २८
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिश्चतुर्दिशि
शान्तिभूतिं तथारोग्यं बलं च तोरणेषु च २९
नन्दिकालौ तथा गङ्गां यमुनां चैव पूजयेत्
इन्द्राग्नयोस्तु तन्मध्ये सौरमित्यभिधीयते ३०
अग्निकुम्भं चाग्निदेशे दगिडमुगिडं तु दन्निणे
मूर्तौ तु यममित्युक्तं पूजयेत्सह मोदकैः ३१
वायुकुम्भं तथा वायौ ज्येष्ठायां वृषभं स्मृतम्
उत्तरेषु यजं सौम्ये सोमं वैवाह्यमेव तु ३२

ईशे रक्षे ब्रह्मविष्णुरुद्रमेवं प्रकल्पितम्
धूपदीपं हृदा दत्वा गन्धपुष्पादिभिर्यजेत्  ३३
स्वनामदेव संपूज्य नामोऽन्तमर्चनं क्रमात्
स्वाहान्तेन हृदा पूर्वं निवेदनं निवेदयेत्
शिवकुम्भे शिवं पूज्य वर्धन्यां तु मनोन्मनीम्
विद्येशांश्च क्रमादष्टौ स्वस्वनाम्नाथ देशिकः
मण्डलं सर्वदैवत्यं पूजयेद्गन्धपुष्पकैः  ३४
ईशादिसद्यपर्यन्तं लिङ्गमेतत्प्रकीर्तितम्
विद्येशाष्टाङ्ककान्पूज्य अष्टलिङ्गेषु चैव हि
वृता चतुष्टये चैव चतुः पङ्कजमेव हि
वामादिशक्तयश्चाष्टौ पूजयेद्गन्धपुष्पकैः
लिङ्गे लिङ्गे तथा कण्ठे वसवोऽष्टौ च नागकान्
वृत्तहादि चतुर्दिक्षु चतुर्वेदं प्रपूजयेत्  ३५
मण्टपाधिष्ठितांस्तत्र विद्यादेहान् क्रमात्सुधीः
धूपदीपं हृदा दत्वा शङ्खसन्निभमुद्रया  ३६
साक्षिं तु मण्डले कुर्यात्कलशे रक्षणार्थकम्
आपाद्य सर्वमाप्नोति पूजयेन्मण्डलं हृदा  ३७
यावत्संपूज्य विधिवन्मन्त्रमेतन्नमोऽन्तकम्
पूजान्ते शिष्यमाकृष्य स्नातं वस्त्रेण वेष्टितम्  ३८
प्रविशन्मण्टपद्वारं पादप्रक्षालनं कुरु
भस्मालेपितपञ्चाङ्गो मण्टपं तु प्रवेशयेत्  ३९
होमं कृत्वा समाश्रित्य देशिको मूर्तिपैस्सह
आज्यस्थालीं च संग्राह्य कुण्डदक्षिणसंस्थितम्  ४०
गुरुश्चाभिमुखं चाग्निविधिना कारयेद्बुधः
गुरुर्निरीक्षकाश्शिष्यं ज्ञानदृष्ट्यावलोकयेत्  ४१
उष्णीषं चोत्तरीयं च परिचारकमाचरेत्

तद्धस्तं संगृहीत्वा तु मराटपं तु प्रदक्षिराम् ४२
स्थरिडले चोपरि न्यस्त्वा होमकर्म समाचरेत्
वागीश्वरं वागीशं पूजयेत्कुराडमध्यमे ४३
अष्टदिक्पालकांश्चैव कुराडमध्ये तु पूजयेत्
समिदाज्य चरूल्लाजान् सर्षपांश्च तिलांस्तथा ४४
वेरगुमुद्गं तथा माषं निष्पावं शिम्बमाढकम्
समिधो मूलमन्त्रेर आज्यं गायत्रिमन्त्रतः ४५
अघोरेण चरुं हुत्वा लाजं वामेन हूयते
सर्षपं कवचेनैव सक्तुं तत्पुरुषेण तु
तिलमीशानमन्त्रेण सद्यमन्त्रेण वेगुकम्
शिरोमन्त्रेण मुद्गं तु शिखामन्त्रेण माषकम्
शिम्बं च हृदयेनैवाढकं नेत्रमन्त्रतः ४६
निष्पावं तु हुनेत्पश्चात् त्रियम्बकेरौव मन्त्रतः
शतमर्धं तदर्धं वा जुहुयात्क्रमशः पुनः ४७
धूपदीपं हृदा दत्वा कुराडस्योर्ध्वे बलिं क्षिपेत्
शक्रादिलोकपालानां स्वस्वनाम्नाथ देशिकः ४८
कुराडदक्षिरापार्श्वे तु मराडलद्वितयेऽपि च
अन्तर्बहिर्बलिं कुर्यात् पूर्वोक्तेन विधानतः ४९
विद्येशाष्टकमापूज्य नमोन्तमर्चनं कुरु
स्वाहान्तं हृदां प्रोक्तं निवेद्यादि निवेदयेत् ५०
शिवकुम्भे शिवं पूज्य वर्धन्यां तु मनोन्मनीम्
धूपदीपं तदा दत्त्वा चुलुकोदकमाददेत् ५१
भक्त्या तिष्ठति तत्काले गोमये मराडले स्थिते
प्रोक्षयेदस्त्रतोयेन संताड्य च हृदा क्रमात् ५२
मलमायादिपाशानां विश्लिष्टं क्रियते मया
ज्ञानं च जन्यते शिष्ये कारयेद्विधिपूर्वकम् ५३

पाशच्छेदे विकर्तव्यं हुं फट् पाशुपतेन च
आहुतीनां त्रियं दद्यात् गायत्र्या चैव होमयेत्  ५४
धूपदीपं हृदा दत्वा पुण्याहं वाचयेत्ततः
ज्ञानखड्गं च संधार्य नाडीसंधानमात्मनि  ५५
अक्षरन्यासकं चैव शिष्यदेहे तु विन्यसेत्
धूपदीपं हृदा दत्वा प्रविशेदग्नि संमुखम्  ५६
आहुतिः पञ्चधा प्रोक्तं पञ्च ब्रह्मषडङ्गकैः
देशिकेन प्रकर्तव्यं शिष्ये पातं प्रकीर्तितम्  ५७
बीजमुख्यसुमन्त्रेण स्पर्शहोमं तु कारयेत्
धूपदीपं हृदा दत्वा शिष्यं हृदय सञ्चयम्  ५८
क्षालयेच्छिष्यहस्तं तु तण्डुलं संप्रपूरितम्
पादाङ्गुष्ठशिरो दृष्टिः शिष्यसंमुखमेव हि  ५९
त्रियम्बकेन मन्त्रेण शिष्यकौतुकबन्धनम्
बृहत्सामेतिमन्त्रेण भस्म वै दापयेत्ततः  ६०
होमशेषं चतुर्भागं एकभागं निवेदनम्
एकभागं बलिः प्रोक्तं गुरवे चैकभागकम्  ६१
एकभागं तु शिष्याणां प्राशयेत् स्वयमेव तु
गुरुश्च प्राशयेच्चैव गुरुपादपदे तथा  ६२
शयने शयितः कार्यः शुभकर्म विलोक्य च
दुःस्वप्ने तन्निवृत्तौ च प्रायश्चित्ताहुतिर्यथा  ६३
पञ्चपञ्चाहुतीर्हुत्वा पञ्चब्रह्म षडङ्गकैः
द्वितीयदिवसे चैव गुरुशिष्य विधीयते  ६४
वल्मीकमृच्छकृच्चूर्णं मधूक कुशभस्मना
जलैश्च लेपयेद्देहं स्नापयेत् शिष्यदेहिकम्  ६५
भूष्य स्नाप्य तथा कर्म स्नातं शिष्यं विभावयेत्
आर्द्रवस्त्रं वर्जयित्वा शुद्धवस्त्रेण वेष्टयेत्

स्नापयेत् शुद्धसर्वाङ्गो वस्त्रौ संपरिधार्य च
तर्पयेद्विधिवत्पूर्वं विशेषतर्पणं तथा ६६
मण्टपे वापरे वापि पादप्रक्षालनं चरेत्
प्रविशेन्मण्टपे मध्ये चोद्धूळ्य भस्मना गुरुः ६७
पूजयेत्पूर्वमात्मार्थं विशेषं पूजयेच्छिवम्
हविर्निवेद्य ताम्बूलं नित्यनैमित्तिकं तथा ६८
पूजान्ते तु जपेन्मूलं होमयेत्पञ्च पञ्चकम्
ततो वै मण्टपाद्बाह्ये पादप्रक्षालनं कुरु ६९
भस्मना लेपयेदाङ्गं प्रविशेन्मण्टपालये
मण्टपे स्थण्डिले चैव मण्डलादीन्प्रपूजयेत् ७०
आचार्यो मूर्तिपैस्सार्धं सर्वगन्धानुलेपनः
पञ्चाङ्गं भूषणैर्युक्तं गन्धमाल्यैर्विभूषणम् ७१
नववस्त्रपरीधानः सोत्तरीयक एव च
प्रोक्षयेत्कुशतोयेन पुनः पुण्याहमाचरेत् ७२
अग्निकार्योक्तमार्गेण देशिको मूर्तिपैस्सह
समिदाज्यचरूल्लाजान् सर्षपां च यवांस्तिलान् ७३
निष्पावं शिम्बमेवोक्तं सत्तुकं वेणुमेव च
गुलं मधु त्वपूपं च स्कन्दं च कदलीफलम् ७४
अपामार्गं तु नीवारं साधयित्वा तु होमयेत्
पलाशवटमश्वत्थं शमीमायूरखादिरम् ७५
प्लक्षोदुम्बरबिल्वं च पञ्चविंशति हूयते
शमीं मूलेन हुत्वा तु आज्यं तत्पुरुषेण तु ७६
गायत्र्या च चरुं हुत्वा लाजं घोरेण रूपिणा
माषं वै वामदेवेन कदलीनां तथैव च ७७
शिरसा च तिलं हुत्वा शिखामन्त्रेण मुद्गकम्
कवचेन तु निष्पावं नेत्रेणैव तु सत्तुकम् ७८

गुलमस्त्रेण चेत्याहुर्मधु सदाशिवेन तु
ब्रह्मजज्ञानमन्त्रेण अपूपं च हुनेत्ततः ७९
शुद्धं शुध्येतिमन्त्रेण कदलीफलमेव च
वर्मणा वैत्वपामार्गं नीवारं सोमदैवतम् ८०
द्रव्यं तु प्रथमं वापि होमयेत्तु शताहुतिम्
शिष्यदेहं प्रकर्तव्यं व्योमव्यापि पदैरपि ८१
धूपदीपं तथा तस्मै भस्मना नादवच्छिवम्
सूर्यमण्डलके स्थित्वा शिष्यं चेत्संमुखं मुखम् ८२
तत्त्वन्यासं प्रकुर्वीत प्राशयेत्पञ्चगव्यकम्
अग्निमण्डलके स्थित्वा मन्त्रन्यासं ततः परम्
यज्ञसूत्रं प्रदातव्यं ब्रह्मक्षत्रे तु शिष्ययोः
धूपदीपं हृदा दत्त्वा भस्म वै दापयेत्ततः
प्रविशेन्मण्डपे स्थिवा हस्तमानेन कल्पयेत्
अग्निस्थं मुखमित्याहुर्हुत्वा मूलैर्दशाहुतिम् ८३
धूपदीपं हृदा दत्वा बलिमेतत्प्रकीर्तितम्
कुण्डे चैव बलिं दद्यात् लोकपालांश्च विन्यसेत् ८४
समिदाहुतिभिर्युक्तं गायत्र्या पञ्च होमयेत्
देशिकस्य दक्षहस्ते अक्षतं चन्दनं तथा ८५
पद्ममष्टदलोपेतं कर्णिका केसरैर्युतम्
तन्मध्ये विन्यसेद्देवं सम्यगावाहयेद्गुरुः ८६
शिष्यस्य शिरसि न्यस्त्वा शिवहस्तं विधापयेत्
आहुतित्रितयं दद्यात् ब्रह्मविष्णुशिवस्य च ८७
पद्ममष्टदलोपेतं कर्णिका केसरैर्युतम्
तन्मध्ये स्वस्तिकं देहे आवाहयेत्ततो गुरुः ८८
शिष्यात् शिरस्य विन्यस्य शिवहस्ते निधापयेत्
नेत्रबन्धं च कर्तव्यं शिष्यनेत्रे पिधाय च

अञ्जलौ वासितान्पुष्पपत्रदूर्वाक्षतानपि ९०
प्रदक्षिणत्रयं यान्त्वा लिङ्गसीम्नयथ संस्थितः
शिष्यस्य दक्षिणे कर्णे प्रणवोच्चयारपूर्वकम् ९१
बीजाकारं ततः पश्चात् पञ्चमन्त्रं समुच्चरन्
पुष्पाञ्जलिं ततो लिङ्गं नमस्कारेण संक्षिपेत् ९२
प्रायश्चित्ताहुतिं हुत्वा मूलेनाष्टोत्तरं शतम्
पञ्चब्रह्मषडङ्गैश्च अष्टोत्तरशतं हुनेत् ९३
अन्तर्बलिं ततः कुर्यात् पूर्ववत् देशिकोत्तमः
यजेन्नाम परं चैव शिष्याय च प्रदापयेत् ९४
नाम पूर्वं यथा देयं परं नाम न कारयेत्
विप्रं शिवं नृपं देवं वैश्यं गणमिहानयेत् ९५
शूद्रं दास इति नाम कारयेत् विधिना सह
भूषस्नाप्यक्रमं स्नानं शिष्येनैव नभावयेत् ९६
आर्द्रवस्त्रं वर्जयित्वा शुद्धवस्त्रेण वेष्टयेत्
गुरुपादं प्रणम्याथ ताम्बूलं तु ततो ददेत् ९७
आचार्यं पूजयेत्तत्र वस्त्रपञ्चाङ्गभूषयणैः
ब्राह्मणान् भोजयेत्तत्र दैवज्ञं पूजयेत्ततः ९८
अतिशुद्धं च गानं च पूजयेत्समिधो ददेत्
कृत्वाभ्यङ्गं तयोर्वापि शिष्यायामुदकं तथा ९९
शरीरमर्थं प्राणं च सद्गुरुभ्यो निवेदयेत्
शिष्यस्य सर्वमर्थं च हस्तं शिवस्य भावयेत् १००
सर्वेमासेषु कर्तव्यं दीक्षाकर्म विधीयते
दीक्षितस्तु नकारस्तु पुत्रपौत्रविवर्धनम्
जातिभेदा न विद्यन्ते दीक्षयेत्सर्वमानुषान्
सर्वमेतेषु कर्तव्यं दीक्षितं दिनमेव तु
गर्भिणी प्रसवे तन्तु परिवारमिति स्मृतम् १०१

परिवारमिदं शिष्यं ज्ञानगर्भसमुद्भवम्
तद्दिनं ज्ञानगर्भं तु सर्वमासेषु दीक्षयेत् १०२
बालस्य मूढा च शुक्लवत्काश्यपस्य च
सर्व मासेषु कर्तव्यं दीक्षाकर्म विधीयते १०३
दक्षितस्तुंकारस्तु पुत्रपौत्रविवर्धनम्
जातिभेदं न विद्यन्ते सर्वमासेषु दीक्षयेत् १०४
समुद्रमत्स्यकूर्मं च मण्डूकं कटकं तथा
एकयोनि प्रसूतानां जातिभेदं न चिन्तयेत् १०५
आचार्यं पूजयेत्तत्र वस्त्रहोमाङ्गुलीयकैः १०६
चाक्षुषी स्पर्शदीक्षा च वाचकी मानसी तथा
शास्त्री च योगदीक्षा च हौत्रीत्यादिरनेकधा १०७
इति चिन्त्यशास्त्रे प्रतिष्ठातन्त्रे शिवदीक्षाविधिः एकत्रिंशत्पटलः

## क्रियादीक्षा विधिः

क्रियादीक्षां प्रवक्ष्यामि शृणु त्वं नन्दिकेश्वर
दीयते ज्ञानसंभावं क्षीयते च मलत्रयम् १
तस्माद्दीक्षा समाख्याता ज्ञानं दत्वा मलापहा
गुरूणां चैव सर्वेषां मुख्यस्सन्मार्गदायकः २
धर्मार्थकाममोक्षाणां कारणं स गुरुः स्मृतः
विनश्यत्यन्धकारस्तु यथा सूर्यस्य सन्निधौ ३
गुरोर्निरीक्षणादेव सर्वपापं विनश्यति
न लिप्यते मलेनैव पद्मपत्रमिवाम्भसा ४
तस्माद्गुरुश्शिवः प्रोक्तो गुरुशक्तिर्मनोन्मनी
दीक्षाशतसहस्रं च कृतवान्प्राणिनामपि ५
शिवज्ञानविलुप्तश्चेज्ज्ञानपादं समाश्रयेत्
ज्ञानहीनं गुरुं प्राप्य कृतो मुक्तिस्तु देहिनाम् ६

भिन्ननावाश्रितस्त्वब्धिं यथा पारं न गच्छति
तस्मात्सर्वप्रयत्नेन श्राश्रयेज्ज्ञानपारगम् ७
मधुलुब्धो यथा भृङ्गः पुष्पात्पुष्पं वनान्तरे
ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत् ८
प्रथमं प्रोक्षयेच्छिष्यं पूजान्ते मराटपाग्रके
वज्रासनोपरि न्यस्त्वा सर्वालङ्कारसंयुतम् ९
प्राशस्तोहं प्रकर्तव्य जीवान्तं वह्नि संयुतम्
मायाबीज समायुक्तं बिन्दुनाद समन्वितम् १०
सर्वपापहरं सर्व क्षुत्रादि भय नाशनम्
श्रग्निमराडलमध्ये तु रश्मिच्छाला समाकुलम् ११
प्रणवं च समुद्धृत्य वह्निमायासमन्वितम्
बिन्दुनादसमायुक्तं सर्वपापहरं शिवम् १२
कूटाक्षरेण वह्निं च मायाबीजसमन्वितम्
कलावेष्टनसद्भावं गुह्यद्वारे सुयोजयेत् १३
चिन्तयित्वा सदामन्त्रं पाशच्छेदविधीयुतम्
सदाचार्यः प्रसन्नात्मा एकचित्तस्समाहितः १४
श्राचार्यो दक्षिणे हस्ते प्रसादेन समन्वितम्
मध्यमानामिकामध्ये श्वेतपुष्पं गृहेद्बुधः १५
श्रनन्यमानसो भूत्वा तत् पुष्पाभ्यन्तरे शिवम्
सदाशिवं स्वभावेन तच्छिष्यहृदये न्यसेत् १६
गुह्यमन्त्रमनुस्मृत्य द्वौ हस्तौ शिरसि न्यसेत्
प्रोक्षयेत् शङ्खतीर्थेन पुष्पं शिरसि निक्षिपेत् १७
न्यासध्यानादिकं कृत्वा नित्यमेव सदा न्यसेत्
पश्चाद्दीक्षां प्रकुर्वीत श्रङ्कुराणयर्पयेत्सुधीः १८
द्वितीयं मराटपं कृत्वा हलकृत्य तृतीयकम्
चतुर्थं मराटपं कार्यं पञ्चमं स्थरिडलं कुरु

कुम्भस्थापनं षष्ठं सप्तमं देवता न्यसेत् १९
पूजयेदष्टमं प्राज्ञो नवमं दन्तकाष्ठकम्
शिष्यप्रवेशं दशमं रक्षासूत्रं दशैककम् २०
अभिषेकं द्वादशं स्याज्जपेन्मूलं त्रयोदशम्
चतुर्दशं नेत्रबन्धं च पञ्चामृतं त्रिपञ्चकम् २१
षोडशं मलिकं ज्ञेयं पञ्चमुद्रावृतं ततः
प्रदक्षिणत्रयं पश्चात्पुष्पमेकोनविंशतिः
बीजानामधिपश्चन्द्रो बीजनिर्वापमाचरेत्
पालिका नवभिस्सप्तं पञ्चभिर्वाथ कल्पयेत् २२
तिलसर्षपमुद्गानि माषशिम्बाढकानि च
कुलुत्थं सप्तबीजानि विन्यसेच्छ्रद्धया युतः २३
विंशतिं नामग्रहणं दर्शयेदेकविंशतिः
बीजानामधिपाश्चन्द्रो बीजनिर्वापमारभेत् २४
स्थण्डिलं कारयेद्विद्वान् चन्द्रकुम्भं न्यसेत्ततः
क्षीरेण क्षालयेद्बीजं सर्वशस्त्रसमायुतः २५
ताम्बूलं दापयेत्पश्चान्मङ्गलारवशोभितम्
हृदयेन तु मन्त्रेण बीजनिर्वापणं कुरु २६
प्रोक्षयेच्चन्द्रतोयेन चन्द्रबीजमनुस्मरन्
उद्याने विजने देशे गृहे वा निलयेऽपि वा २७
मण्टपं कारयेद्विद्वान् सप्ताष्ट नव हस्तकैः
षोडश स्तम्भसंयुक्त द्वादशस्तम्भमेव वा २८
मण्टपस्य त्रिभागैकमध्यमे वेदिकां कुरु
आयामार्धं तदुत्सेधं दर्पणोदरसन्निभम् २९
युगांगुलसमं निम्नं निम्नोन्नतविवर्जितम्
कुण्डानि च प्रकर्तव्यमुक्ताकारं तु पूर्ववत् ३०
तालमात्रं खनेद्भूमौ विस्तारं हस्तमुच्यते

नाभियोनिसमायुक्तं पूर्ववत् लक्षणं कुरु ३१
गोमयालेपनं कृत्वा दर्शमालाभिरावृतम्
पुष्पमालासमायुक्तं तरङ्गेणैव वेष्टितम् ३२
वितानध्वजसंयुक्तमुक्तादामभिरावृतम्
स्तम्भानि वेष्टयेद्वस्त्रैर्मण्डलं वेष्टयेत्क्रमात् ३३
श्वेतं रक्तं तथा श्यामं पीतं कृष्णं च पञ्चमम् ३४
एवं पञ्चरजः प्रोक्तं देवता पञ्चमूर्तिकाः
श्वेतस्य शालिपिष्टेन रक्तं इष्टकया तथा ३५
श्यामलं तु शकृच्चूर्णं पीतं हारिद्रचूर्णकम्
धान्याङ्गारैस्तथा कृष्णं पञ्चचूर्णैः प्रकल्पयेत् ३६
त्रिहस्तं वा द्विहस्तं वा एकहस्तमथापि वा
मण्डलं वर्धयेद्धीमान् पद्माकारं तथैव च ३७
अष्टपत्र समायुक्तं कर्णिका केसरैर्युतम्
तत्त्रिभागैकभागे तु कर्णिका केसराणि च ३८
कर्णिकां पीतवर्णेन रक्तवर्णेन केसरान्
तद्दलाग्रं च मूलं च श्वेतवर्णेन लेखयेत् ३९
कर्णिकां बीजसंयुक्तं श्वेतरक्तं समालिखेत्
दलाष्टकं तथा रक्तं रेखां श्वेतेन कल्पयेत् ४०
कृष्णेनाभ्यन्तरं ज्ञेयं वृत्तं श्वेतं तथा स्मृतम्
तद्बहिश्श्यामवृत्ते तु तद्बाह्ये शुक्लमुच्यते ४१
सर्ववर्णान् समास्तीर्य शेषं युक्त्या प्रकल्पयेत्
तद्बाह्ये चतुरश्रं तु कल्पयेत्कल्पवित्तमः ४२
ईशानं कर्णिकामध्ये पूर्वे तत्पुरुषं दले
अघोरं दक्षिणे पत्रे वामदेवं तु चोत्तरे ४३
सद्यं पश्चिमपत्रे तु पूजयेद्ब्रह्मपञ्चकम्
आग्नेय्यां हृदयं पूर्वे ऐशान्यां तु शिरो यजेत् ४४

नैर्ऋत्यां तु शिखां पूज्य वायव्यां कवचं यजेत्
कर्णिकावृतौ नेत्रं तु अस्त्रं दिक्षु प्रविन्यसेत् ४५
गन्धपुष्पं च धूपं च दीपं नैवेद्यमेव च
पूजयेत्तु विशेषेण नृत्तगेयकवाद्यकैः ४६
मण्डलस्येशदिग्भागे तिलतण्डुलशालिभिः
स्थण्डिलं कारयेद्विद्वान् करद्वयसमन्वितम् ४७
तन्मध्ये शिवकुम्भं तु तस्य वामे तु वर्धनीम्
चतुर्दिक्षु चतुष्कुम्भान् विन्यस्य तान्समाश्रयेत् ४८
मध्यकुम्भे शिवं पूज्य वर्धन्यां तु मनोन्मनीम्
पञ्चब्रह्मस्वरूपाणि पञ्चकुम्भेषु विन्यसेत् ४९
नवरत्नं स्वर्णपुष्पं च वस्त्रभूषानि कल्पयेत्
तद्बहिश्चाष्टकुम्भेषु नर्मदाद्यष्टतीर्थकान् ५०
पञ्चौषधीः पञ्चशालीः पञ्चमृच्च क्रमात् क्षिपेत्
सहदेव्येकपात्रं तु भद्रां वैकङ्कतं तथा ५१
विष्णुक्रान्ती च पञ्चैते पञ्चोषध्यः प्रकीर्तिताः
शालिकं कोद्रवं चैव यवनीवारवैणवम् ५२
पर्वते च तटाके च समुद्रे वृषशृङ्गके
क्षेत्र पञ्चकमृद्ग्राह्या क्रमेणैव तु निक्षिपेत् ५३
अर्घ्येण गन्धपुष्पेण पूजयेच्छिवमण्डलम्
शिष्यस्नानं प्रकुर्वीत विधिना चामयेत्ततः ५४
दन्तकाष्ठं तथा सम्यक् क्षीरवृक्षसमुद्भवम्
अस्त्रमन्त्रं समुच्चार्य दन्तकाष्ठं तु कारयेत् ५५
पञ्चगव्यं पिबेद्धीमान् पञ्चमृत्सलिलं तथा
पुनः स्नानं तथा कृत्वा शुद्धवस्त्रेण वेष्टयेत् ५६
पाद प्रक्षालनं कृत्वा देहशुद्धिमथाचरेत्
मण्टपस्योत्तरे भागे देशिकः पूजयेच्छिवम् ५७

संस्थाप्य शिष्यं तस्याग्रे शपथं कारयेद्बुधः
रक्षासूत्रप्रबन्धं च कारयेद्धृदयेन तु ५८
आचार्यो होममारभ्य समिदाज्य चरून् क्रमात्
सद्यो जातेन पालाशं आज्यं मूलेन होमयेत् ५९
अघोरेण चरुं हुत्वा प्रत्येकं व्याहृतिं हुनेत्
शतमष्टौ तदर्धं वा तदर्धं वापि होमयेत् ६०
महेशाख्यं च सादाख्यं प्रासादं च षडङ्गकम्
पञ्चब्रह्म हुनेद्विद्वान् शताष्टाहुतिसंख्यया ६१
मण्टपस्योत्तरे शिष्यं शाययेत्स्वप्नमाणवम्
स्वप्नार्थं मन्त्र ऐवोक्तः स्वप्नाधिपतिरेव च ६२
नमश्शम्भो त्रिणेत्राय पिङ्गलाय महामुने
व्योमाय विश्वरूपाय स्वप्नाधिपतये नमः ६३
एतन्मन्त्रं जपित्वा तु शाययेत्तु कुशोपरि
दुःस्वप्नप्रतिभासे तु जपेन्मूलसहस्रकम् ६४
सुस्वप्नं चेत्तु मङ्गल्यं सर्वदोषनिकृन्तनम्
देशिकं पूजयेत्तत्र वस्त्रहोमाङ्गुलीयकैः ६५
पञ्चाङ्गभूषणं कृत्वा गुरुदेवाय दापयेत्
शरीरमर्थं प्राणं च सद्गुरुभ्यो निवेदयेत् ६६
साग्निकार्यकृतं वापि नाग्निकार्यकृतं तु वा
स्नानं प्रविशेत्तत्र वस्त्रस्नानं प्रकल्पयेत् ६७
तन्मध्ये स्थापयेच्छिष्यमभिषेकमथाचरेत्
प्रधानादिक्रमेणैव उत्थाप्यकुम्भकान्क्रमात्
आचार्य सिद्धिमन्त्रेण सदा ध्यानपरायणः ६८
न्यसेन्मन्त्रं विधानेन तैः कुम्भैरभिषेचयेत्
शुद्धवस्त्रं समाच्छाद्य प्रक्षाल्य पाणिपादकौ ६९
आचमनं प्रकुर्वीत सर्वभूतबलिं ददेत्

प्रवेशमरडलस्याग्रे वन्दयेद्गुरुमव्ययम् ७०
नेत्रमन्त्रं समुच्चार्य नेत्रबन्धं तु कारयेत्
मधुशर्करपानीयघृतक्षीरविमिश्रितम् ७१
बीजामृतेन तं ध्यात्वा शिष्यः पञ्चामृतं पिबेत्
पञ्चब्रह्मं भवेन्मौलौ शिरसा धारयेत्ततः ७२
द्वादशाङ्गुलदैर्घ्यं तु स्वलंकृत्य विधानतः
ईशानेन तु मन्त्रेण च्छत्रकां शिरसि न्यसेत् ७३
तत्पुरुषेन मन्त्रेण कर्णयोः कुण्डलद्वयम्
अघोरेण तु मन्त्रेण कण्ठे मालां प्रलम्बयेत् ७४
वामदेवेन मन्त्रेण हस्तयो रुचकद्वयम्
सद्योजातेन मन्त्रेण मेखलां बन्धयेत्ततः ७५
आचार्यो दक्षहस्तेन शिष्यहस्तं ग्रहेत्तथा
मण्टपं प्रविशेत्तत्र स्तोत्रमङ्गलवाचकैः ७६
प्रदक्षिणत्रयं कृत्वा ईशानेन तु मन्त्रतः
पश्चिमाननसम्भूतश्वेतपीतादिवर्णकम् ७७
पश्चात्तामवभासं च तत्सर्वं सफलं भवेत्
पुष्पाञ्जलिं ततः कृत्वा शिष्यपुष्पं तु पातयेत् ७८
नेत्रबन्धं ततस्त्यक्त्वा दर्शयेन्मण्डलं बुधः
सत्पुष्पपातनं दृष्ट्वा तन्नामं धारयेत्क्रमात्
पूजास्थानं विशेत्पश्चाच्छिष्यको वन्दयेद्गुरुम्
अर्घ्यं दत्वा क्रमेणैव तत्सोपानक्रमेण तु
द्विपदा बोधयित्वा तु पश्चात्पञ्चाभिषेचनम् ७९
ममलोद्वासनं कृत्वा यथाबुद्धि तथादिशेत्
क्रियादीक्षां प्रवक्ष्यामि ज्ञानदीक्षाविधिं शृणु

इति चिन्त्यशास्त्रे सहस्त्रग्रन्थे दीक्षा द्वात्रिंशत्पटलः

ज्ञानदीक्षा विधिः

ज्ञानदीक्षां प्रवक्ष्यामि सत्त्वानां मुक्तिहेतुकाम्
विप्रादीश्वपचान्ताश्च दीक्षायोग्या स बुद्धिमान् १
ज्ञानदीक्षां प्रकुर्वीत जातिभेदं न चिन्तयेत्
विप्रचण्डालसंसर्गादुत्पन्नो गर्भ एव च २
एकजातिरियं तस्माज्ञातिभेदं च चिन्तयेत्
वृषिमहिषसंसर्गात्तत्र गर्भो न विद्यते ३
जातिभेदमिदं ज्ञेयं गवां योनिस्थितो भवेत्
सुगन्धं चैव पुष्पं च धूपदीपं चरुं तथा
सर्वद्रव्याणि संपाद्य सत्सङ्गैश्च समन्वितः ४
द्रव्यशुद्धिं पुराकृत्वा पूर्वोक्तेन विधानतः
मण्डलं पूजयेद्विद्वान्मध्यरात्रौ विशेषतः ५
मण्डलाग्रे स्थितं शिष्यं वज्रासनस्य मध्यमे
शिवं चिन्त्य तथालब्धं कलाषोडशसंयुतम् ६
भूतविद्या प्रवेष्टव्या दिव्या पञ्चकलोद्भवा
शालजं मर्दनं कृत्वा कृष्णगन्धानुलेपनम् ७
तावत्सेव्याकृते मुद्रा यावत्कर्पूरकावधि
मुद्रया च मुखं बध्वा रूपा यस्य मुखं तथा ८
सेवया तत्र यद्भूतं शिष्यं वर्तयितव्यमेव वा
कारितव्यं च तत्रैव समासं शिष्यगोचरम्
स्वसंवेद्यं भवेज्ज्ञानं सदोदयमखण्डितम् ९
आणवादिमलोपेतं सर्वज्ञज्ञानसमंभवम्
आणवं शाम्भवं चैव शाक्तेयं त्रिविधं तथा १०
शरीरं कम्पते यावत्तत्क्षणात् प्राणधारणात् ११
तस्य कालान्तरे ज्ञेयं शिष्यस्य ज्ञान --- ज्ञनम्
वेधकादिगुणोपेतं आणवा तत्प्रकीर्तितम् १२

मानसं वाचिकं स्पर्शं दर्शनं च चतुर्विधम्
बोधानन्दगुणप्रोक्तं शाम्भवं नाम सङ्ग्रहम्  १३
गुरुकारुण्यमात्रेण दुष्टो भवति वत्सलः
सद्यस्सद्गुणसंप्राप्तिर्वेधोऽयं दर्शनो भवेत्  १४
गात्रसन्धानकं चान्यं भित्त्यादिस्पर्शनं तथा
पश्चाच्छरीरहस्ते च शिरःपादे तथैव च  १५
उच्छिष्टश्लेष्मणा प्राणं विधाय वाचिको भवेत्
शते वा द्विशते पञ्च सहस्रयोजनेऽपि वा  १६
दूरादाराधनं भक्त्या त्रिशुध्या च करोति यः
तस्य भक्तिं गुरुर्ज्ञात्वा कारुण्येन यदा स्मरेत्  १७
तदेव गुणसंप्राप्तिर्वेधो मानस उच्यते
शीतोष्णं शमते पश्चात् गुणानां रुदितादिकम्  १८
शरीरावेशशक्तोऽयं वेधकः काय उच्यते
दीक्षामात्रेण शिष्यस्य एवमादिगुणो भवेत्  १९
दासी दाससमृद्धिश्च हस्त्यश्वरथगोकुलम्
धनधान्यं च वस्त्रं च आसनं शयनादिकम्  २०
ग्रामादीन् श्रद्धया युक्तः सद्गुरुभ्यो निवेदयेत्
एकान्ते सद्गुरुस्थानं भयस्सत्वविवर्जिते  २१
द्वितीयं स्थानमेवं तु विश्वभोग समन्वितम्
लाभं शुभं विचिन्त्येन नृपस्सत्यसमन्वितम्  २२
अथवान्यकुली श्रीमान् शिष्यो भक्तिसमन्वितः
यत्संभवति तत्सर्व गुरवे सन्निवेदयेत्  २३
धनधान्यादि हीनो वा त्रिशुद्ध्या भक्तिवत्सलः
मानमोहविनिर्मुक्तः कायक्लेशपरायणः  २४
कृत्वा दीर्घ नमस्कारं स्वशरीरं निवेदयेत्
शिष्यं विनीतमाचार्यः कारुण्यादवलोकयेत्  २५

कारुरायदृष्टिमात्रेण सिद्धिर्भवति शिष्यके
विशेषगुणसंप्राप्त्यै पञ्चावस्थाः प्रकीर्तिताः २६
योगामृतरसामोदो मराडले मुद्रया तथा
नृत्तं गीतं च वाद्यं च स्वेच्छा क्रीडा प्रवर्तते २७
पादं भूतितले प्राप्य मराडलामराडलं तथा
मन्त्रशुद्धिस्तथा गीतं करस्फोटाङ्गमुद्रया २८
नृत्तं वाद्यं सदा पुष्पं सर्वभाषाप्रजल्पनम्
स्वयमेव गुणोत्पाते गुणानां शतमुद्भवेत् २९
सहस्रं द्विसहस्रं वा तल्लये लयमुद्भवेत्
समस्तगुणसम्प्राप्तिः कृत्वा कर्मक्षयात्ततः ३०
तस्मिन्नेव तथातीते तीव्राज्ञा संप्रवर्तते
प्राप्यते परमं ज्ञानं जरामरणवर्जितम् ३१
आकाशगमनं कायाद्वाचिकं कविताद्वयम्
क्लेशादिवर्जितं चित्तं आज्ञात्रयमनुत्तमम् ३२
सूक्ष्मं सर्वगतं ज्ञानं अखरिडतमहोदयम्
गच्छतस्तिष्ठतो वापि स्वपतो जाग्रतोऽपि वा ३३
सदोदयं सदानन्दं वर्तते च निरन्तरम्
यदानन्दोद्भवे देहे क्षुधा निद्रा तृषा न हि ३४
आसनं नृत्तगानं च धावनं स्वेच्छया चरेत्
रूपं च वर्णरूपं च आनन्दं त्रिविधं तथा ३५
रूपं बहुविधं ध्यानं वर्णरूपमनेकधा
रूपं च कल्पना ध्यानं वर्णरूपं च कल्पना ३६
रूपारूपं न चानन्दकल्पना रहितं मतम्
शाश्वतं तुर्यरहितं आनन्दं परमं पदम् ३७
ज्ञातृज्ञानं जयैश्चैव विहीनं परमं पदम्
ज्ञानशक्तिक्रियाशक्तिरिच्छाशक्तित्रयस्तथा ३८

शक्तिलक्षणसम्पन्नं गुप्ततन्त्रे तु लक्षयेत्
चाक्षुषी स्पर्श दीक्षा च वाचकी मानसी तथा ३९
शास्त्री च योगदीक्षा च भौत्रीत्यादिरनेकधा ४०
अज्ञान तिमिरान्धस्य ज्ञानाञ्जनशलाकया
चक्षुरुन्मीलितं येन तस्मै श्री गुरवे नमः ४१
इति चिन्त्यशास्त्रे ज्ञानदीक्षाविधिः त्रयत्रिंशत्पटलः

## अन्त्येष्टि विधिः

अन्त्येष्ट्यास्तु विधिं वक्ष्ये दहनं खननं द्विधा
ध्रुवं ज्ञानं तथालब्धं सङ्कल्पज्ञानसम्भवम् १
कलाज्ञानोक्तमार्गेण तत्कालं तं निरीक्षयेत्
कालान्तरं तु कर्तव्यं आरम्भे देहमुत्तमम् २
तलं पूर्वं विनिश्चित्य अङ्कुरार्ण्यर्पयेद्बुधः
नवमन्त्रमनुस्मृत्य नवशक्तिप्रयोगतः
अष्टाक्षरं पुरा कृत्वा सपद्येकाक्षरं भवेत् ३
कृत्वा मोक्षं कपालस्य वायुमूर्ध्वे च योजयेत्
कृत्वा तन्त्र परे सूक्ष्मे आत्मानं योजयेद्बुधः ४
परं विशिष्टमुत्क्रान्ते वपनं वापि कारयेत्
अर्धस्नानमयं ज्ञेयं ध्यायेद्योगानुसारतः ५
यथा वै देहते तस्य अन्त्येष्टिषु दिनेऽपि वा
निर्देशं तु समासाद्य गोमयेनानुलेपयेत् ६
कृत्वा शरीरशुद्धिं तु रजन्यामलकादिभिः
नववस्त्रैरलङ्कृत्य गन्धमाल्यैरलङ्कृतम्
सर्वगन्धानुलिप्ताङ्गं भस्मोद्धूलितविग्रहम्
वस्त्रसूत्रोत्तरीयं च दर्भानोपरि विन्यसेत्
वितानध्वजसंयुक्तं दर्भमालाभिरावृतम्

तदग्रे मराटपं कृत्वा पिष्टचूर्णैरलङ्कृतम्
स्थरिडलं तत्र कर्तव्यं शक्तितराडुलकादिभिः
पञ्चकुम्भं तु सङ्ग्राह्य वर्द्धनीसंयुतं भवेत् ७
ससूत्रान् सापिधानांश्च सवस्त्रान्वारिपूरितान्
शिवकुम्भं तु मध्ये तु वर्धनीं तस्य वामके ८
चतुर्दिक्षु चतुः कुम्भान् स्थापयेत्तु विशेषतः
देवमन्त्रमनुस्मृत्य कुम्भमध्ये तु विन्यसेत् ९
देवीमन्त्रमनुस्मृत्य वर्धनी तोयकं न्यसेत्
चतुरश्रार्धचन्द्रश्च त्रिकोणं च षडश्रकम् १०
सुवृत्तं च पृथिव्यादिमराडलाकृतयः क्रमात्
पीतं शुक्लं च रक्तं च कृष्णाभं धूम्रवर्णकम् ११
पृथिव्यादीनि बीजानि ल व र य ह कारकाः
पृथिव्यादीनि भूतानि लद्यादीशे च योजयेत् १२
तत्तत्कुम्भे न्यसेद्देवं संहारक्रममेव हि
गृहद्वारे गृहस्थाने चूर्णोत्सवं समारभेत् १३
अथवा तां चितास्थाने चूर्णोत्सवं समारभेत्
भस्मशुभ्रतनुं कृत्वा त्रिपुराड्रं विधिना बुधः १४
संहारन्यासमेवोक्तं स्थाने प्रोक्षणसंयुतम्
अश्रं तु गोमयैर्लिप्य सुस्थलं कारयेत्सुधीः १५
पूर्वे तु स्थाप्य भेरीं तु गन्धादिभिरथार्चयेत्
ताडयेद्देशिकानां तु पश्चाल्लूखलमर्चयेत् १६
लूखलं मुसलं भेरीं वेष्टयेद्वस्त्रमेव च
शिवभक्ता विशेषेण शिववाचकघोषणम् १७
शिवदासीस्समभ्यर्च्य वस्त्रगन्धादिभिस्तथा
मुसलपाणिसंयुक्तैर्लूखले च विनिक्षिपेत् १८
हरिद्राचूणिता तैलं कल्पयेच्छिवमासनम्

भक्तेषु कल्पयेत्पश्चात् पारशैवस्तु श्रेष्ठकः १९
चूर्णोत्सवं समाप्तौ तु पश्चात्प्रोतापरोहणम्
चिता स्थाने तु सङ्कल्प्य मण्टपं चतुरश्रकम् २०
चतुर्विंशति तालं स्याद्विस्तारं याममेव च
चतुर्द्वारसमायुक्तं मध्ये नवपदं तथा
मध्ये कुण्डं समाख्यातं वायव्ये रुद्रकुम्भकम् २१
ऐशान्ये वर्धनीं चैव पाशुपतेन पूजयेत्
नैर्ऋत्ये तु पुरा कृत्वा भस्मधारणन्यासयुक् २२
षोडश स्तम्भसंयुक्तं अथवाष्टकमेव वा
अथवान्यप्रकारेण चतुस्तम्भसमन्वितम् २३
दशकीलसमायुक्तं द्वारं द्वादशकीलकम्
क्षीरवृक्षसमुद्भूतं तृणमावेष्टयेत्ततः २४
कीलात्कीलं समं चोक्त दशायुधं समर्चयेत्
कालाग्निरुद्रमावाह्य वायव्यां कुम्भमेव च २५
सर्वोपाचारैस्सम्पूज्य रुद्रे पाशुपतं तथा
इत्येवं पूजयेत्वाथ अग्निकार्यविधिं क्रमात् २६
अग्निकार्योक्तमार्गेण अग्निसंस्थापनादिकम्
याज्ञिकावृक्षसमिधो सद्यमन्त्रेण होमयेत् २७
जुहुयात्स्वस्वनामभिर्हविषा चरु वर्मणा
तिलमस्त्रेण हुत्वा तु पयसा चैव नेत्रयुक् २८
शतमर्धं तदर्धं वा प्रत्येकं व्याहृतिं हुनेत्
हृदयेन तु मन्त्रेण जुहुयाच्छतसंख्यया २९
पूर्णाहुतिं च शिरसा स्विष्टमग्नेति होमयेत्
तत्स्थाने खानयेद्भूमौ दक्षिणोत्तरमार्गतः ३०
अष्टतालप्रमाणेन अर्धमात्रं सुविस्तृतम्
वामदेवेन संप्रोक्ष्य शास्त्रमार्गेण कारयेत् ३१

याज्ञिकं वृक्षमादाय कीलं तत्रैव स्पापयेत्
वेष्टयेत्सूत्रमन्त्रेण अप्रदक्षिणकं न्यसेत् ३२
षट्कसूत्रसमायुक्तं विस्तारायाममेव च
पञ्चपञ्च पदं तत्र मध्ये तत्र पदं ग्रहेत् ३३
एवं पञ्चपदमेकपृथिवी पीतवर्णकम्
वरुणनैर्ऋतयोर्मध्ये श्रुत्याणां पदमेकतः ३४
एवं स्थाने विशेषेण आप्याय श्वेतवर्णकम्
अग्नौ श्रुतिप्रदं प्रोक्तमेकं रक्तस्य वर्णकम् ३५
वायौ वेदपदं प्रोक्तमेकं कृष्णस्य वर्णकम्
ईशे वेदपदं प्रोक्तमेकं धूम्रस्य वर्णकम् ३६
ऐन्द्रान्तकमले सोमे पीतं कृष्ण सितासितम्
चितास्थाने विधिः प्रोक्तस्तत्स्थाने चार्चयेद्बुधः ३७
ओं ह्लां निवृत्तिकलायै सद्योजाताय नम इति मध्ये
ओं ह्लीं प्रतिष्ठाकलायै वामदेवाय नमः नैर्ऋते ३८
ओं ह्लूं विद्याकलायै अघोराय नमः अग्नौ
ओं ह्लैं शान्तिकलायै तत् पुरुषाय नमः वायौ ३९
ओं ह्लौं शान्त्यतीतकलायै ईशानाय नमः ईशाने
ओं हां इन्द्राय नमः पूर्वे । ओं हां यमाय नमः दक्षिणे ४०
ओं हां वरुणाय नमः पश्चिमे । ओं हां सोमाय नमः उत्तरे
इत्येवमर्चयित्वा तु बलिं पश्चाद्विशेषतः ४१
कल्पयेत्तत्र दक्षे तु शिरोभागे समाचरेत्
ज्वालामाला समायुक्तमग्निबीजेन बुद्धिमान् ४२
जलाशयं तु संप्राप्य तीर्थं कुर्याद्विशेषतः
दग्धेनाज्ये समायुक्तं प्रोक्षयेद्धृदयेन तु ४३
वस्त्रं च वर्मणा प्रोद्ध्य तदस्थिगृह्यमर्पयेत्
संस्थाप्य कुम्भपार्श्वे तु गन्धाद्यैरर्चयेत्क्रमात् ४४

ग्रहाणि भूतादि तत्सर्वं अर्चयेच्छिवमव्ययम्
यथा शास्त्रोक्तमार्गेण लौकिकाचारकं कुरु  ४५
एवमेव विधानेन कारयेत्खननं बुधः
अग्निकार्यं न कर्तव्य खननं विधिना कुरु  ४६
पूर्वोक्ते चैव देशे तु खात्वा दण्डप्रमाणकम्
प्राङ्मुखस्तत्र कुर्वीत कल्पयेदासनत्रिकम् ४७
आसनोपरि विन्यस्य गन्धाद्यैरर्चयेत्क्रमात्
शिष्यादीनां विसृज्याथ पूजयेल्लक्षणेन तु  ४८
मृदा च पूरयेत्स्निग्धं गजपादेन ताडयेत्
तस्योर्ध्वे कल्पयेत्पीठं कूटं तत्र प्रकल्पयेत्  ४९
लब्धमूर्तिं न्यसेत्कुम्भे न्यसेत्पीठा निषेचयेत्
इत्येवं खननं प्रोक्तं पूर्वोक्तं च दहेद्बुधः  ५०
अथ शास्त्रोक्तमार्गेण प्रायश्चित्तं तु वापितः
अस्त्रमन्त्रं शतं जप्त्वा तत्तत्काले विशेषतः  ५१
अघोरात्र शतं जप्त्वा स्वाहान्तेषु प्रकल्पयेत्
अघोरास्त्रशतं जप्त्वा व्योमव्यापि जपेद्बुधः  ५२
आचार्यं पूजयेत्पश्चात् वस्त्रहोमाङ्गुलीयकैः
गो भू हिरण्यदासीनां छत्रशालां प्रकल्पयेत्  ५३
परिचारान्विशेषेण यथाशक्ति सुदानकम्
प्रपुत्राश्च प्रकर्तव्यमथवा शिष्यमेव वा  ५४
माहेश्वरार्चनं पश्चाच्छिवनाम प्रकल्पयेत्
एवं सङ्कल्प्य विधिवत् अन्त्येष्टिं तु प्रकल्पयेत्  ५५
अन्तं च परमं तत्त्वं इष्टिं च प्रविवेशनम्
विधियोगमार्गेण सञ्चिन्त्य परमं शिवम्  ५६

इति चिन्त्यशास्त्रे प्रतिष्ठातन्त्रे अन्त्येष्टिः चतुस्त्रिंशत्पटलः

अन्त्येष्टिविधिः

षट् षट् सूत्रे च मध्ये हृदपदसहितं पीतवर्णं च रक्तं वेदं श्वेतं
तथाग्नावरुणमनिलके शांकरे कृष्णधूम्रम्
पीतं शुक्लं च कृष्णमरुणरुचिमरुत्वात् प्रभृत्येकमेकं भूम्यादीन् पञ्च
शक्रो यमवरुणकुबेराख्यबल्यादिपूज्याः १
अन्त्येष्ट्याः खननं प्रोक्तमन्त्येष्ट्याः साध्वशुद्धिकम् २
चिन्त्यशास्त्रे प्रतिष्ठातन्त्रे अन्त्येष्टि पञ्चत्रिंशत्पटलः

अन्त्येष्टिविधिः

अतः परं प्रवक्ष्यामि अन्त्येष्ट्याश्च विधिक्रमम्
विप्रक्षत्रिय विट्शूद्रभक्तानां च विशेषतः १
मृति तस्यावसाने तु अन्त्येष्टिकर्ममाचरेत्
शस्त्रेण विषभक्षेण सर्पादिविषसंस्पृशेत् २
पतिते गिरिवृक्षाभ्यां मृज्जलैः कुञ्जरादिभिः
दुर्मृत्युर्बहवो तस्मात् षाण्मासावधितो भवेत् ३
पुनश्च संस्कारार्थं तु दर्भैः कृत्वा स्वरूपकम्
अन्त्येष्टिकर्ममाश्रित्य गम्य प्राणांश्च तान् शृणु ४
प्राणोऽपानस्समानश्च उदान व्यान एव च
पञ्चप्राणा इमे प्रोक्ताः पञ्चभूतात्मिकास्त्विमे ५
प्राणात्मा यातनाङ्गेन पुण्यपापोक्तवद्भवेत्
अपानान्देव्यया युक्तं समानात्मा सुतेन तु ६
पैतृणोक्तमुदानात्मा व्यानात्मा भास्करे युतः
प्रेतकर्म तु सर्वेषां व्यानात्मा के गतां गतम् ७
भस्माद्व्योम स्वयं प्राण कुम्भे स्थाप्य विधानतः
व्योमात्मानं स्वयं रूपं दिक्पालान्परिवारकान् ८
स्वनाममन्त्रस्वरूपोक्तं कुम्भेषु स्थापयेत्सुधीः

व्योमव्यापि दशार्णेन पञ्चार्णेन समर्चयेत्  ९
आवृतेषु घटेष्वेव इन्द्रादि लोकपालकान्
तैलगव्याभिषेकान्ते प्रेतकुम्भाभिषेचनम्  १०
नववस्त्रेण सन्धार्य भस्मस्नानं समाचरेत्
गन्धचन्दनलिप्ताङ्गं स्वर्णमाला विभूषितम्  ११
भेरीताडनसंयुक्तं रजनीचूर्णमाचरेत्
प्रेतस्य रजनीचूर्णं दापयेद्धृदयेन तु  १२
ललाटे दापयेद्धीमान् संहारन्यासमेव च
पञ्चार्णमुपदेशेन जप्त्वा भस्म तु दापयेत्  १३
रथे वा शिबिकायां वा अन्यस्मिन्वा विशेषतः
प्रेतमारोहणं कृत्वा गच्छेच्छ्मशानवाटकम्  १४
शङ्खकाहलघोषैश्च वाद्यघोषैस्समन्वितम्
सुक्षेत्रे वा विशेषेण ग्रामादीशे बहिस्तथा  १५
क्षीरवृक्षैश्च कीलैश्च द्वादशान् मण्टपाद्बहिः
अधोऽग्रं ताडयेद्धीमान् सूत्रबन्धं च कारयेत्  १६
रन्ध्रं वा गोत्रहस्तं वा मण्टपं चतुरश्रकम्
भानुस्तम्भकलास्तम्भं मण्टपालङ्कृतौ चरेत्  १७
मध्यकुण्डयुगाश्रं वा एकमेखलसंयुतम्
हस्तविस्तारमुत्सेधं तदर्धं योनिसंयुतम्  १८
ऐशान्ये वेदिकां कृत्वा विस्तारं हस्तमात्रकम्
उत्सेधं तु तदर्धं वा समां निम्नोन्नतैर्नयेत्  १९
उत्तरद्वारमारभ्य अप्रदक्षिणमार्गतः
तोरणान् देवताः पूज्य पूर्वद्वारं प्रवेशयेत्  २०
शूलादिवज्रपर्यन्तं मम प्रदक्षिण मार्गतः
तोरणान् देवतापूज्य पूर्वद्वारे प्रवेशयेत्  २१
शूलादिवज्रपर्यन्तं अप्रदक्षिणमार्गतः

पद्मं चक्रं ततोऽभ्यर्च्य मराटपे कलशेषु च  २२
ऐशान्यां वेदिकासव्ये सुखासीनस्समर्चयेत्
अङ्गन्यासकरन्यासं कृत्वा संहारतः क्रमात्  २३
पञ्चगव्यं तु संस्थाप्य प्रोन्नयेद्वेदिकोपरि
शालिभिः स्थरिडलं न्निप्त्वा पद्मं लिख्य विधानतः  २४
कालाग्निध्यानदेवं तु घटे स्थाप्य विधानतः
एकवक्त्रं त्रिरोत्रं च द्विभुजं च द्विपादुकम्  २५
श्यामवर्णधरं देवं खड्गखेटकसंयुतम्
दन्निणाभिमुखं चैव श्वेतपद्मोपरि स्थितम्  २६
एवं ध्यानात्मरूपं तु स्वनाम्नोक्तं समर्चयेत्
अग्निस्थाने शुचिस्थाने कल्पयेद्धातयेऽपि च  २७
आयाममष्टतालं च विस्तारं तु तदर्धकम्
दन्निणोत्तरमायामं खानयेद्वासवाङ्गुलम्  २८
घातयेपि च आयाममष्टतालं च विस्तारं तु तदर्धकम्
दन्निणोत्तरमायामं घानयेद्वसुवंकुलम्  २९
शुद्धाभिर्वालुकाभिश्च निम्नं च पूरयेत्समम्
दन्निणाग्रं तु षट्सूत्रं तत्सूत्रं पश्चिमाग्रकम्  ३०
मध्ये पञ्चमिपदं ब्रह्मा पृथिवी स्थानमेव च
पीतवर्णं लकारार्णं चतुरं चैव चाकृतिः  ३१
नैर्ऋते तु जलस्थाने श्वेतं बीजं वकारकम्
अर्धचन्द्राकृतिं चैव विष्णुस्तत्र चतुष्पदे  ३२
अग्निं रक्तं च स्वस्थाने त्र्यश्रं रार्णं च रुद्रकम्
वायुं कृष्णं च स्वस्थाने यार्णं षट्कोणमीश्वरम्
ऐशे चाकाशकं धूम्र वृत्तं नादं सदाशिवम्  ३३
स्व स्व वर्णकलापोर्ध्वे अर्चे भूतान् स्वदेवताः
सोमं वरुणायाम्येन्द्रान्स्वस्वस्थाने समर्चयेत्  ३४

नैवेद्यधूपदीपाद्यैर्यजेत्कल्प्य चिता स्थले
कुराडस्य पश्चिमाशायां प्रेतं प्रोन्दय च गव्यकै  ३५
पञ्चग्रन्थिं न्यसेत्सूत्रं न्यसेत्पादाच्छिरोऽन्तकम्
शान्तिहोमं तदाश्रित्य सर्वद्रव्यैश्च होमयेत्  ३६
बिन्दुनादस्वनामेन व्यानात्मानं तदन्तकम्
योजयेत्प्रणवं चादौ स्वाहान्तं होममाचरेत्  ३७
पाशुपतास्त्रमन्त्रेण पञ्चसंख्या प्रति प्रति
हुत्वा प्रेतं न्यसेत्सूत्रग्रन्थिच्छेदं पुनः पुनः  ३८
जानुग्रन्थिस्तु पूर्वं स्यान्नाभिग्रन्थिर्द्वितीयकम्
तृतीयं तु गलग्रन्थिश्चतुर्थं तु ललाटकम्  ३९
पञ्चमं तु शिरो ग्रन्थिं छित्वा होमं पुनः पुनः
अघोरेण तु मन्त्रेण प्रायश्चित्तं शतं हुनेत्  ४०
अग्नेः कुम्भे समावाह्य प्रेते च प्रोन्नयेद्धटान्
प्रेताङ्गादि करन्यासं  संहारक्रममाचरेत्  ४१
शिवमन्त्रं नवार्णं च सव्यकर्णोपदेशयेत्
तत्संख्या च जपेद्धीमान् शिवसायुज्यदायकम्  ४२
चितास्थानं तु सम्पूज्य वर्णादुद्वासयेत्सुधीः
तत्र स्थाने चितां स्थाप्य प्रेतं न्यस्त्वा ततोपरि  ४३
वैदिकोक्तक्रमेणैव संस्कारांश्च समाचरेत्
अनाथ प्रेतसंस्कारं अश्वमेधफलं लभेत्  ४४

इति चिन्त्यशास्त्रे अन्त्येष्टिविधिः षट्त्रिंशत्पटलः

## निरध्वशुद्ध्यन्त्येष्टिविधिः

अथ वन्दये विशेषेण अन्त्येष्ट्यास्तु विधिक्रमम्
नराणां मोन्नसिद्ध्यर्थं दीन्नितानां तथा भवेत्  १
श्मशाने मराटपं वाथ षोडशस्तम्भसंयुतम्

दर्भमालाभिरावेष्टय पुष्पमाला समन्वितम्  २
द्वादशायामसंयुक्तं सक्तुकं तु क्रमेण तु
चतुर्द्वारसमायुक्तं दर्पणोदरसन्निभम्  ३
दशायुधाष्टमङ्गल्यस्त्रुक्स्त्रुवैश्च समाकुलम्
दर्भमालाभिवेष्टयं तु पुष्पमाला समन्वितम्  ४
दर्भेण नरवत्कृत्वा गोमयेनोपलेपयेत्
मण्टपे वायुदिग्भागे वेदिकां च प्रकल्पयेत्
तन्मध्ये त्वग्निकुण्डं च कल्पयेत्तु विचक्षणः  ५
कुण्डस्याग्नेयदिग्भागे चितास्थानं प्रकल्पयेत्
दक्षिणाग्ने च षट् सूत्रं पञ्च पञ्च पदं भवेत्  ६
पञ्च पञ्च पदं ग्राह्य पृथ्वी चैव प्रकल्पयेत्
मध्ये पञ्चपदे तत्र पार्थिवं संप्रकीर्तितम्
आग्नेय्यां तु पदे वेदे तेजस्थानं विभावयेत्  ७
नैर्ऋते पदे वेदे तेजस्थानं विभावयेत्
वायुकोणपदे वेदे वायुस्थानं प्रकल्पयेत्  ८
सौम्यस्थाने चतुर्वक्त्रमाकाशं मन एव वा
बुद्धिचित्तमहंकारं शब्दं च तत्र भावयेत्
तत्पूर्वे शब्द सम्प्राप्य स्पर्शिते सोम एव हि  ९
स्पर्शं च वारुणं चैव रूपं च रसमेव हि
गन्धं च मध्यमे न्यस्य दशवायुमुदीरयेत्  १०
मध्यमे श्वेतवर्णं स्यादाग्नेय्यां रक्तवर्णकम्
नैर्ऋतौ श्यामवर्णं स्याद्वायव्ये कृष्णवर्णकम्  ११
ऐशान्यां तु सितं प्राप्य एवमेवं क्रमेण तु
पूर्वस्यां हेमवर्णं स्याद्दक्षिणे श्यामवर्णकम्  १२
पश्चिमे तु शुक्लवर्णं स्यादुत्तरे रक्तवर्णकम्
एतेषां मण्डलं प्रोक्तं कुण्डलक्षणमुच्यते  १३

खात्वा तु हस्तमात्रेण तत्समं तारसंयुतम्
आयामं तत्समं कृत्वा तद्विस्तारसमं भवेत् १४
मेखला च चतुर्मात्रं तद्वत्कारं तु संग्रहेत्
कुण्डलक्षणमाख्यातं वेदिका लक्षणं शृणु १५
विस्तारं हस्तमात्रं स्यादुत्सेधं तालमात्रकम्
मेखलां चाग्निकुण्डं च त्रिमेखलां च वद्बुधः १६
विवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च
इन्द्रमग्निं यमं कुर्यान्निर्ऋतिं वरुणं तथा १७
वायुं सोमं तथेशानं विन्यसेच्छङ्कमत्र वै
हारन्पुरकेयूरतैलाभ्यङ्गं समाश्रयेत् १८
रागं तु पञ्चमं गीत्वा शुद्धनृत्त समन्वितम्
भेरीताडनमारभ्य अस्त्रमन्त्रं समुच्चरन् १९
माल्येन भस्मवस्त्राभ्यामलंकृत्य देहसंयुतम्
दैवाग्रं चैव जीवत्वात् ग्रामद्वारे स्थितं भवेत् २०
तद्ग्रामवासिन देवं सदाशिवबलिं क्षिपेत्
सदाशिव बलिं दत्त्वा ग्राममीशानसंस्थितम् २१
स्नात्वा देहं समारोप्य मण्टपे कृतवेदिके
दशास्त्र ताडिते शङ्कौ तन्तुत्रयं तु वेष्टयेत् २२
सर्वमन्त्रं विवर्जित्वा नववस्त्रेण वेष्टयेत्
शिबिकं तोरणं योज्य आसन्दी तारकं स्थितम् २३
सर्वमन्त्रं समुच्चार्य आसन्दी देहसंस्थितम्
देशिको नववस्त्रस्स्यात् वेष्टयित्वा शिवस्य तु २४
उष्णीषं चोत्तरीयं च आसन्दीदेहसंस्थितम्
प्राग्द्वारे वेदकुम्भं स्यादाग्नेय्यामेकमेव हि २५
यमस्य वेदकुम्भं स्यान्निर्ऋतौ च तृतीयकम्
वारुणे पञ्चकुम्भं च वायव्ये च द्विकुम्भकम् २६

सोमे च वेदकुम्भं स्यादैशान्यां च त्रयं भवेत्
पूजयित्वा तु गन्धाद्यैः पुष्पैः पूज्य च देशिकः २७
धूपदीपं हृदा दत्वा मराटपं पूजयेद्विधिम्
एवं संपूज्य विधिवत् तोरणांश्च युगान्यजेत् २८
शिरोवक्षकटिग्रीवबाहुद्वयसमन्वितम्
जङ्घाद्वयसमोपेतं जानुद्वयसमायुतम्
तथा पादद्वयं प्रतिकृतिकल्पनमाचरेत् २९
केशेन वर्जितं होमं वा समिधां चाष्टकं हुनेत्
तिलं च तत्समं वापि कर्षणं च घृतं क्रमात् ३०
लाजं च सक्तुकं वापि माषमुद्गं तथैव च
यवं च बिल्वचूर्णं च शताष्टं तु हुनेत्क्रमात् ३१
चितस्थानं कृतं वापि केशहोमं शताष्ककम्
होमान्ते स्रुत्स्रुवौ चूर्णं व्योमव्यापि हुनेत्क्रमात् ३२
स्रुक्स्रुवाभ्यां ततः पश्चात्पूर्णाहुतिं समाचरेत्
ताम्बूलं च ददेत्तत्र पूजयित्वा यथाविधि ३३
एतेषां पूज्य होमं वा विवर्तेदश्रुकारणम्
काष्ठोर्ध्वे देहं संस्थाप्य परिवारं च वर्जयेत् ३४
कुम्भाभिषेचनं कृत्वा दहनं च समाचरेत्
अग्निकुराडात्समादाय देहे हृदि विनिक्षिपेत् ३५
दाह्ये देहं खनित्वा तु दुर्भिक्षं शत्रुवर्धनम्
तेषां देहं वर्जयित्वा दर्भदेहं तथा भवेत् ३६
दक्षिणां देशिकस्यापि वस्त्रहेमाङ्गुलीयकैः
अन्त्येष्टिं तत्र आश्रित्य शिवश्राद्धं शृणुष्वथ ३७

इति चिन्त्यशास्त्रे अन्त्येष्टिविधिः सप्तत्रिंशत्पटलः

मठप्रतिष्टै

अथ वक्ष्ये विशेषेण प्रतिष्ठामठ विधिक्रमम्
उत्तरायण काले च शुक्लपक्षे शुभवारके १
शुभलग्ने च करणे शुभाख्ये सर्वशोभने
प्रतिष्ठायां पूर्वदिने वास्तुशान्तिं समाचरेत् २
तद्रात्रौ मृत्तिकांश्चैव पूर्वोक्तेनैव वर्त्मना
अङ्कुरानर्पयेद्धीमान् शिवयागं विधानतः ३
तत्सन्निधौ प्रतिसरं स्तम्भे कर्तुस्वै सहकारयेत्
पश्चाद्दीक्षोक्त मार्गेण कृते मण्टपपर्यके ४
प्रविश्य वेदिको विद्वान् पञ्चाङ्ग कृत भूषणम्
सोष्णीषस्सोत्तरीयश्च कृतमङ्गल संयुतम् ५
नन्दिशान्तिं च कालो बलमथ न दिवा नायको सप्तजिह्वकाः
भृङ्गिविद्यागणेशेस्तदन च यमो वास्तु नाथ शवेशः ६
पश्चात् विष्णुश्च लक्ष्मी वृषभमथकला स्यान्निवृत्ति गुहश्च
अब्धेर्नाथोर्वायुं गणनिकरपतिर्देव देवि प्रतिष्ठा ७
चण्डेशश्च धनेश्वरो गुरुवरैश्चैशान्य देवो विधिः
पूर्वोक्तेन विधानतो गुरुवरैः पूज्याहि ता देवताः ८
एकं क्रमेण सम्पूज्य सप्तविंशद्धटान् गुरुः
नन्द्यादि ब्रह्मपर्यन्तं सप्तविंशद्धटान् न्यसेत् ९
शिवकुम्भश्च संस्थाप्य वर्धन्या सहितेन च
मध्ये वेद्यां पञ्चकुम्भ पञ्चरत्नैस्सुशोभितम् १०
पञ्चमृत्पञ्चशालिभिः पञ्चत्वत्पञ्चपल्लवैः
पञ्चौषडध्या समायुक्तं शुभवस्त्रेण वेष्टितम् ११
चन्दनागरुकर्पूरं सुगन्धैश्च विभूषितम्
कलासु पञ्चभेदासु त्यात्मस्थं तन्निवृत्य षडध्वगम् १२
पूजयेत्तत्क्रमेणैव षोडशैरुपचारकैः
अधः कुण्डान्निकं गत्वा कुण्डसंस्कारपूर्वकम् १३

आज्य पात्रं चरुः पात्रं गृहीत्वा होम द्रव्यकम्
कुण्ड संस्कारपूर्वाणि पूर्ववन्निरवर्तयेत् १४
अग्निकार्योक्तमार्गेण सर्वकर्म समाचरेत्
विशेष तर्पणं कृत्वा समिदाज्य चरून् क्रमात् १५
तर्पणं दीपनं चाथ कृत्वा सर्वं समाप्य च
अनन्तरं मठस्यास्य कर्तारं शुद्धमानसम् १६
सुस्नात धौतवस्त्रं च कृतमङ्गल भूषणम्
सोत्तरीयं सोपस्तं समाहूय विधानतः १७
शिष्य प्रवेशमार्गेण नित्यमण्टपमुत्तमम्
नाडि सन्धानमार्गेण सन्धायै कृत्वतान्नयेत् १८
संपाद शिव हस्तौ च दत्वा शुद्ध तनुं च तम्
मठं प्रवेशयेद्धीमान् अष्टदिग्ध्वज भूषितम् १९
वस्त्रचामरसंयुक्तं सर्वगन्धैरलङ्कृतम्
हरिद्रा चूर्ण संयुक्तं पञ्चसूत्रेण वेष्टितम् २०
घटाष्टक समायुक्तं दर्भमाला विराजितम्
रजनी स्वर्ण ताम्बूलं पद्मकल्हारकैरवैः २१
नारङ्ग नाळिकेराम्र लिकुचै पनसैरपि
स्पर्शद्रव्यैस्समायुक्तं सर्वालङ्कार शोभितम् २२
यजमानादिकैः पञ्च शिरसा घटधारकैः
सर्वातोद्य समायुक्तं सर्व मङ्गल वाचकैः २३
आचार्योप्यग्रतो गच्छेत् ब्राह्मणा स्वस्तिवाचकैः
मठं प्रदक्षिणी कृत्य द्वारदेशस्थितो गुरुः २४
निवृत्यादिकलां भित्तौ क्रमेण परिपूज्य च
सद्योजातादिकांश्चैव सम्पूज्य विधिपूर्वकम् २५
निवृत्यादि घटां तत्तत् देशे देशेऽभिषिच्य च
अव शिष्ट जलेनैव कर्तारमभिषेचयेत् २६

अन्तः प्रवेशयेत्पश्चात् मठं कर्तारमादरात्
स्पर्शयेत् द्रव्यजातानि रजनी प्रमुखानि च  २७
तत्र चर्मासने स्थित्वा गुरुकर्ता समन्वितम्
उदङ्मुख समुत्थाय मठनाम च कारयेत्  २८
कर्तृनाम पुरश्चोत्वा मठशब्दमनन्तरम्
पठित्वा शिवभक्ताश्च ब्रह्मणानपि भोजयेत्  २९
अत्र किञ्चिद्विशेषोस्ति मठ निर्माण लक्षणम्
पत्तने राजधानी च वीथ्याग्रे विधिकोणके  ३०
शृङ्गमूले तटाकादि बाह्ये च देवधाम्निके
वने दक्षिण पश्चिम्या उत्तरे पूर्वतो न हि  ३१
दक्षिणे तु महाशैवं आदिशैवं तु सौम्यके
पश्चिमे अवान्तरे शैवं सत्सूत्रं तु यथा दिशि  ३२
मुण्डी जटी विरक्ताश्चेत् यथा देशे मठं कुरु
मठावरण देशेषु निमग्नाः पांसुवोस्तु ये  ३३
तावद्युगसहस्राणि कर्ता शिवपुरे वसेत्
मकारं कल्मषः प्रोक्तो ठकास्तन्निवारकम्  ३४
कल्मष प्रतिहन्तृत्वा मठमित्यभिधीयते
मठे तिष्ठति रुद्राद्याः मठेतिमिति कर्मठाः  ३५
मठे वसति पितरः तस्मात्पूतोमठस्मृताः
सर्व देवाग्रयो यस्मात् तत्कर्ता च शिवस्मृतः  ३६
मठ निर्माण मार्गेण सम्यक् कृत्वा शिलादिकैः
इष्टिका दारुमयैः पर्णशालामयैश्च वा  ३७
सम्यक् कृत्वा मठं सर्वं मठोपकरणैस्सह
दासिदासैश्च माठीयै सर्वालङ्कार संयुतैः  ३८
मण्टपाकृतिमाली वा गृहे वा गुरुधाम्नि वा
ग्रहणे विषुवे चैवायने च द्विपर्वणी  ३९

व्यतीपाते च जन्मर्द्धे पुरायकाले विशेषतः
योददाति सुशान्ताय शिवज्ञानवते गुरौ ४०
समुत्वा सर्व बन्धानिं हुत्वा सर्व पदेषु च
अन्ते शिवपदं यान्ति शिव सारूप्य रूपिणी ४१
वृद्मवाटी पुष्पवाटीमाराममंमावृते मठम्
ग्रन्धान्तर विशेषोस्ति सङ्ग्रहं चिन्त्य विश्वके ४२
इति चिन्त्यविश्वे चातुर्वर्ण मठप्रतिष्ठा विधि पटलः

## तत्त्वनिर्णयम्

तत्त्वानां निर्णयं वद्त्ये शृणु त्वं नन्दिकेश्वर
निस्संज्ञस्य च तत्त्वस्य संज्ञायुक्तं वदाम्यहम् १
शुद्धत्वाच्छिवसंज्ञा च परत्वात्परमुच्यते
चिद्घनो ज्ञानपूर्णत्वादेकः सादृश्यपूर्णतः २
व्यापी तु सर्वगत्वाच्च प्रभुरित्यस्य संज्ञकः
सुखानन्दस्वरूपत्वाच्चिज्ञो वै चैव तस्य वै ३
चराचरस्य जगतो ह्युत्पत्तौ कारणं परम्
तस्माज्जगदेकबीजं संज्ञितं नन्दिकेश्वर ४
चेतनाचेतनां तु स्व स्व कर्मानुसारतः
सुखदुःखाद्यहं भावं कर्मपाकं विधाय च ५
सर्वस्यानुग्रहत्वाच्च सर्वानुग्रहसंज्ञकः
कैवल्यनिरज्ञानत्वान्निर्वाणस्य प्रदायकम् ६
ज्ञानक्रियास्वरूपं तु ज्ञानेच्छाशाक्तिसंश्रयात्
संसाराम्बाधिमग्नानां उत्तरात्पालनात्पतिः ७
निवृत्यादिकलाभिस्तु पञ्चमन्त्रतनुर्भवेत्
सृष्टिपालनसंहारं तिरोभावमनुग्रहम् ८
प्रपञ्चस्य स्वभावत्वात् पञ्चकृत्संज्ञको भवेत्

एवमाद्यामसंख्येया संज्ञास्तु परिकीर्तिताः ९
चिदचिदनुग्रहार्थं वाच्यो मोक्षस्तु शक्ति वै
अस्यैव चाविभागाय ज्वालापि च हविर्भुजः १०
इतरेतरा श्रयं चैव शिवशक्त्योरभिन्नतः
स्वेच्छाविग्रहिणावेतौ चिदचिद्रक्षाणाय हि
परबिन्दुः पराशक्तिं महामाया च कुराडली ११
धूपव्योम तथैवेच्छा तस्याप व्योमवाचकः
इच्छाज्ञान क्रिया चैव शिवे स्थित्वा सदैव वै १२
शिवस्य स्वेच्छारूपार्थं ज्ञातेच्छा शक्तकादिमान्
स्वस्वकार्यं प्रकुर्वन्ति सर्वानुग्रह कारणात् १३
ज्ञानशक्तिः क्रियाशक्तिः समस्तं तत् विजृम्भितम्
सदाशिवाख्यकं त्तत्वं सकलं निष्कलं भवेत् १४
क्रियाशक्त्युद्बणत्वाच्च ज्ञानशक्त्यापकर्षणात्
तत्र तत् प्रसरं यत्तु ईश्वराख्यमिदं भवेत् १५
क्रियाशक्त्यपकर्षं च ज्ञानशक्त्युद्बणं तथा
विद्यातत्त्वस्य चोत्पत्तिर्ज्ञानगर्भा भवत्तदा १६
बिन्दोः कलाश्च सञ्जातास्सर्वतत्त्वस्य साधकाः
नादो बिन्दुश्च संजातौ एतौ सादाख्यमाश्रितौ १७
शुद्धानां पञ्चतत्त्वानां कलासन्धानवर्जनात्
नास्त्युत्कर्षोऽपकर्षश्च शिवतत्त्वविनिश्चितम् १८
वस्तुतश्शिवतत्त्वस्य तत्त्वमन्त्रोदितं परम्
अनन्त चित्र शक्तित्वं शिवस्यैव स्वभावजम् १९
ज्वालयेह च वह्नेस्तु ज्योत्स्नयेह हिमत्विषः
शिवस्य स्वेच्छारूपार्थं ज्ञानेच्छाशक्तिकादिकम्
इच्छा ज्ञानं क्रिया चैव शिवे स्थित्वा सदैव हि
प्रभयेव रवेश्शक्त्या शिवस्यारभ्यते वपुः २०

जन्तोर्मलस्य मोक्षार्थं ज्ञानशक्तिसमन्वितः
अनादिमल सिद्धानां अणूनां मोक्षकारणात् २१
निजवर्गस्य सत्येवं सर्वानुग्राहकं भवेत्
शिवसमानतारूपं शिवात्मग्रहमेव हि २२
सकलं निष्कलं चैव सर्वत्रैव समानता
सायुज्यमिति तत्प्रोक्तं सारूप्यं मूर्तितुल्यता २३
सामीप्यं मूर्तिसामीप्यं स्वेच्छाविग्रहधारणात्
शिवलोकादि संप्राप्तिः सालोकं मुक्तिनामतः २४
एतच्चतुष्टयं मुक्तिः सायुज्यं चोत्तमं भवेत्
नैष्ठिकस्य परा प्राप्तिर्भौतिकस्य विशेषतः
मलवासनया तत्र विद्येश्वरपदस्थितिः २५
वासनापरिपाकेन दीक्षया परमाप्नुयात्
कर्मणोऽनादिभूतत्वात् भोक्तव्यं मोक्षकारणात् २६
भुक्त्यर्थं धारणं देहं भुवनं चापि सर्वशः
तच्छम्भुः कृतवान्भुक्त्यै करणं चापि शक्तितः २७
अनादिशक्तिसहितो माया सूक्ष्मा च व्यापिनी
अनादिनिधनाप्येका चैवोपादानकारणम् २८
नृणां साधरणी चैव भुवनानां च कारणम्
सर्वेषां जन्म जननी मोह सञ्जातदीदृशम् २९
स्वकीयशक्तिभिः शम्भुर्मायां विक्षोभ्य कर्मतः
पुरुषं प्रति भोगार्थं शरीराणीन्द्रियाणि च ३०
दद्याच्छिवोऽपि शक्त्या च करणेन विशेषतः
अनन्तशक्तिरूपायां मायातः कालसम्भवः ३१
भूतं भव्यद्भविष्यं च क्रियारूपं भवेत्पुनः
मलानां परिपाकार्थं कालतत्त्वस्य सम्भवः ३२
पुनश्च माया नियतिं जनयामास वै तदा

नियमं रूपमास्थाय नियतिं निखिलं नयेत् ३३
सैव माया पुनश्चैव कलामजनयत्क्रमात्
अणुनामाणवं चैव मलमेक त्रिभिद्य च ३४
ज्ञानशक्तौ प्रतिष्ठाप्य व्यञ्जयेत्कर्तृशक्तिकाम्
कलबन्धनधात्वर्थे तनुबन्धाय चात्मनाम् ३५
कलातत्त्वमिदं प्रोक्तं अणूनां भोगकारणात्
प्रच्छाद्य ज्ञानशक्तिं च कर्तृशक्ति प्रकाशकम् ३६
अशुद्धाख्याल्पकालेन चैव कृतानदि मकेश्वर
सैषाकला च कालेन नियम्याहिता पुनः ३७
पृथ्वीतत्त्वपर्यन्तं स्व स्वाप्याकारकर्मणा
सम्भूय कार्यं कुर्वन्ति त्रयस्सृष्ट्यादिके विभौ ३८
कलया पुरुषाणां तु सम्भूता कर्तृशक्तिका
शब्दादि विषयांश्चैव दर्शनार्थं तु तत्र वै ३९
विद्यातत्त्वं तु सञ्जातं कलातो भोगकारणात्
चिद्भेदज्ञानशक्तेस्तु निरोधानं विचिन्त्य च ४०
आत्मनो विषयान्सर्वान्दर्शयेत्कारणं भवेत्
आत्मनश्चैव करणं परमं च तथा भवेत् ४१
सुखदुःखे मोहरूपे गुणत्रयसमन्विता
सा विद्या चात्मनो भोग्या बुद्धिसंज्ञा भवेत्तदा ४२
शब्दादि विषयांश्चैव यदा ग्रहण बुद्धि वै
बैषादिकारणाख्यं हि विद्यातत्त्वा द्विधा भवेत् ४३
क्षीरस्य खलु संयोगाद्दधिनाम यथा भवेत्
क्षीरत्वं च दधित्वं च नामद्वित्वं तथा भवेत्
तत्त्वं विद्यैव बुद्धिः स्यात् करणं च तथा भवेत् ४५
अव्यक्तोद्भव बुद्धेस्तु विधेयं करणं भवेत्
विद्यातत्त्वा तु सञ्जातो रागस्तात्पर्यरूपकम् ४६

बुद्धिवृत्तिविशिष्टोऽपि पुद्गलस्योपकारतः
विषयश्च यतः पूर्वं शक्तिकारि विशेषतः ४७
पुरुषश्च प्रवृत्तेश्च निवृत्तेरपि सर्वदा
सामान्यहेतुरित्युक्तो रागतत्त्वस्य लक्षणम् ४८
तत्त्वैरेवेति संबन्धः पुद्गलः पुरुषाख्यताम्
लब्ध्वा तद्वचो नाम भोक्तृत्व प्राप्तितस्सदा ४९
कलायामपि चाव्यक्तमात्मनो भोगकारणात्
सञ्जातं व्यक्तिहीनत्वादव्यक्तमिति कीर्तितम् ५०
मायाकारणतश्चैव कलया जनितस्तथा
अनेक गुण संयुक्तादव्यक्तात्तु गुणत्रयम् ५१
सत्वं रजस्तमश्चेति सुखदुःखं च मोहनम्
ज्ञानरूपं क्रियारूपं निद्रया रूपमेव हि ५२
एतानि गुणरूपाणि चाव्यक्ताज्जनितानि वै
गुणत्रयस्य संबन्धाज्जनिताकरणं तु धीः
हस्तानां विषया रूपान्निश्रयं कुरु तं भृशम्
सा बुद्धिः पुरुषस्यापि पूर्वकर्मानुसारतः
सुखदुःखमोहरूपैश्च त्रिधा भवति तत्र वै ५३
बुद्धितत्त्वादहङ्कारो जातस्सोऽपि त्रिधा भवेत्
अहं जानामि सर्वं च करोमि प्रबलोऽस्म्यहम् ५४
एवं जगदहङ्कारस्संरम्भार्हकृतिस्तथा
गर्वाहङ्काररूपेण अहङ्कारमिदं भवेत् ५५
शब्दादि विषयश्चापि सदाहङ्कारसंश्रयात्
उद्भवो व्यवहारश्च योग्यता चापि जायते ५६
स एव सात्त्विकश्चापि राजसाख्यस्तथैव च
तामसाहङ्कृतश्चैव त्रिविधो गुणसंश्रयात् ५७
तैजसो चैकारिकं च भूतादिश्च भवेत्तु सः

तैजसाख्यादहङ्कारान्मनस्तत्त्वसमुद्भवम्  ५८
वैकारिकादहङ्कारादिन्द्रियाणि भवन्ति हि
भूतादिकादहङ्काराच्छब्दादिजनिन्तथा  ५९
इच्छारूपं मनोरूपं सकलं गुणकं च तत्
निश्चयोऽनिश्चयश्चैव सङ्कल्प इति वेद्यते  ६०
इन्द्रियाणि तु श्रोत्रं त्वक् चक्षुर्जिह्वा च नासिका
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च वै तथा  ६१
शब्दादि विषयाश्चैव भूतादिकसमुद्भवाः
वैकारिकादहङ्कारान्मनस्सङ्गमनेऽपि च  ६२
वाक्पादपाणिपायुश्च  उपस्थं चेति पञ्चकम्
भूतादिकादहङ्कारान्मनस्सम्योगतः क्रमात्  ६३
वचनादानगमन विसर्गा तु -----------
हस्तानां विषया रूपांश्चायं कुरुते भृशम्  ६४
या बुद्धिः पुरुषस्यापि पूर्वकर्मानुसारतः
----------------------नन्दसम्भवम्  ६५
वागादेः कार्यरूपं स्याच्छब्दादिवचनानि च
श्रोत्रादि कार्यरूपं स्यात् शब्दादिर्वचादि च  ६६
बुद्धीन्द्रियं च ज्ञानाख्यं कर्मेन्द्रिया समाख्यया
विषयेन्द्रिय नामस्य ------ वितथा  ६७
पूर्वोक्तमन्तःकरणं त्रिविधं तु तथा भवेत्
बुद्ध्यहङ्कारचित्तानि मनसा च चतुर्विधम्  ६८
मनो बुद्धिरहङ्कारस्स्यादाकारात्तु चित्तता
बुद्बुदं फेन कल्लोलं जलमेव हि दृश्यते  ६९
तद्वत्करण रूपाणि चित्तरूपं तथैव च
बुद्धीन्द्रियस्य कर्माख्यं बाह्याख्य करणाख्यतम्  ७०
शब्दादिवचनादिश्च बाह्यसूक्ष्माख्यमेव च

करणार्धोऽल्पसामर्थ्यात्कार्यं संश्रुत्य तद्वति ७१
तन्मात्रा व्योम पवनस्तेजस्तोयं च्क्षमेति च
भूतादिकात्त्वहङ्कारात्तमसा शब्दमात्रतः ७२
त्रिभिः संयोगतोत्पन्नमाकाशत्तत्वमत्र वै
------------वचतु गर्भं वायोस्तु मन्त्रतः ७३
रूपतन्मन्त्रया चैव पञ्चभिस्तेजसो भवः
आकाशव्यूहनं चैव पवनं ग्रहणं तथा ७४
धारणं च क्रमात्तेषां प्रोक्ता चोत्पत्तिरत्र वै
एवं षट् त्रिंशत्तत्त्वानां उत्पत्तिक्रमनिर्णयम् ७५
शिवशक्तिश्च सादाख्यमीश्वरं शुद्धतत्त्वकम्
विद्यायुक्तं च पञ्चानां चिद्रूपकं तयान्वयः ७६
चिद्रूपायाः परा शक्त्या विग्रहत्रितयं भवेत्
तस्माच्चिद्रूपसंज्ञाख्यं पञ्चानां शुभवाचकम् ७७
मायादिसप्तरागान्तं मलव्यापकमात्मनाम्
तद्वन्मलानां संख्याप्यमव्यक्तादि धरान्तकम् ७८
माया कालोऽथ नियतिः कला विद्या तथैव च
रागः पुरुष इत्येव सप्तानां मिश्रतत्त्वकम् ७९
नात्मवच्चैषषट्कामनाम्ना या च विदा सह
मलव्यापक सम्बन्धात् शुद्धाशुद्धसमन्वितम् ८०
अव्यक्तं च त्वहङ्कारं बुद्धिश्चापि मनस्तथा
बुद्धीन्द्रियं च कर्माख्यं चतुर्दशमुदीरितम् ८१
गुणत्रयैस्सुखाद्यैश्च त्रिभिश्चैवान्वितस्सदा
अरूपज्ञानसम्बन्धं प्रतिकूलं तथैव च ८२
विचित्रज्ञानसंबन्धं प्रतिकूलं तथैव च
विचित्रज्ञानमित्येवं त्रिविधं ज्ञानसंश्रयम्
रसतन्मात्रया चैव षड्भिः जलमभूत्पुनः ८३

गन्धतन्मात्रया चैव सप्तभिस्तद्भवेत्क्रमात्
उत्तरोक्तगुणाधिक्यात् पञ्चभूतोदयं तथा ८४
आकाशादि पृथिव्यन्तं व्यापारं तु तथा भवेत्
शब्दादिगुणसाम्ये तु सादृश्येनान्वयो भवेत् ८५
एकद्वित्रि चतुः पञ्च मात्राभिश्च क्रमाद्भवेत्
अङ्गानि भावसंयोगात् पञ्चभूतं विना तदा ८६
चतुर्विंशति तत्त्वानि चाव्यक्तादीनि तन्त्र वै
अशुद्धमलमित्येव मलव्यापकहेतुकम् ८७
द्मादिमायातत्त्वं तु संहारविपरीतकम्
मायायां तु लयं चैव शुद्धं शक्तौ भवेत्तदा ८८
शक्तिश्चापि शिवे तत्र अविभागमुपेयुषि
शुद्धतत्त्वानि नादश्च बिन्दुश्चैव कला तथा ८९
विद्येशं मन्त्रविद्यां च शिवेच्छायां च लीयते
महार्थ संहारकाल मायात्मानश्च सर्वशः ९०
शिवश्च शुद्धतत्त्वानि निष्ठत्यन्यच्च लीयते
पुनश्च पशुसृष्ट्यर्थं एते तिष्ठन्ति सर्वदा ९१
सर्वात्मनश्च जननं मरणं च तथैव च
तज्ञातदुःखमालोक्य कृपया संहरेत्पुनः ९२
विश्राम्य च पुनर्जीवांश्चाणवादि मलैः सह
तदत्ययगुणैश्चैव जनने च प्रवर्तते ९३
कारुण्यात्क्लेशमालोक्य तेषां शम्भुः पुनस्तथा
कर्मणां पचनार्थाय सृष्टिं निर्माय पूर्ववत् ९४
दुःखानि भोगमखिलं भोजयेन्नन्दिकेश्वर
मले तु परिपक्वे तु पक्वानां परमेश्वरः ९५
आचार्यमूर्तिमास्थाय दीक्षया नियतं ददेत्
पतिताः पशवश्चैव पाशाश्च तदनन्तरम् ९६

प्राधान्यमस्ति तेषां च पत्युः प्राधान्यमिष्यते
सर्वेषां च पशूनां च भुक्तिमुक्ति प्रधानतः ९७
प्राधान्यं चैव जीवानां प्राधान्यं तदनन्तरम्
सुखदुःखादिभोक्तृत्वाद्दुःखित्वात्तन्निवृत्तये ९८
सर्वं क्रियन्त इत्येवं प्रधानं च तथापि च
सर्वोपायैश्शिवेनैव छेद्यत्वाद्दीक्षयापि च ९९
अन्यैरेतदसिद्धत्वात् प्राधान्यं पावकेष्वपि
अथात्म लक्षणं वक्ष्ये शृणु त्वं नन्दिकेश्वर १००
किञ्चिज्ज्ञो मलिनश्शुद्धश्चैतन्यो माययावृतः
कर्ता भोक्ता शरीराद्यैः कृती व्यापी तु मूर्तिमान् १०१
निर्गुणो निष्क्रियश्चैव शिवत्वप्राप्तिमान् भवेत्
पूर्वयावस्थया चैव नामान्येतानि तस्य वै १०२
अणुरात्मा च जीवश्च पशुः पुद्गल एव च
क्षेत्रज्ञः पुरुषश्चैव पञ्चविंशक इत्यपि १०३
पशुरित्यादिनामानि पर्यायेण भवन्ति हि
तयोश्च पश्वो ह्यत्र सकलः प्रळयाकलः १०४
विज्ञानकलसंज्ञस्तु त्रिविधस्तत्प्रकीर्तितः
प्रथमस्समाप्तकलुषो विद्येश्वरपदे स्थितः १०५
अनन्तेशश्च सूक्ष्मश्च शिवोत्तमैकसंज्ञकः
एकनेत्रेक रुद्रेण त्रिमूर्तिरमरेश्वरः १०६
श्रीकण्ठश्च शिखण्डी च विद्या ह्यष्ट विद्येश्वराः स्मृताः
विज्ञानकलयोरन्ये द्वितीयकलुषैर्युताः १०७
सप्तकोटिमहामन्त्ररूपिणश्च भवन्ति ते
प्रलयाकलसंज्ञास्तु त्रिप्रकारा भवन्ति ते १०८
मलकर्माणि च भवतः परिपक्वे तथा दिने
एते शिवानुग्रहेण भुवनेशपदे स्थिताः १०९

प्रलयाकलयोर्वापि द्वितीयः पापवर्जितः
पुर्यष्टकेन संयुक्तो जातो भवति सर्वदा ११०
सर्वयोनिषु जन्म स्यात् स्वस्वकर्मानुसारतः
शब्दं स्पर्शं च रूपं च रसो गन्धस्तथैव च १११
मनो बुद्धिरहङ्कारः पुर्यष्टकमिति स्मृतम्
सकलाश्च मलैर्युक्तास्त्रिविधास्तु भवन्ति हि ११२
एतेषां सकलानां च मध्ये वै षट् च पक्वकान्
अष्टादश विकृशतां मन्त्रैश्च रूपदस्थिताम् ११३
शिवानुग्रहतः प्राप्तं तेषां मध्येऽष्टकं भवेत्
मण्डलेश्वरसंयुक्ताः क्रोधाद्याष्षोडश स्मृताः ११४
श्रीकण्ठवीररुद्राश्च शतसंख्या भवन्ति हि
परिपक्वमलान्शम्भुः सकलानां च मध्यमात् ११५
कृपया परया वीक्ष्य दीक्षयेद्देशिकोत्तमः
दीक्षयित्वा विधानेन षट्त्रिंशत्तत्वतोपरि ११६
आत्मनस्त्रिविधः प्रोक्तो ----- र्थकमुच्यते
मलं कर्म च माया च मायार्थिमखिलं जगत् ११७
तिरोधानमयी शक्तिरर्थपञ्चकता भवेत्
स्थूलसूक्ष्मं चोभयं वै कर्मण्येव पुनः पुनः ११८
पाशाच्चतुर्विधात्तत्र पुरुषस्य विशेषतः
मलं च कर्मजं वापि द्वितीयं प्रथमं भवेत् ११९
मायीयं तु तिरोभावं शिवशक्तिसमुद्भवम्
आणवस्त्वेकरूपो हि तथा विविधशक्तिमान् १२०
ताम्रकालिकवत्सोऽपि सहजेत्यन्तरादिकम्
मोहो मदश्च रागश्च विषादश्चैव शोषयुक् १२१
हर्षा वै चित्र्यसंयुक्तः सप्तैते सहजा मलाः
तण्डुले च तथा कम्बु ---------- १२२

लोहजो मल इत्युक्तः तस्य जाग्रं तु चोच्यते
धर्माधर्मविचित्रं च शुद्धाशुद्धं च कामर्यकम् १२३
दुर्विज्ञेयस्वरूपत्वादनादित्वं च तस्य वै
कम्बुना तराडुलस्यैव यथा वरणकं भवेत् १२४
तथात्वावरणं लोके कर्मजं मलमुच्यते
मायीयं तु महामाया सञ्जातं जन्महेतुकम् १२५
दारपित्राद्यसङ्गं तु सजातीय विकल्पकम्
अनित्यत्वाद्विस्मृतिश्च दुर्मानमधिकेवलम् १२६
कलाद्यवनिपर्यन्तमात्मनस्सृष्टिकारणम्
दुर्विज्ञेय स्वरूपत्वात् अनादिरिति कथ्यते १२७
कालाद्यवनिपर्यन्तमान्मान सृष्टि कारणम्
तिरोधायिमलस्यापि तिरोधायिसमुद्भवः १२८
आत्मनश्च शिवस्यापि दृश्यप्रच्छादिकावपि
तिरोधायिकमेवं स्यादानादिकमलात्मकम् १२९
मायाकान्ति तिरोधानं निःश्रेयसनिरोधनम्
मायेयमेव वाच्यं स्यात्त्रिविधं पादमुच्यते १२०
सर्वेषामेव संहारे पतिः पाशश्च पुद्गलः
शिष्यस्यैव विसृष्टौ च विधत्ते तत्र वै भवः १२१
प्रयोगान्ते तु यद्वस्तु विसंज्ञा निर्गुणैर्युतः
सर्वं मायाविनिर्मुक्तं तत्तत्त्वमिति कीर्तितम् १२२
तत्रात्मा विमलं चैव बन्धजन्मत्वकारणम्
मलानां वासनं चैव नाशे मोक्षो न संशयः १२३
मलानां नाशनं चैव दीक्षया च भवेद्ध्रुवम्
चत्वारिंशत्तु संस्कारा विप्राद्यैरप्यनुष्ठिताः १२४
ततस्तत्त्वं गतानां च --- यानमनन्तरम्
पुंसवनं च सीमन्तं विष्णोर्बलिविवर्धनम् १२५

जातकं च तथा नामकरणं निष्क्रमणं तथा
अन्नप्राशनकं चैव प्रबासममनं तथा १२६
वैश्वदेवं तमोत्सर्गं पञ्चत्वेकैकसंहृतिः
परायणं च गोदानं स्नानमुद्वाहकं तथा १२७
अष्टादश शरीरस्य संस्काराः समुदीरिताः
देवयज्ञं पितृयज्ञं भूतयज्ञं तथैव च १२८
मानुष्यं ब्रह्मयज्ञं च पञ्च यज्ञाः प्रकीर्तिताः
स्थालीपाकं चाग्रयणं ------ त्रकम् १२९
पै ---- सायुजश्चैत्व तापपैत्तपाकयज्ञकाः
अग्न्याधेयं च दर्शं च पौर्णमासी तथैव च १३०
आग्रयणेष्टिकां चैव चातुर्मास्यमनन्तरम्
निरूढपशुबन्धं च सौत्रामणिरथान्तिमम् १३१
हविर्यज्ञाश्च सप्तैते सोमसंस्थस्तथोच्यते
अग्निष्टोमोऽत्यग्निष्टोम उक्थैष्षोडशकस्तथा १३२
वाजपेयोऽतिसत्रं च अप्तोर्यामश्च सप्तमः
चत्वारिंशत्तु संस्कारा वैदिकक्रमनिर्णयाः १३३
क्रतवोऽप्युक्तमार्गेण मलानां वर्धनाय वै
तस्माद्वैदिकमार्गे तु मलनाशो न विद्यते १३४
शैवागमोक्तमार्गेण दीक्षया मोक्ष एव हि
नास्ति दीक्षासमं तीर्थं नास्ति दीक्षासमं तपः १३५
नास्ति दीक्षासमं शीलं नास्ति दीक्षासमं धनम्
नास्ति दीक्षासमं दानं नास्ति दीक्षासमो गुणः
नास्ति दीक्षासमं श्रेयो नास्ति दीक्षासमं कुलम् १३६
वासना नाशनं चापि दीक्षाज्ञानक्रियास्तथा
चर्यो चर्योऽपि चत्वारि तेषां संवर्धनादध्रुवम् १३७
वासनापरिपाकं च पद्यं कुर्याच्च वारुणम्

धर्माधर्मात्मिका बुद्धिः कर्मजा वासना ह्यपि १३८
शिवलिङ्गार्चनादेव नाशनाय न संशयः
वासनाच्चरणोद्भूतं पञ्च वा गोमतस्तथा १३९
हर्षं चैव निषादं च शोषं चैव मनो लयान्
--------------------नित्यस्य च समाधिनः १४०
ज्ञानेऽपि तालसंयुक्तमाधिकेऽपि चतुस्तथा
नाशमेति क्रमाद्वन्द्ये शृणु त्वं नन्दिकेश्वर १४१
शिवे हि भूतश्रवणात् शिवज्ञानं प्रतिष्ठितम्
-------------------- मनाद्वितयकं तथा १४२
नित्यानुभवतश्चैव दर्शनाच्छ्रवणादपि
जनिता विस्तृताश्चापि क्षयमेति न संशयः १४३
सृष्टिकालस्य दैर्घ्याच्च कन्दर्पस्य स्वभावतः
---------- स्थिरत्वाच्च कुलयोषित्ससमाश्रयात् १४४
जातितः कुतवा विप्रकश्चण्डाल इति स्थितिः
दीक्षजा च शिवोजातिरन्याजातिर्न विद्यते १४५
तत्त्वसृष्टिक्रमादेव दीक्षया रहितः पता
जगन्माता शिवा प्रोक्ता सर्वेषां ग्रात्मनां तथा १४६
कुडुम्बज्ञानचिन्ता च नाशमेति शृणु क्रमात्
कालदैर्घ्यात्सदा ह्यस्य पितृमातृपितामहाः १४७
पुत्रमित्रकलत्राणां भ्रातृमातृसहोदराः
पश्वादीयः चतुष्पादस्तेषां चापि सहस्रशः १४८
स्वयं पित्रादिका भूतास्तस्याश्चक्रक्रमो न हि
सर्वाण्यपि च जन्तूनि चैक एवाजितं तथा १४९
कर्मणां साहचर्येण ऋणात् पित्रादि सर्वशः
तस्माच्छिन्तासमं नास्ति नास्ति विज्ञानसाधने १५०
निवृत्तेरवनिपर्यन्तं प्रातस्तथाधिवासना

शरीरान्ते ज तस्यान्ते तथैवं नन्दिकेश्वरः १५१
सप्तषड्वासनाकार्यं मनोवाक्कायकर्मसु
व्याप्यावृत्तिं करोत्येव तत्त्ववृत्तिं न मन्यते १५२
वासनाया विनाशेन शिवज्ञानं विशेषतः
नैवास्ति किञ्चित्कर्तव्यं वासनायुक्तकर्मसु १५३
वासना रागसंप्राप्तिरस्ति चेन्न स तत्त्ववित्
देशिकस्तत्वविज्ञानं ज्ञात्वा चैव प्रकाशकम् १५४
एवं तु तत्त्वज्ञानी स्यान्मूर्तितो मुक्त एव सः १५५
इति चिन्त्यशास्त्रे तत्त्वनिर्णयं अष्टत्रिंशत्पटलः

## तत्त्वनिर्णयम्

अथ वक्ष्ये विशेषेण तत्त्वनिर्णयमुत्तमम्
आधाराधेयकं युक्तं कल्पना भावकं विदुः १
कल्पनारहितं तत्र सन्मार्गज्ञानमुत्तमम्
श्रीनन्दिकेश्वर उवाच
हे भगवन् किमाधेयं सम्यक् वक्तुं त्वमर्हसि २
श्री भगवानुवाच
आधारं गुदमित्याहुः स्वाधिष्ठानं तु गुह्यकम्
मणिपूरकं नाभि सत्व मनाहतं हृदयं तथा ३
विशुद्धिः कण्ठदेशे तु आज्ञा भ्रूमध्यमेव च
षडाधारमिति ज्ञेय धारयेत्तु षडक्षरम् ४
तत्तज्ज्योति स्वरूपेण भावयेत्तन्त्रवन्तकम्
शब्दादीनि प्रवर्तन्ते श्रोत्रादि स्थानके क्रमात् ५
वागादि स्थानके सम्यग्वचनादि प्रवर्तते
प्राणस्त्वपानो व्यानश्चोदानस्समान एव च ६
नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः

प्राणाख्याज्ञायते हंसे इडापिङ्गलमध्यमे ७
चरे शरीरे संरन्दयं मध्यस्थं प्राणपादनम्
तत्प्राणाज्ञायतेऽपानो ग्रपानान्तं चरेत्क्रमात् ८
मूत्रादिन्विसृजेत्तत्र कायं रक्षतु प्राणवत्
ग्रपानाज्ञायते व्यानः कृत्स्नं कायमवाप्य च ९
सरोमपुलकां कृत्वा स्पर्शज्ञानस्य कारणम्
तद्व्यानाज्ञायते दानः कराठादधः स्थितो भवेत् १०
विज्ञाप्य षड्रसं तत्र तस्य वार्तासु कारणम्
समानो जायते दाना कराडादधः समीपतः ११
तत्र स्थित्वान्नपानादि तथाग्नौ जुहुयात्क्रमात्
प्राणार्गो नाग एवा दक्षिणो संस्थितो भवेत् १२
हिक्का कर्म प्रकुर्वीत नागास्तत्र प्रकीर्तिताः
उपानाशेत्कर्म एको नेत्रद्वय समाश्रितम् १३
निमिषोन्मिषाभ्यां वै नेत्रे द्वाभ्यां स रक्षति
व्यानाच्च कृकरस्तत्र नासिकाभ्यन्तरे स्थितः १४
क्षुतं तत्र प्रकुर्वीत कृकराख्यः प्रकीर्तितः
उदानाद्देवदत्तख्यः व्याप्य पृष्ठं च पार्श्वके १५
व्याप्य तत्रैव कायं च कुरुते गमनागमौ
धनञ्जयः समानांशः कायस्थूलनकंपकृत् १६
प्राणादि दशवायुस्तु सुक्षेपाद्वक्ष्यतेऽधुना
एतेषां चैव सर्वेषां मनोभेद इति स्मृतः १७
एतन्मात्रा मनोवृत्ति मनोऽहंकारजं भवेत्
बुद्धिस्सोऽप्यहङ्कारश्चित्तं च क्रमशो भवेत् १८
चतुष्कारणसंयुक्ते विषये हूयते क्रमात्
विषयान्जनते येन तस्मात्तस्य तु लक्षणम् १९
शून्यचित्तविनिर्मुक्तमन्तरात्मा तथैव च

सुख चैतन्यमेवं तु परमात्मान लक्षणम्  २०
लक्ष्यलक्षणनिर्मुक्तचिन्त्याचिन्त्यविवर्जितम्
द्वैताद्वैतविनिर्मुक्तं चिन्त्या चिन्त्य विवर्जितम्  २१
द्वैताद्वैतविनिर्मुक्तं तत्त्वमित्थं गुरोर्मुखात्  २२
तत्त्वनिर्णयमेवोक्तं शृणु सन्मार्गलक्षणम्
इति चिन्त्यशास्त्रे तत्त्वनिर्णय एकोनचत्वारिंशत्पटलः

## सन्मार्गम्

अथ वक्ष्ये विशेषेण सन्मार्गचक्रमुत्तमम्
मण्डलं चाद्य भवनं चक्रपर्यायवाचकम्  १
भूमिशुद्धिं पुरा कृत्वा कुट्टिमोच्चाङ्गुलाङ्गुलम्
त्रिहस्तविस्तृतं प्रोक्तं दर्पणोदरसन्निभम्  २
गोमयेनोपलिप्याथ प्रोक्षयेद्धृदयेन तु
तच्चक्रं पद्मसंकाशं कर्णिकाकेसरान्वितम्  ३
दलं पञ्चविधिज्ञेयं मृदुवृत्तसमायुतम्
पञ्चदशशतं स्यात्तु दलं संख्याक्रमेण वै  ४
पञ्चविंशच्चतुर्विंशत्रिविंशद्द्वयविंशकम्
त्रिसप्तकं तु विज्ञेयं बाह्यादि क्रममेव हि  ५
कर्णिकोपरि बीजानां भूतसंख्या प्रकीर्तितम्
भूतादिज्ञानपर्यन्तं देवतैस्सह वक्ष्यते  ६
यत्कठिननं तत्पृथिवी यद्द्रवोऽप्याय उच्यते
यदुष्णयुक्तं तद्वह्नि वायुस्सञ्चरतिर्वतने ७
यत्सोषियुक्तं आकाशं महाभूतगणास्ततः
अस्थि त्वङ्मांसकायाश्च नाड्यस्तु परिकीर्तिताः  ८
पृथिव्यंशास्तथा ज्ञेयास्त्वम्बांशानि ततश्शृणु
मूत्रशोणितभेदाश्च मज्जा शुक्लं तथैव च  ९

जलांशमिति विज्ञेयं सर्वप्राणिषु संस्थितम्
क्षुधा तृष्णा च निद्रा च आलस्यं मैथुनं तथा १०
एते पञ्च गुणाः प्रोक्तास्तेजसोंशा इति स्मृताः
आस्ते शेतेऽध्वगमनं प्रसारणं निरोधनम् ११
इति पञ्च पशूनां वै वायोरंशाः प्रकीर्तिताः
लज्ञा क्रोधा लोभश्च भयो क्रोधस्तथैव च १२
इति पञ्चगुणाश्चैव व्योमांश्च प्रकीर्तिताः
प्रोक्तं भूतगणास्त्वेवं गुणं त्वेषां तु पञ्चकम् १३
व्योम श्रोत्रं त्वक्च वायो स्यादक्षाग्नग्यप्सु जिह्विका
घ्राणो भू शब्द आकाशो वायो स्पर्शाग्निरूपकम् १४
रसोऽप्सु पृथिव्यां गन्ध एकद्वित्रिचतुश्शराः
आकाशादिषु वर्तन्ते पृथिव्या चैव पाणिकाः १५
पादोऽग्नौ वायुवाक्चैव सोपस्थौ गमनं भवेत्
पृथिव्यां वचनमादानमप्सुग्नौ गमां भवेत् १६
वायौ विसर्ग आनन्दो मनो भूमौ जले तु धीः
अहङ्कारो नलैर्यन्तु चित्ताख्यं वायुसम्भवम् १७
आत्मानुभवविज्ञेयं पञ्चभूतिक विस्तरम्
एतत्प्राकृतमुत्सृज्य शिवोऽहमिति भावयेत् १८
अथवान्यक्रमो भावो ह्यहं ब्रह्मेति कथ्यते
पञ्च शक्त्यात्मिकाशक्तिर्देवतां पञ्चमूर्तयः १९
पृथ्व्यिा ब्रह्म अपां विष्णुरग्ने रुद्र इति स्मृतः
वायोर्महेश्वरश्चैव आकाशस्य सदाशिवः २०
सरस्वती श्रीर्भवानि तथा गौरी मनोन्मनी
पदमेकद्वयोर्मध्ये पञ्चमूर्तिः प्रकाशते २१
पीतं शुक्लं तथा रक्तं कृष्णं धूम्रं च वर्णकम्
ब्रह्मादीनां च वर्णानि भावयेन्मण्डलोपरि २२

चतुरश्रं अर्धचन्द्रं च त्रिकोणं च षडश्रकम्
सुवृत्तमिति विज्ञेयं मण्डलाकृतयः क्रमात्
ल व र य ह कारं तु ब्रह्मादीनां तु बीजकम्  २३
तद्बीज सम्भवादेव देवता योगतस्सुखः
बीजानामधिपश्चन्द्रश्चन्द्रो बिन्दुस्वरूपकः  २४
बिन्दुर्नादश्च शक्तिश्च परश्चैव परात्परम्
पञ्चज्ञानप्रदेशा हि ब्रह्मादीनां विशुद्धये  २५
अभेदलयमेरेयमेरेयमुभयात्मकम्
इदं पञ्चविधं लक्ष्यं स परानन्दसाधनम्  २६
विसूर्मिश्च विचित्रश्च विरतिश्च विपातकम्
विलक्षणं च पञ्चैते क्षणभूतं विनिर्दिशेत्  २७
निद्रासौख्यं सुतानन्दं सुरतानन्दमेव च
परं परात्परानन्दं पञ्चानन्दं विभावयेत्  २८
त्रिमात्रं च द्विमात्रं च एकमात्रं तथैव च
अर्धमात्रं परं सूक्ष्मं तस्यार्धं तु परात्परम्  २९
मात्रादैर्घ्यं भवेत्स्थूलं मात्रासूक्ष्मं महोदयम्
एतदभ्यासयोगेन सदोयमण्डितं ----  ३०
सहजज्ञानमेवं तु स्मरणं सर्वसिद्धिदम्
जन्मनीं चैव सन्मार्गो निस्सन्देहः प्रवर्तते  ३१
इति चिन्त्यशास्त्रे सहस्त्रग्रन्थे सन्मार्गचक्र चत्वारिंशत्पटलः

## समाधि

समाधिमधुना वक्ष्ये सर्वद्वन्द्वविवर्जितम्
ज्ञानमेव समाधिः स्यात्तत्त्वशुद्धिस्तथोच्यते  १
जाग्रत्स्वप्नसुषुप्तिश्च तत्सम्बन्धमनित्यतः
एतत्तुरीयातीतं तु आत्मनो नित्यमेव हि  २

जाग्रादि द्विविधं ज्ञेयं भवमोक्षगतं मतम्
सन्मार्गमध्यमं ज्ञेयं भवमार्गमधो भवेत् ३
तत्तु कर्मानुसारेण जाग्राद्यधोमुखं भवेत्
मुखं जाग्रमिति ज्ञेयं तस्मात्स्वप्नं हृदन्तकम् ४
हृदयादि समारभ्य नाभ्यतं तु सुषुप्तिकम्
तस्मादधस्तुरीयं तु तुर्यातीतं तु लिङ्गकम् ५
जाग्रादिस्थानमेवं हि प्रवर्तकमिहोच्यते
श्रोत्रत्वक् चक्षुजिह्वा च घ्राणं चैव तु पञ्चमम् ६
शब्दस्पर्शश्च रूपश्च रसोगन्धश्च पञ्चकम्
वाक्पाणिपादपायुश्च उपस्थं चैव पञ्चकम् ७
वचनादानगमनविसर्गानन्दपञ्चकम्
प्राणस्त्वपानो व्यानश्च उदानस्समान एव च ८
नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः
मनोबुद्धिरहङ्कारश्चित्तं क्षेत्रज्ञ एव च ९
पञ्चत्रिंशति वर्तन्ते जाग्रे तानि विनिर्दिशेत्
शब्दादि विषयादीनि प्राणादीनि मनादिकम् १०
एते चरन्ति वै स्वप्ने शेषाण्येव तु वर्जयेत्
जाग्रेद्विषयभुक्तिश्च प्रतिभा स्वप्न एव च ११
अयसोऽग्निसमायोगा वियोगेऽग्निरिवायसम्
तद्वच्चैतन्ययोगश्च वियोगकरणान्वितम्
प्राणयुक्तो मनश्चैव क्षेत्रज्ञश्च सुषुप्तिकम् १२
आत्मा प्राणस्तुरीयं तु तुर्यातीतं तु सर्वगम्
किन्तु गुह्यमिदं वक्ष्ये शृणु त्वं नन्दिकेश्वर १३
आत्मनो विषयो भोक्तुं प्रकृतिस्तस्य वर्धनम्
प्रकृत्या नियमानस्य सावस्था जाग्रदुच्यते १४
विना करणदेहानां व्यापारैरात्मनः क्वचित्

प्रवृत्तिर्मनसः स्वप्नस्तत्वभावेषु केवलम्  १५
स्व स्वद्विषय संभोगस्वेदखिन्नेयमात्मनि
मनः प्रकृतिनिश्चेष्टा सुषुप्तिर्नन्दिकेश्वर  १६
मनोव्यापारहीने तु चित्तभूतिगमागमे
तुरीयत्वं परावस्था तुरीयादि निरञ्जनम्  १७
दृष्टदर्शनदृश्यानां नष्टे यो दृष्टदर्शयोः
स्वसंवेद्यंवेद्यं परं ज्योति ज्ञप्तिरूपो महत्प्रभुः  १८
स्थूलसूक्ष्मसु सूक्ष्मं च अतिसूक्ष्मं तदाधिकम्
स्थूलं जाग्रामिति ज्ञेयं सूक्ष्मं स्वप्नमिहोच्यते  १९
सुषुप्तिस्तु सुसूक्ष्मं स्यात् अतिसूक्ष्मं तुरीयकम्
अधिकं तुरियातीतं एवं पञ्चविधं स्मृतम्  २०
स्वप्नं चैव सुषुप्तिश्च तुर्यं चाधिकमेव च
जाग्रास्थाने प्रदृश्यन्ते योगमभ्यस्यतः क्रमात्  २१
जाग्रे च दृश्यवृत्तिस्तु प्रत्याहारेण शाम्यति
धारणायां त्यजेत्स्वप्नं ध्यानेनैव सुषुप्तिकम्  २२
समाधिना तुरीयं तु तुर्यातीतं शिवेन तु
जाग्रादि पञ्चावस्थायामतीतज्ञानरूपकम्  २३
सद्गुरोरुपदेशेन स्वप्रकाशेन निश्चयः
एवं ज्ञात्वा विशेषेण समाधिं कारयेद्बुधः  २४
रूपशून्यमिति ज्ञेयं समाधिरभिधीयते
चित्तशुद्धिं स्थिरीकृत्वा शिवलक्षणमेव हि  २५
आनन्दशिवयोगस्तु शिवयोगं सदाभ्यसेत्
आनन्दो ब्रह्ममितिज्ञेयं जायते स्माच्चयमा चिरम्  २६
आनन्दाद्बर्धति तद्वा तस्मादानन्दमुच्यते
स्वरूपरहितं शून्यं न वर्णावर्णभावितम्  २७
ज्ञानादिरहितं बुद्धिश्चित्ताहङ्कारनाशनम्

भावनाशः परामुक्तिर्यत्तत्संसारनाशनम्
चिन्तया रहितं यच्च तन्नाशानमुक्तिरेव हि २८
आनन्दान्तर्गता मुक्ताः केचिदानन्द एव हि
आनन्दो ब्रह्म एवेति शिववाक्यश्रुतिक्रमात् ३०
आनन्दानन्द इत्युक्तं त्रैलोक्यं ज्ञानरूपकम्
योगं वक्ष्येऽन्यरूपं तु रूपयोगमरूपकम् ३१
अरूपरूपनाशं तु रूपयोगं सुदर्शनम्
सुदर्शनस्पृशेल्लिङ्गं स्पर्शलक्षणमारभेत् ३२
इति चिन्त्यशास्त्रे समाधिलक्षण एकचत्वारिंशत्पटलः

## समाधिराजन्

अथ वक्ष्ये विशेषेण समाधिराजमुत्तमम्
सन्ध्याकालेऽथवा काले सन्ध्यावन्दनपूर्वकम् १
लिङ्गार्चनस्य काले तु लिङ्गार्चनमथाचरेत्
पश्चाद्योगं समभ्यस्य तत्काले योगमेव तु २
योगिभिस्सर्वकालं स्याच्चन्द्रस्याङ्कं स्वनाशनम्
गुरोस्समीपदेशे तु वसेद्योगीसमीपतः ३
सद्गुणोपेतशिष्येण सहितो वासमाचरेत्
सन्तानिकेन सहितो लिङ्गार्चनयुतेन च ४
समाधिमभ्यस्यादायाद्योगी द्विविधिनाद्व्यधिकं यदिति
सहायो लिङ्गपूजां चाचार्यस्यावियोगिता ५
शौचमाचमनं चैव प्रथमं च द्वितीयकम्
आसनं च तृतीयं च चोत्तराभिमुखस्थितिः ६
चतुर्थं भस्मना स्नानं पञ्चमं रसभस्मकम्
षष्ठं रुद्राक्षमालाभिरुपवीतादि भूषणम् ७

सप्तमं तु गुरुध्यानमष्टमं नाभिशोधनम्
नवमं दहनं चैव दशमं प्लावनं तथा  ८
एकादशं प्राणायामं सन्यासं द्वादशं भवेत्
मन्त्रन्यासं तु नन्दीश षडङ्गन्यासपूर्वकम्  ९
त्रयोदशं नाडिसंधानं सुषुम्ना च चतुर्दश
मूलाधारं पञ्चदशं षोडशं ब्रह्मनाडि वै  १०
अधिष्ठानं सप्तदशमष्टादशं मणिपूरकम्
एकोनविंशद्धृदयं विंशं चैव विशुद्धिकम्  ११
एकविंशञ्च वा भूमिर्ज्ञानदेशमतः परम्
त्रयोविंशञ्चन्द्रबिम्बं च चतुर्विंशं शिवपरम्  १२
स्थाणुलिङ्गं पञ्चविंशत् समाधिस्तदनन्तरम्
आनन्दं सप्तविंशञ्च तद्भेदं च ततः शृणु  १३
पूर्वोक्तं च विना त्वस्य रत्नगर्भ शृणुष्व तत्
शिवाख्यं गुरुरूपं तु भावयेत्तु प्रयत्नतः  १४
रूपं च रूपवक्त्रं च आनन्दं गुरुरेव हि
प्रभावाद्दहते यस्तु सर्वदोषनिबर्हणम्  १५
मन्त्रध्यानं प्रकुर्वीत सदाशिववपुःस्वयम्
दद्याच्छिवमयं रूपं शिष्यो ध्यायन्समाहितः  १६
तत्तत्परतरं ज्ञेयं शिवाख्यं गुरुरूपकम्
एवं ध्यात्वा सदायोगी निश्चलेन समाहितः  १७
निवृत्तिं च प्रतिष्ठां च विद्यां शान्तिं तथैव च
शान्त्यतीतां क्रियां शक्तिं ज्ञानशक्तिं तथैव च  १८
इच्छाशक्तिं पराशक्तिं नवाधारेषु भावयेत्
आत्मतत्त्वं च विद्यां च शिवतत्त्वमनन्तरम्  १९
महेश्वरं च सादाख्यं बिन्दुं च तदनन्तरम्
नादं तु शक्ति शान्तं च क्रमादेतानि भावयेत्  २०

सरस्वतीं च गौरीं च लक्ष्मीं चैव भवानिकाम्
मनोन्मनीं च पूर्वोक्तां पश्चादेताश्च भावयेत् २१
सृष्ट्यादि सकला भूमौ अवधिं दश वारुणाः
तामसी मोहिनीत्यादि दश वा द्विकलाः स्मृताः २२
हृदि पादादिकां चैव भवेद्वायोश्चतुष्टयम्
रौरवाश्च दशान्तं च तापिन्यादि कलाः स्मरन् २३
शुद्धिकान्या व्योमकला शुद्धिश्शैवीं च भावयेत्
तत्र वामादि नवकं ध्यायेद्वै नन्दिकेश्वर २४
बिन्दुस्थाने तु जीविन्याद्याश्च षोडश भावयेत्
आज्ञास्थानेऽनया युक्ते कलाषोडशकं स्मरेत् २५
आनन्दिनी महानन्दीत्यादि सम्भावयेत्क्रमात्
चन्द्रस्थानेऽमृतता नादपष्पाश्च षोडश २६
रतिप्रीत्यादिनवकं तस्य मध्ये तु भावयेत्
मूलाधारे वसन्ताद्यास्तदूर्ध्वे बालषरामुखम् २७
ड फ पदाक्षरं चैव कराठान्तद्वादशं भवेत्
अकारादि क्षकारान्तं कर्णदेशे च पूर्ववत् २८
ह क्षवर्णद्वयं चापि तालुमूले विभावयेत्
स्वरांस्तत्रैव भ्रूमध्ये चन्द्रबिम्बे तु षोडश २९
एवं क्रमेण सञ्चिन्त्य प्रत्येकं षोडश स्वरान्
वाङ्मनोतीत मन्त्रैश्च ब्रह्मरन्ध्रं च भावयेत् ३०
मूलाधारं गुदं प्रोक्तं आधेयं परमं विदुः
हंसमन्त्रसमायुक्तं शक्तिबीज समन्वितम् ३१
प्रासादं च तदूर्ध्वे तु सञ्चिन्त्य तदनन्तरम्
अधिष्ठाने च प्रणवं नाभौ चिन्तमणिर्भवेत् ३२
मृत्युञ्जयं च हृदये शिवमन्त्रं च बिन्दुके
त्रिब्रह्मरूप ताल्वादि त्रिस्थानेषु च भावयेत् ३३

शिवबीजं तदूर्ध्वे तु शक्तिबीजं तु भावयेत्
न शिवेन विना शक्तिर्न शक्तिरहितश्शिवः ३४
स्थानं प्रति च यत्प्रोक्तं तेजोरूपं च भावयेत्
सकलीकृत्य च ध्यायेच्छिवयोगी सुनिर्मलः ३५
साधेयमेवं प्रोक्तं स्यात् ज्ञानदेशं तथोच्यते
ज्ञानदेशं तु ज्ञानाति त्रिदशैरपि दुर्लभम् ३६
नेत्रमध्ये ततश्चित्तं स्वकीयं सन्निवेशयेत्
सन्निवेश्य ततस्तिष्ठेदेकचित्तः प्रसन्नधीः ३७
ज्योतिराकारमेवं तु यावदास्ते प्रयत्नतः
तावन्निगत्य भूतात्मा देहादूर्ध्वे व्यवस्थितः ३८
पश्यते च जगत्कृत्स्नं स्वकायस्योपरि स्थितम्
सप्तलोकांश्च तत्रैव पश्यते योगचक्षुषा ३९
ज्ञानदेशस्य सार्धं तु स्थाणुलिङ्गं प्रकीर्तितम्
मूलाधारं समारभ्य ब्रह्मरन्ध्रावसानकम् ४०
समस्ततेजसां तेजः प्रदाने च प्रवीणकम्
षट्त्रिंशत्तत्त्वविज्ञानं तत्त्वनामादिकं स्वयम् ४१
अप्रमेयमसादृश्यं परं धाम महोदयम्
शान्तं तत्त्वमयं चैव तत्तत्त्वं जीवरूपकम् ४२
चिद्घनं सर्वगं सूक्ष्ममानन्दमचलं ध्रुवम्
विश्वाक्षं सर्वतो वक्त्रं सर्वाक्षं सर्व बाहुकम् ४३
सर्वस्पर्शं सर्वपादं सर्वशीर्षं सदोदयम्
सर्वज्ञानं सर्वकार्यं परं परतरं शिवम् ४४
बिन्दुस्तन्तुनिभं ज्योतिर्भावयेद्योगसत्तमः
कुण्डली जगदाधारः प्रथुनामर्धरूपिणी ४५
ज्योतिरूपान्नाद नाद नाद शक्तियुता वरः
नवकूटाक्षरेणैव ब्रह्मरन्ध्रान्तमुच्यते ४६

नीवारशूकवत्तन्वी पिङ्गरूपा तथैव च
तत्तदाधार पद्मानि सुभीत्या ब्रह्मरन्ध्रगाः ४७
अम्बुजं मुकुलं चैव तद्बोध्यामृतधारया
कलिन्दी च शिवं तत्र पूजयन्ती च कुण्डली ४८
क्रमुकादूर्ध्वदधश्चैव प्लावयन्ती च भावयेत्
कुर्यान्निपद्मचैतन्यं कर्तव्यमध योजयेत् ४९
एवं ध्यात्वा समाध्यन्तं कदा तत्रैव च चिन्तयेत्
समाधिर्वक्ष्यते सूक्ष्मो ह्याधाराधेयवर्जितम् ५०
जलान्तरगते रश्मौ ह्यणीयो दृश्यते रजः
तत्परं परमाणूनां परिमाणं प्रचक्षते ५१
रूपाणां चैव सर्वेषां परिमाण समूहकम्
एकैकं तु व्यपोह्यं तु कस्मिन् चित्तं नयेत्तदा ५२
शिवशक्त्यात्मकं सर्वं ज्ञानस्थाने लयं नयेत्
निरालम्बे मनस्तस्मिन् शैवं तेजश्च दृश्यते ५३
शिवबिम्बस्य तन्मध्ये मनोन्मीलितलोचनः
क्रमेणैवाग्रबलतः शैवज्योतिश्च दृश्यते ५४
अनाहते सुतच्छून्ये सुखितं च गतात्मनः
आद्यन्तशून्यरहितः शिवतेजः प्रकाशते ५५
प्रासादपञ्चनादेन प्लुतमुच्चारयेत्क्रमात्
ध्यातव्यं तु पराशक्त्या शान्त्यतीता प्रकाशते ५६
चक्रद्विषट्के सावर्ते नाभो दिष्वङ्गमुत्सरैः
स्थलादि क्रमशो मुक्तेष्वन्तं तस्यां मनोदयः ५७
चापल्यादि घ्नते हृद्यैः क्रमाद्दीर्घैर्निवेशितः
अन्येन विषयश्चैतत्तुल्लये लीयते शिवे ५८
द्वादशान्ते च हृदये घट्टनात्प्राणवायुना
दिनेऽन्यो भाविते योगे सर्वानन्दत्वमश्नुते ५९

आधारे वापि शक्तौ वा प्रोन्यास्मिन्नात्मनो लये
शक्त्याभीष्टस्य कंपादि क्षेपशान्तौ परस्थितः ६०
आशिरः प्राणमापूर्य ब्रह्मनाड्यवसानकम्
सविकल्पस्सदा योगात् परा शान्तिः शिवो भवेत् ६१
सूक्ष्मक्रमोत् क्रमं शान्तिमामूलात् ज्योतिरूपिणम्
ब्रह्मरन्ध्रे प्रशान्त्यन्तं ध्यायेत्तस्य शिवोदयः ६२
त्रिकुण्डलानष्टवक्त्रानारुह्योद्बोधना रुजम्
शक्तिकोशत्रयं भित्त्वा खेचरस्य तदूर्ध्वकम् ६३
महाश्रुतिगते व्योम्नि चन्द्रार्कादेर्निरम्बुदे
संयम्य चक्षुरेकाग्र्यो योगी पश्येत्स्वयं नभः ६४
शिवेकाख्य वनौषध्यागादो बद्धो मनो रसः
स्तम्भकुम्भादिसंक्षिप्तं कुर्याच्छिवसुकाञ्चनम् ६५
अध्यानं च समादाय स्थित्वा भुवि विशिष्यते
आनन्दश्च भवेद्योगी सर्वदा नन्दिकेश्वर ६६
अणिमाद्यष्टसिद्धिश्च सिद्ध्यत्येव न संशयः
आकाशगमनादीनि सर्वज्ञानसमृद्धयः ६७
भवन्ति सर्वभुवनं करामलकवद्वदेत्
योगदृष्ट्या तु सकलं पश्यते नु चराचरम् ६८
येषां वृष्टिनारानन्दं आनन्दं भवति ध्रुवम्
आनन्दलक्षणं वक्ष्ये शृणु त्वं नन्दिकेश्वरः ६९
दाराणां पुत्र संप्रोक्तं अपरं परमित्यपि
अपरं जीवितं प्रोक्तं मोहजीवितसंज्ञकम् ७०
लोकं च बीभदेवं च मोहानन्दमथोच्यते
दाराणां पुत्र पौत्रादि लब्ध्वा चानन्दनो जनः ७१
भक्ष्यभोज्यादिजनितं जीवितानन्दसंज्ञकम्
स्तुतिकीर्त्युदितानन्दं लौकीकानन्दमुच्यते ७२

सकलानां च सर्वेषां मोहानन्दस्थितं परम्
एतत्कारणरूपं तु प्रियाङ्गं लक्षणान्वितम् ७३
उत्तमं षोडशांशं स्यात् चतुर्विंशति मध्यमम्
द्वाविंशं त्वधमं ज्ञेयं शक्तिलक्षणसंयुतम् ७४
पञ्चविंशतिरानन्दमपरानन्दजं भवेत्
सर्वावयव संपूर्णं सर्वलक्षणसंयुता
सर्व शोभन संयुक्ता गुणशील समन्विता ७५
सर्वाभरण संयुक्ता सर्व गन्धानुलेपना
सुगन्ध पुष्प संयुक्ता प्रसन्नवदना सदा ७६
नाना लक्षण संयुक्ता क्षणवेदकरा परा
मोहानन्दस्य मूलं च जीविताद्याश्च लब्धवात् ७७
अपादेनन्दसंप्रतिस्सिद्धिरत्यैव चोच्यते
शब्दस्पर्शं च रूपं च रसो गन्धश्च पञ्चमः ७८
एकैक पञ्चधा ज्ञेया शब्दं पञ्चकमुच्यते
प्रियाणां गुप्तवचनं संयोग श्रवणं भवेत् ७९
गन्धश्छोद्याहतं तस्य श्रवणं च तदुद्भवम्
मितं च रागजनकं स्वात्मस्तुतिरतो भवेत् ८०
शब्दपञ्चकमेवं हि स्पर्श पञ्चकमुच्यते
प्रियाया स्पर्शनं चैव पुत्र सप्तं तथैव च ८१
सुहृदालिङ्गनं चैव गन्धवाह --- श्मितम्
यथेष्टकालशीतोष्ण स्पर्शनं चैव तु पञ्चकम् ८२
प्रियदर्शनमेवं तु प्रियां वीक्ष्या दिगम्बरम्
नृत्तादि दर्शनं चैव स्व हिरण्यादि दर्शनाम् ८३
पित्रादि दर्शनं चैव स्पर्शपञ्चकमीरितम्
भक्ष्यं भोज्यं च लेह्यं च पेर्हियं शोष्य पञ्चधा ८४
रसपञ्चकमेवं स्यात् रसकाले समुद्भवम्

मदगन्धञ्चोमञ्चामञ्च चन्दनादि सुगन्धकम् ८५
पुष्पगन्ध सुधाघ्राण ---- पञ्चकमुच्यते
रागं वर्धति मूर्खाणां रागमुञ्चति पण्डिताः ८६
समुपाय समोपेतं क्रीडान् सर्पैर्न दृश्यते
ज्ञानयोग समायुक्तस्तत्वादीय पञ्चगैः ८७
पञ्चविंशतिरानन्दं अपरानन्दजं भवेत्
एवं बुध्यस्व नन्दीश परानन्दमथोच्यते ८८
त्रिविधं तत्परानन्दं मोक्षकारणकं भवेत्
एतत्रयं परानन्द मोक्षकारणकं भवेत् ८९
अगम श्रवणाङ्गानां गुरोस्तुतिपरं तथा
गुरो प्रियवचश्रावमुपतेश शतं तथा ९०
एवं पञ्चकसंयुक्तं श्रवणानन्दजं भवेत्
लिङ्गस्पर्शनकं चैव भूत्यादि स्पर्शनं तथा ९१
गुरुपादाम्बुजं दृष्ट्वा गुरोस्संस्पर्शनं तथा
ज्ञानदेशस्य संस्पर्शः स्पर्शपञ्चकमीरितम् ९२
दर्शनं शिव लिङ्गस्य शिवयज्ञादि दर्शनम्
योगदृष्ट्यावलोकं च रूपपञ्चकसम्भवम् ९३
गुरुप्रसादभक्ष्यादि गुरुपादाब्जजं जलम्
योगामृतरसास्वादं त्रिविधं रसमुच्यते ९४
योगात्समुत्थितं गन्धं दिव्यगन्धमनौपमम्
ब्रह्मेन्द्रादिसुराणां च सर्वेषां जन्मकोटिभिः ९५
अलब्धं मोक्षदं दिव्यं बोधानन्दमवाच्यकम्
कदा किञ्चिन्नकस्यापि दत्तवान् विदिशस्थिताम् ९६
तत्स्मृत्वा जननी व्यालं परमानन्दजं परम्
एवं परात्परं ज्ञेयं वर्जनायीतभोजनम् ९७
एतानि स्थूलसूक्ष्माणि सुसूक्ष्माणि भवन्ति वै

परात्परतं गुह्यं ग्राह्यग्राहकवर्जितम् ९८
रागारागविनिर्मुक्तं द्वैताद्वैतविवर्जितम्
चिन्त्याचिन्त्यविनिर्मुक्तं वाच्यवाचकवर्जितम् ९९
एवमानन्दसंप्राप्तौ मुक्तिरेव न संशयः
गुरुवक्त्रेण तत्सिद्धिरानन्दस्तु न संशयः १००
आनन्दं भावयेद्योगी सर्वक्लेशनिबर्हणम्
इति चिन्त्यशास्त्रे सहस्त्रग्रन्थे सादाख्यमखि समाधिराज
द्विचत्वारिंशत्पटलः

स्थूपि स्थापनम्

अथ वक्ष्ये विशेषेण मूर्तीनामष्टविधं परम्
शिखरस्तु शिला हर्म्ये इष्टिकाष्टविधं चैव १
दारुभिर्दारुहर्म्ये तु कथितः शुभमिष्यमिति
एकाद्यनेक भूमानां हर्म्याणां तु विशेषतः २
प्रासादस्याग्र ईशे च सौम्ये च वायुगोचरे
नवाष्ट सप्तकं पञ्च हस्तं वा --- मण्डपहस्तकम् ३
तद्विस्तारं समायामं चतुरश्रं समं गुरु
मण्टपं वा प्रपां वाथ षोडश स्तम्भ संयुतम् ४
चतुर्द्वारसमायुक्तं चतुस्तोरण संयुतम् ५
तरङ्ग वेष्टनं चैव वितानध्वजसमायुतम्
मुक्ता सृत् मालादिभिरलंकृत्य विशेषतः ६
मण्टपस्य त्रिभागैकं मध्यभागे तु वेदिका
वेदाङ्गुलोन्नतं वेदि उपवेदि स्युगाश्रयम् ७
शेषवेदि विशालं तु अङ्गुलं भानुमात्मकम्
भानुद्वयाङ्गुलोच्छ्रं तु दर्पणोदर सन्निभम् ८
महेश स्वग्निकुण्डानि चतुरश्राणि कल्पयेत्

अथवा वालुकै स्थूलै स्थरिडलं परिकल्पयेत् ९
ब्राह्मणान् भोजयेत्तत्र दक्षिणान् दापयेद्बुधः
स्थरिडलं कारयेत्तत्र अष्टद्रोणैश्च शालिभिः १०
तदर्धं तरडुलं भूष्य तदर्धैस्तु तिलैरपि
लाजैश्चय परिस्तीर्य श्वेताब्जं परिकल्पयेत् ११
नानापुष्पै कुशोदर्भै परिस्थीर्य विचक्षणः
लोहजं दारुजं बन्ध स्थूपिदरडं तु कारयेत् १२
आसनं खादिरं बन्धा तिन्त्रिणी सरमेव च
मधुकं चन्दनं चूतं षडतारूपहेमम १३
स्वर्णा इष्टिकायां तु यम्मिश्रं तु एव वा
तुङ्गं गुणांशकं चैव मूलवेदाश्रमाचरेत् १४
प्रक्षाल्य पञ्चगव्यं तु दरडं चैवाष्टमूर्तिकान्
पृथिव्यादि तत्त्वबीजानि दरडान्तं विलिखेद्बुधः १५
स्वर्णं च रजतं ताम्रं सूत्रे कार्पाकैस्तु वा
कौतुकं बन्धयेद्विद्वान् स्वर्णबीजमनुस्मरन् १६
ब्रह्माविष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः
चक्राष्टकादि दरडान्तं अथिदेवान् क्रमान्यसेत् १७
नैवेद्यं दापयेद्देवं ताम्बूलं च निवेदयेत्
प्रत्येकं नं वस्त्रेण अर्चयेत्कूर्च संयुतम् १८
गन्धाक्षत समायुक्तं वस्त्रहेमसमन्वितम्
चूतपल्लव संयुक्तं अष्टविद्येश्वराधिपान् १९
ततो होमं प्रकर्तव्यं अग्नियाधानिकं कुरु
समिधाज्य चरू लाज यव सद्यादिबलिं बुधः २०
शतमर्ध तदर्धं वा प्रत्येकं जुहुयात्क्रमात्
आचार्य मूर्तिपैस्सार्धं स्नानं कृत्वा विधानतः २१
स्वष्टमग्नीतिमन्त्रेण पूर्णाहुतिमथाचरेत्

स्थित राश्यादयो विप्र उच्चराशिस्तुदयेपि च २२
उत्तराभिमुखो भूत्वा आचार्यो मन्त्रमुच्चरन्
ब्रह्माविष्णुश्च रुद्रश्च ईशश्च सदाशिवः २३
चिन्तये स्व स्व मन्त्रेणाष्टोत्तरशतं क्रमात्
इति चिन्त्यागमे प्रतिष्ठातन्त्रे स्थूपिस्थापनविधिपटलः

## पुष्करणी प्रतिष्ठा

पुष्करस्या प्रतिष्ठां तु प्रवक्ष्यामि प्रभञ्जनम्
सर्व पापहरं चैव सर्वतीर्थफलं तथा १
सर्व देवाभिषिच्याथ तत्फलं लभते ध्रुवम्
देवखातं भूतखातं ऋषिखातं मृगादिकम् २
तटाककूपकुण्डे वा पर्वते खातकुण्डकम्
नाम्ना पुष्करणी प्रोक्तं तत्प्रतिष्ठा विधिक्रमम् ३
जलजन्त्वादि जन्तूनां वन्दयित्वा शिवाज्ञया
व्यपोह्य तीर्थतीरे च प्रोक्षितेन शिवाणुना ४
पश्चादुत्पन्नजन्तूनां दोषं तीर्थं च विद्यते
तीरे दक्षिण पश्चिम्ये सौम्ये पूर्वे च मण्टपम् ५
शिलायां इष्टिकां वापि तृणादि पर्णपत्रिकैः
मण्टपोक्त विधानेन निर्मितं आगमोक्तवत् ६
उत्तरायणकाले च शुक्लपक्षे शुभेदिने
शुभनक्षत्र लग्ने वा मलादिमास निन्दितम् ७
भागीरथीरनुज्ञां च पर्यग्निकरणं तथा
अङ्कुरार्पयेद्धीमान् कर्ता देशिक सूत्रकम् ८
बध्वा काञ्चन कार्पासं रजतेन सुनिष्कयुत्
अधिवासन गङ्गादि सप्ततीर्थादि देविकाम् ९
यथा देवि प्रतिष्ठा च तथा सर्वं समाचरेत्

गङ्गा भागीरथी लक्ष्मी जलदुर्गा भवानिकीम् १०
शङ्खदेवी ताम्रपर्णी सिन्धुवाहिनि चण्डिकाम्
तन्मध्ये गौरि संस्थाप्य नव कुम्भसुवस्त्रयुत् ११
चूतपल्लव संयुक्तं द्रोणपूरित कुम्भकैः
मालागन्ध सुयन्त्रैश्च भूषणैरम्भरादिकम् १२
अष्टोत्तर शतं निष्कं जलजन्त्वादि निर्मितम्
कुम्भमध्ये प्रतिष्ठाप्य परिवार घटैस्सह १३
शालितण्डुललाजैश्च भारं भारार्धमेव च
आचार्य शिष्य संयुक्तं वस्त्रहेमाङ्गुलीयकैः १४
निष्कद्वादश पञ्चाङ्ग निर्मितं दापयेद्गुरुः
यथा देवि तथान्यासं कृत्वा च सकलीकरः १५
पूजासर्वं समापाद्य अग्निकार्यं यथा विधिः
स्थण्डिले योनिपद्मे वा आथानीदि विवाहकम् १६
सर्वं कृत्वा देविनामं पूर्णायां बलिमाचरेत्
कुम्भे संयोज्य मतिमान् कृत्वा तीर्थ प्रदक्षिणम् १७
सोमपान हीनयुक्तो वा घटं तीर्थ समीपके
दशदानं प्रदातव्यं दीनान्धक कृपादिनाम् १८
जयघोष समायुक्तं वाद्यघोष समन्वितम्
तीर्थे चैवाभिषिच्याथ धूपदीपं समाचरेत् १९
नैवेद्यं दापयेत्पश्चात् ब्राह्मणान् भूरिभाजनान्
एवं यः कुरुते मर्त्य स पुण्यांगतिमाप्नुयात् २०
इति चिन्त्यशास्त्रे पुष्करणीविधिपटलः

## सत्र प्रतिष्ठानियमम्

अथातस्संप्रवक्ष्यामि अन्नसत्रविधिक्रमम्
साधु साधु महानन्दि गुप्तमेव वदाम्यहम् १

अन्नं प्राणात्मकं श्रेष्ठं सर्वजन्तु प्रतिष्ठितम्
तस्मादन्नां प्रदातव्यं चतुराश्रमधर्मिणाम् २
पूर्व जन्मार्जितं पापं अकारेण विनिश्यति
इह जन्मकृतं पापं नकारेण व्यपोह्यति ३
तयोरेव विनिश्यन्ति अन्नमित्यभिधीयते
ये ये मनुष्य चतुरो अन्नं दत्वा स्मरन् हृदि ४
सप्तजन्मकृतं पापं क्षिप्यमेवा विनिश्यति
भोजनान् पूर्वतो रुद्रः परतो विष्णुरुच्यते ५
भोजनान्ते पद्मयोनीं भाविते अन्नदानतः
अभ्यागत स्वयं विष्णुः अकामान् शङ्करोवहि ६
काममेव प्रदातव्यं फलानन्तं समुन्नते
यस्यान्नेन्नोदरस्थेन यत्कर्म कुरुते नराः ७
अन्नकर्तृ त्र्योभागः कर्ता भागेनलिप्यते
लक्षकोटि शतो विप्रः दातव्यं शैवमेकतः ८
दीक्षाभिषेक विप्रेन्द्र द्विगुणं फलमाप्नुयात्
अन्नदानात्परं नास्ति दानमेव फलं विना ९
साधुनन्दि महाप्राज्ञा अन्नशालाविधिं शृणु
राजधानि समीपे वा तीर्थतीरे तटाकयोः १०
वीथ्याग्रे वीथि मध्ये वा वीथ्यन्तेवान्तरालके
चैत्यवृक्षसमीपे तु पुण्यक्षेत्रादिके वा ११
शैलमूल समीपे वा अस्थितीरे पादमार्गके
मनोरञ्जित देशेषु सत्रादि नियमं कुरु १२
मनोविशालवद्दीर्घं क्लिप्तिमानं न विद्यते
शिल्पिशास्त्रोक्तवत्कृत्वा शङ्कुस्थापनवद्भवेत् १३
सकारं सर्वसिद्धिं स्यात् त्रकारं मोक्षहेतुकम्
त्रयोरेव प्रकारेण सत्रमित्यभिधीयते १४

सांम्राज्य सकलैश्वर्य सायुज्यं सत्कलत्रकम्
सत्पुत्र लभते प्राप्ति सत्रदानात्फलं लभेत् १५
सत्रोपकरणे दानं फलं द्विगुण सिध्यति
परराष्ट्रभयं क्लेशं शत्रुपीडं व्यपोह्यति १६
तत्रतिष्ठाक्रमं वद्येहं शृणुध्वं नन्दिकेश्वरः
अनुज्ञां गणानाथस्य कर्ता ब्राह्मणभिस्सह १७
ग्रह वास्तु प्रकुर्वीत पर्यग्न्यादि विशोधितम्
सप्तशुद्धिं प्रकर्तव्यं प्रोन्नितं पञ्चगव्यकैः १८
ईशानदेशे स्तम्भस्य रन्नासूत्रं सुबन्धयेत्
कर्ता देशिक द्विजक्ली च काञ्चनं रन्नासूत्रकं भवेत् १९
अन्नलन्मी दानलन्मी वीरलन्मी वराहिकाम्
तन्मध्ये अन्नराशो पञ्चकुम्भ सुपक्वयुत् २०
चूत पल्लव संयुक्तं नालिकेर फलैर्युतम्
शालितराडुललाजादि भारमानं विधीयते २१
वस्त्राभरण मालादि अलंकृत्य विशेषतः
सप्तविंश घटात्प्रोक्तं चरिडका यागवद्भवेत् २२
आधानादि विवाहान्तं अग्निकार्यं समाचरेत्
कुराडे वा स्थरिडले वापि होमं कृत्वा समाचरेत् २३
पूर्णाहुतिं प्रकर्तव्यं अन्तर्बलि बहिर्बलिम्
यात्राहोमं प्रकल्प्याथ दशदानं समाचरेत् २४
सुमुहूर्ते सुलग्ने च कृत्वा शाला प्रदन्निणम्
नृत्तमद्दल भेर्यादि वाद्यघोष पुरस्सरम् २५
नाना तुम्बुरु शङ्खाद्यै घोषयेद्वेद घोषयुत्
शाला सत्रीशदेशे स्तम्भे कुम्भाभिषेचनम् २६
अर्चनोक्तं समभ्यर्च्य नैवेद्यं धूपदीपयुत्
यावत् चन्द्र रविकालं तावत्सत्रान्न राशिनीम् २७

इति संप्रार्थ्य विप्रेन्द्र आशिषो वाचयेत्ततः
दीनान्धकादि विप्रेन्द्र भूरिभोजन दानतः २८
आचार्य शिष्य संयुक्तं वस्त्रहेमाङ्गुलीयकैः
निष्क पञ्चक दातव्यं गुरवे सन्निवेदयेत् २९
राज्याध्य राज्यमाप्नोति यशार्थि यशशोपि वा
कामार्थि काम्यमाप्नोति मोक्षार्थी मोक्षमाप्नुयात् ३०
इति चिन्त्यशास्त्रे सत्र नियमविधि पटलः

## नृत्तराजोत्सवम्

अतः परं प्रवक्ष्यामि नृत्तराजोत्सवक्रमम्
सर्वेषां यागमूर्तीनां तपस्यार्थ फलप्रदम् १
इष्टकाम्यार्थ सिद्ध्यर्थं प्रीतार्थ फलप्रदम्
ब्रह्महत्यादि दोषघ्नं यागकाम्यार्थ साधनम् २
पूर्वरात्रौ तु विधिवत् रक्षासूत्रं तु धारयेत्
आस्थान मण्टपे वापि पूजयेत्तु यथा विधि ३
विचित्रस्याम्बरं धार्यं सर्वाभरणभूषितम्
चम्पकोत्पल ह्वेरं सुमुखाम्बुज पाटलिः ४
एतत्सुगन्ध पुष्पैश्च दापयेत् शिवशक्तयोः
तस्याग्रे स्थण्डिलं क्षिप्त्वा साष्टपत्रं सकर्णिकम् ५
दर्भैः पुष्पैः परिस्तीर्य पुण्याहं वाचयेत्ततः
शान्तिकुम्भं तु विधिवत् स्थापयेद्देशिकोत्तमः ६
तस्य दक्षिणभागे तु होमं कृत्वा यथा विधि
अग्न्याधानादिकं सर्वं अग्निकार्योक्त मार्गतः ७
समिदाज्य चरुं लाजान् सर्षपं च यवं तिलान्
बिल्वपत्रोत्पल स्कन्द कदलीफलसंगृहेत् ८
मूलेन होमयेत्सर्व द्रव्यान्ते व्याहृतिं हुनेत्

जयादिरभ्यादानं च स्वष्टकृत्पूर्णमाहुनेत् ९
कुम्भतोयेनमावाह्य घोषयेत्कृष्णगन्धकम्
तद्धात्रीर्महिषी मिश्रं कर्पूराद्यैस्सुगन्धिभिः १०
संगृह्य कृष्णगन्धौ च स्थलिकेत्स्थापयेत्सुधीः
शोधनं चास्त्रमन्त्रेण वर्मणा चावकुण्ठयेत् ११
ब्रह्माङ्गैरभिमन्त्रेण धेनुमुद्रां प्रदर्शयेत्
पाद्यमाचमनं चार्घ्यं हृदयेनैव मन्त्रतः १२
दापयेत्कृष्णगन्धं च शिरोमन्त्रौ ललाटके
दक्षिणे चैव बाह्वौ च शिखामन्त्रेण दापयेत् १३
विधिवद्दापयेद्भस्म धूपदीपं ददेद्गुरुः
सदाशिवं दापयेत्पश्चात् मूर्तीनां दापयेत्ततः १४
ललाटे च गणे चैव शक्तीनां दापयेत्ततः
देशिकं दापयेत्पश्चात् यज्ञब्रह्मचादयोस्तथा १५
नृपाणां चैव भक्तानां दापयेत्कृष्णगन्धकम्
प्रभामध्ये स्थितं देवं रत्न सिंहासनोपरि १६
देवस्यैकासने सव्ये देशिकं सुखमास्थितः
देवस्य वामभागे तु गौरी सर्वं विभूषणी १७
वामदेशे नृपं वापि पृष्ठे भक्तजनं तु वा
नृत्तको मर्दकैश्चैव दक्षिणे तु व्यवस्थितौ १८
पार्श्वयोरुभयोश्चैव हे रुद्रगणिकास्तथा
देवाग्रे तु विशेषेण नृत्तं कुर्यात्सगेयकम् १९
ग्रामप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति
अर्घ्य पाद्यादिकं कृत्वा फलस्य दीनिवेदयेत् २०
धूपदीपसमायुक्त नृत्तगीत समन्वितम्
पञ्चगव्यादिकं सर्वो रुद्रादीनां तु मन्त्रतः २१
पञ्चब्रह्मादि मन्त्रैश्च नवकुम्भाभिषेचयेत्

अनार्द्रं घोरमन्त्रेण अर्चयेन्मूलमन्त्रतः २२
अम्बरं उपवीतं च भूषणं दर्पणं तथा
ईशानेन प्रदातव्य पाद्यादीन् हृदयेन तु २३
मृवा तु शिरसा दद्यात् धूपं तत्पुरुषेण तु
दीपं वै नेत्रमन्त्रेण नीराञ्जनं तु वर्मणा २४
दर्शयेल्लिङ्गमुद्रां च बीजमात्रां तथैव च
देवस्यत्वेति मन्त्रेण नैवेद्यं तु निवेदयेत् २५
हृदादाचमनं दत्वा निर्माल्यं तु विसर्जयेत्
ताम्बूलं दापयेत्पश्चात् धूपदीपं तु दापयेत् २६
सिंहासन स्थितं देवं वामे गौरी समायुतम्
सव्ये धैव सुखासीनं परिवेषं विना सुधीः २७
इति भावस्थितं देवं पश्चात् द्याने विशेषतः
आवृते लोकपालानां भक्तानां च यथा क्रमम् २८
चक्रप्रदक्षिणं सेव्यात् जपात् स्तोत्रात्सुसेविते
तत्सर्वं भारमध्ये तु यानं चक्रप्रदक्षिणम् २९
इष्टकाम्यं तु सन्दद्यात् द्रव्यं तं यावयोस्सदा
स्तोत्रं पश्चात् सुभक्त्यौ स्यदद्यात् सामीप्य पदं यथा ३०
नर्तको मर्दकैश्चैव नृत्तगेय समन्वितम्
नानाच्छत्रध्वजोपेतं शङ्खकाल पुरस्सरम् ३१
वाद्यघोष समायुक्तं पिच्छचामर संयुतम्
धामप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति ३२
नटेश्वरोत्सवं प्रोक्तं अश्वारोहणमारभेत् ३३
इति चिन्त्यशास्त्रे नटेश्वरोत्सव पटलः

वचनसारम्

पक्षोत्सवे विशेषेण त्रिंशद्बलिमथाचरेत्

अष्टाविंशत् चतुर्दश्यां षड्विंशस्स्यात् त्रयोदश १
द्वादशाहे चतुर्विंशत् नवाहेष्टदशं हरे
चतुर्दश स्यात्सप्ताहे पञ्चाहे दशमेपि च २
त्रयोहेषं बलिं दद्यात् एकाचेह्न द्वयं तथा
बलिः एतैश्च विमुद्दिष्ट शान्तिकं च तत शृणु ३

## तीर्थस्नानम्

अतः परं प्रवक्ष्यामि तीर्थस्नानविधिक्रमम्
सर्व स्पर्शन शुद्ध्यर्थं सर्वतीर्थद्वयावहम् १
सर्व भक्तजनानां तु तीर्थप्रासादसिद्धिदम्
सर्व दोषविनाशार्थं सालोकादीन् ददार्थकम् २
शिवतीर्थात् ददे सौख्यात् तीर्थस्नानं समाचरेत्
तीर्थाङ्कुरं तु विधिवत् कृत्वा तु देशिको सुधीः ३
शिवयागस्य राजं च शक्ता वस्त्र समन्वितम्
धूपदीप समायुक्तं छत्रश्चामर संयुतम् ४
गीत नृत्त समायुक्तं वाद्यघोष समन्वितम्
गच्छेद्भक्तजनैर्युक्तं तीर्थ स्नानं समाचरेत् ५
तीर्थतीरे प्रपामध्ये बिम्बानां स्थापयेद्बुधः
शालिभिः स्थण्डिलं क्षिप्त्वा अष्टद्रोणैस्तदर्धकम् ६
बिम्बं प्रति विशेषेण रन्ध्रकुम्भं तु स्थापयेत्
विधिवत्स्थापयेत्कुम्भान् गन्धपुष्पादिना बुधः ७
तीर्थकुम्भं तु विन्यस्य मध्ये मनोन्मनीं न्यसेत्
सप्ततीर्थं तु पूर्वादीन् दुर्गामैशैषमन्वितम् ८
विधिवच्चार्चयेत्कुम्भं जले मध्ये विशेषतः
तस्य तीर्थमयोह्वायत् अर्चयेद्धूपदीपकम् ९
गणमष्टादशानां तु त्रयस्त्रिंशादिदैवतम्

इन्द्रादि लोकपालानां आह्वये शूल सन्निधौ १०
कौतुकं तु विसृज्याथ शूलबिम्बं तु सर्वसु
वारिमध्ये तु संस्थाप्य तिस्रस्नानं समाचरेत् ११
आचार्योस्तु संस्थाप्य तीर्थमुद्वास्यते बुधः
पूर्ववत् प्रभामध्ये बेराणां स्थापयेद्यथा १२
स्व स्व कुम्भाभिषिच्याथ नैवेद्यं धूपदीपयुत्
पूजयित्वा यथा न्यायं प्रविशेदालयं प्रति १३
आस्थानमण्टपे स्थाप्य ब्रह्मघोष समन्वितम्
आशीर्वादाक्षतैश्चैव तदेद्देशिक हस्तकैः १४
देशिकं तु समभ्यर्च्य आशीर्वादस्य अक्षतम्
बिम्बस्थानेषु संस्थाप्य बिम्ब सर्वेषु पूर्ववत् १५
तीर्थस्नानमिदं प्रोक्तं पटस्नानं समाचरेत्
इति चिन्त्यशास्त्रे तीर्थस्नानविधि पटलः

## घटस्नानम्

अतः परं प्रवक्ष्यामि घटस्नानविधि क्रमम्
शिव यज्ञस्य पूजार्थं लोकानां स्थितिकारणम् १
इन्द्रादि यागमूर्तीनां पुनस्सामीप सिद्धिदम्
शिवयज्ञात्प्रसादार्थं घटस्नानं समाचरेत् २
दिक्षु विदिक्षु कुण्डेषु भोक्त्वा चार्यं विशेषतः
पूर्व सन्ध्ये तु विप्रेन्द्र होमपूर्वं समाचरेत् ३
तस्याग्निनां तु तद्बीजं प्रधानाग्निषु योजयेत्
पश्चात् तीर्थान्तरे चैव दिवे यागं तु पूर्ववत् ४
अर्चयित्वा यथाचार्यं पूर्णान्तं होममाचरेत्
गन्धपुष्पाद्धटेभ्यर्च्य नैवेद्यं धूपदीपयुत् ५
आचार्यं पूजयेत्पश्चात् दक्षिणानां तु दापयेत्

पाचकानां समाहूया वस्त्रहेमादि भूषयेत्  ६
तस्मिंस्तु सङ्ग्रहेत्कुम्भात् आलयावरणेषु च
सर्वातोद्य समायुक्तं धूपदीप समायुतम्  ७
प्रदक्षिण क्रमात् श्रुत्वा गर्भगेहे तु विन्यसेत्
पूर्वे तु स्थापयेल्लिङ्गं चातुर्वदघटेषु च  ८
महायज्ञ घटं स्नात्वा लिङ्गे पीठेप्यनुक्रमात्
अभितो लोकपालानां घटं वै स्नानमाचरेत्  ९
पुनस्सामीपदं दद्यात् चतुर्थावरणस्थिता
तदन्ते स्नपनं स्थाप्य तस्यमध्ये सदाशिवम्  १०
वर्द्धनीं वामपार्श्वे तु स्थापयेत्तु मनोन्मनीम्
स्थापयेदष्ट विद्येशं आवृताष्ट घटेषु च  ११
विधिवत्स्थापयेत्सर्वं शिवाग्नि ज्यतितो यथा
पूर्णाहुतिं तु शिरसा स्वष्टकृत्स्वान्तसं हुनात्  १२
अग्नात्कुम्भे समभ्यर्च्य तस्याग्निं तु विसर्जयेत्
तस्य कुम्भं वर्धनीं स्नात्वा लिङ्गे पीठस्यनुक्रमात्  १३
परितोष्ट घटं स्नात्वा अष्टविद्येश्वरं न्यसेत्
शिव पञ्चाव्वृता देवान् तत्तत्स्थान समर्चयेत्  १४
प्रभूतहविषं दद्यात् धूपदीपं तु धारयेत्
बिम्बं प्रति विशेषेण स्नापयेत्स्नपनं सुधीः  १५
घटस्नानमिदं प्रोक्तं ध्वजावरोहणं तथा  १६
इति चिन्त्यशास्त्रे घटस्नानविधि पटलः

मण्टपपूजै

अतः परं प्रवक्ष्यामि यागस्य मण्टपार्चनम्
गोमया लेपनं कृत्वा पुण्याहं वाचयेत्ततः  १
शालिभिस्थण्डिलं क्षिप्त्वा पूर्वाद्य षष्टिशं क्रमात्

भूतशिव देवदारु रसाश्नि नियुगादिषु २
इति कुम्भेष्वपिन्यस्य क्रमात् देवान् श्रुणुर्बुः
महाकालश्च शान्तिश्च नन्दिं चेन्द्रारविस्तथा ३
अग्निश्च विघ्नराजश्च विद्याश्च भृङ्गिभृङ्गिणे तथा
यमविष्णुं निर्ऋतिर्वास्तु ब्रह्मा नन्दि गुहस्तथा ४
निवृत्तिस्कन्दकालश्च वारुणश्च विनायकः
वाग्देव्यै प्रतिष्ठा च चण्डेशं सोम एव च ५
ब्रह्मश्चैशगुरुश्चैव अष्टाविंशति संख्यया
इति देवान् क्रमात्कुम्भे पूजानां क्रमशो द्विजः ६
इन्द्रपावकयोर्मध्ये सूर्य कुम्भेषु पूजयेत्
उत्थाय बहि निर्गत्वा पाद प्रक्षालनं बुधः ७
सकलीकरणं कृत्वा प्रणवार्घ्यं तु साधयेत्
मण्डपे पूर्वदिग्द्वार क्रमात्तोरणदेवयोः ८
शान्तिं च तोरणे भद्रो भूतिश्चे विजयस्तथा
बलश्च तोरणै वर्णा आरोग्ये नीललोहितः ९
तोरण --- मित्यौ तु अर्चयेत्स्व स्व नामतः
पुरद्वारे तु पूर्वादीन् शान्तिविद्या निवृत्ति च १०
प्रतिष्ठादि कलाद्वारान् द्वारकुम्भे समर्चयेत्
पुनश्च पूर्वदिग्द्वारे द्वौकुम्भे नन्दिकालकौ ११
गङ्गा च यमुना शक्तिरर्चयेत्तु क्रमादिद्वजः
दक्षिणद्वार कुम्भौ द्वौ भृङ्गिणेय विनायकौ १२
शक्तौ पाकार्तिका चैव निर्मदा च यथाक्रमम्
द्वौ कुम्भे पश्चिमद्वारे वृषभं स्कन्दमेव च १३
सरस्वती चैव दाप्यश्च तत्र देवौ द्विशक्तयः
सौम्यद्वारे तु वारुण्ये कुम्भे देवी समर्चयेत् १४
द्वारस्यं पूर्वदिक्कुम्भे चण्डेशं पौष्णियं तथा

पुनश्च वारुणे द्वारे नितवद्द्वारमर्चयेत्  १५
द्वारोर्ध्वोदुम्बरे सव्ये विघ्नराजं समर्चयेत्
सरस्वती वामपार्श्वे तु तन्मध्ये लक्ष्मि विन्यसेत्  १६
वृषभ स्कन्द पार्श्वे तु द्वौ कुम्भे नन्दिकालकौ
तद्वैम देवता शक्ति गङ्गाया यमुना तथा  १७
अस्त्रेण ताडयेद्धण्डां अन्यद्वाराणि घट्टयन्
तस्य द्वारस्य पार्श्वे तु अस्त्राततस्या संप्रपूजयेत्  १८
प्रवेशान्नैरृते कुम्भे वास्तुब्रह्माणमर्चयेत्
धरैस्तृणैश्च बन्धैश्च वंशे रंशेस्तथैव च  १९
पृथिव्यादीनि तत्त्वानि अर्चयेत्क्रमशो बुधः
वासुकीं दर्भमालायां तरङ्गे जाह्नवी तथा  २०
विधाते चन्द्रमभ्यर्च्य अध्व दिक्पालवाहनैः
वेदिकादक्षभागे तु स्वाधीनां चोत्तरासनम्  २१
शिवोहं भावयेत्सव्यं हस्त चन्दन लेपयेत्
शिवहस्तं तु सम्भाव्य ज्ञानखड्गं करा गुरुः  २२
षट्त्रिंशत् दर्भ संयुक्तं ग्रन्थिवेणि करायुतम्
तालमात्र समायामं ज्ञानखड्गमिति स्मृतम्  २३
दक्षिणे कटिबन्धौ च विन्यसेत्सुदृढं कुरु
पुण्याहं पञ्चगव्यौ च प्रोक्षयेत्तस्य मण्डपे  २४
लाज चन्दन सिद्धार्थ भस्म दूर्वाक्षतान्क्रमात्
प्रदक्षिण क्रमेणैव विकीर्यास्त्रेण बुद्धिमान्  २५
भूमिभूम्ना समभ्यर्च्य निरीक्षणं हृदयान तु
प्रोक्षणमीशमन्त्रेण हुंफडन्तेन ताडयेत्  २६
अभ्युक्षं कुट्टनं चैव मार्जनं लेपनं तथा
अस्त्राय वर्म नेत्रेण मन्त्रै स्नानं शुचिर्भवेत्  २७
शालिभिः स्थण्डिलं क्षिप्त्वा ईशकुण्डस्य पश्चिमे

तन्मध्ये पद्ममालिख्य दर्भैः पुष्पैः परिस्तरेत् २८
तस्योर्ध्वे स्थापयेत्कुम्भं वृषारूढस्य विग्रहम्
चतुर्भुजं त्रिणेत्रं च कृष्ण पिङ्गोर्ध्व केशकम् २९
वरदाब्जकरं देवी पाशखड्गकरान्वितम्
ध्यात्वा पाशुपतं देवं वागीश स्थाप्य चर्धनम् ३०
रक्तवर्णात् ज्वलत्केशान् खड्गखेटकधारिणम्
सिह्मरूढं महाधैर्या ध्यायेदस्त्रेश्वरीं तथा ३१
ओं ह्रीं पाशुपदास्त्राय नमः
पाशुपदास्त्रमन्त्रेति शक्तौ स्त्रीलिङ्गयोजयेत् ३२
पश्चिमानेन यौ देवौ गन्धपुष्पादिनार्चयेत्
मण्डपस्य घटेभ्यर्च्य इन्द्रादीन् लोकपालकान् ३३
ततो विष्णहरीञ्चश्च आयुधोक्तं क्रमाद्बुधः
आदाय वर्धनीं पश्चात् घटमन्येन वाहयन् ३४
मूलमन्त्रेण सञ्जप्त्वा अवच्छिन्न पयाधरान्
इन्द्रादीशानपर्यन्तं स्थापयेत्सुदृषं कुरु ३५
स्व स्थाने पूर्ववत् स्थाप्य नैवेद्यं धूपदीपयुत्
ज्ञानखड्गं समभ्यर्च्य तस्य कुम्भस्य साङ्गके
मारुतेस्य घटात्सव्ये विघ्नेशं पूजयेद्विजः ३६
ईशान दक्षदिक्कुम्भे गुरुसंपूज्यते बुधः
वेदिकादी चतुर्दिक्षु विन्यसेदष्टमङ्गुलम् ३७
दर्पणं पूर्णकुम्भं च वृषभं युग्मचामरम्
श्रीवत्सं स्वस्तिकं शङ्खं दीपो देवाष्टमङ्गलम् ३८
यथा तन्त्रोक्त देवानां तथा तन्त्रोक्तवद्भवेत्
मण्डपस्यार्चनं प्रोक्तं कलशस्थापनं शृणु ३९
इति चिन्त्यशास्त्रे मण्टपार्चनविधिपटलः

## शिवयागम्

अतः परं प्रवक्ष्यामि शिवयागविधिक्रमम्
सर्व देवस्य यागार्थं सर्व शत्रु विनाशनम् १
इन्द्रादीनां घटार्धोमात् सुप्रीतार्थस्य कारणम्
सर्वलोक प्रियार्थस्य शिवयागं समारभेत् २
वेदिकोर्ध्वे महादेवीं निरीक्ष्य हृदयेन तु
वर्मनेत्रौ तु मन्त्रस्य मार्जनं लेपनं कुरु ३
पुण्याहं पञ्चगव्यैश्च प्रोक्षयेद्धृदयेन तु
शालिभिः स्थण्डिलं क्षिप्य अष्टद्रोणं तदर्धकम् ४
तन्मध्ये पद्ममालिख्य तिलैर्लाजैश्च शोभितम्
दर्भैः पुष्पैः परिस्तीर्य प्रोक्षयेदम्भसां ततः ५
तस्य मध्ये न्यसेत्कुम्भं शिवमन्त्रमनुस्मरन्
वर्धनीं विन्यसेद्वामे परितोष्ट घटन्यसेत् ६
आपोवायेति मन्त्रेण वारिकुम्भेषु पूरयेत्
प्रत्येकं वेष्टयेद्वस्त्रं हृदयेन तु मन्त्रतः ७
तस्यमध्ये न्यसेत्कूर्चं आम्रपत्रं शिखा यजेत्
नालिकेरं तु संस्थाप्य शिरोमन्त्रेण देशिकः ८
स्वर्ण रत्नौ तु संक्षिप्त्वा स्व स्व बीजेन बुद्धिमान्
शिव कुम्भस्य मध्ये तु ध्यायेद्रूपं सदाशिवम् ९
सदाशिवे शिवं भाव्य तस्मान्मन्त्रं शिवस्य तु
सदाशिवं यथा पूज्य वर्धनीं तु मनोन्मनीम् १०
अष्टविद्येश्वरात् श्रेष्ठं यागार्भा लोकपालकान्
तस्मादिन्द्रादि दिक्पालान् परितोष्ट घटान्यसेत् ११
मन्त्रन्यासादिकं कृत्वा विधिवत् अर्चयेत्सुधीः
ऐशान्ये वेदिकोर्ध्वे तु अस्त्रराजं तु विन्यसेत् १२
वज्रादिशूलपर्यन्तं पूर्वाद्यैशानमन्त्रकम्

विन्यसेत्तु क्रमेणैव अर्चयेत्तु यथा विधि १३
अस्त्रयागमिदं प्रोक्तं पश्चाद्धोमं समाचरेत्
अग्नि कार्यादिकं सर्वमग्निकार्योक्तमार्गतम् १४
तस्य तन्त्रे यजेद्देवान् स्थापयेद्वह्नि मध्यमे
अर्चयित्वा यथा न्याय्यं पूर्ववत् ध्याययेत्सुधीः १५
अश्वत्थो दुम्बरप्लक्षं वटपूर्वादिदिक्षु वै
शमीखादिर बिल्वर्क आग्नेर्यादि विदिक्षु च १६
प्रधानस्य पलाशं च द्रव्यान्ते व्याहृतिं हुनेत्
शिवस्य मूलमन्त्रेण हुनेदष्टादशं सुधीः १७
समिदाज्य चरुं लाजान् सर्षपं च तिलान्यवान्
वेणुमुद्गं च शालिं च माषस्येकादशं क्रमात् १८
सद्यादि चास्त्रपर्यन्तं मन्त्रमेकादशाद्धुनेत्
शिवगायत्रिमन्त्रेण कदली फनसं हुनेत् १९
तस्य मन्त्रगुलं चैव बिल्वपत्रं हुनेत्ततः
मन्त्रं
तन्महेशायविद्महे वाग्विचित्ताय धीमहि तन्नो शिवः प्रचोदयात् २०
शिवगायत्रिदं प्रोक्तं द्रव्यान्ते व्याहृतिं हुनेत्
घृतं मूलेन संहुत्वास्सर्वमूले मनोन्मनीम् २१
इन्द्रादि लोकपालानां स्व स्व नाम्नेसुहोमहेत्
शतमर्धं तदर्धं वा प्रत्येकं जुहुयात्क्रमात् २२
शिवे दशाहुतिस्संख्या अन्येष्वेकाहुतिं हुनेत्
स्विष्टमग्नेतिमन्त्रेण जुहुयात्तदनन्तरम् २३
जयादिरभ्यधानं च राष्ट्रभृच्चक्रमाधुनेत्
यागकुम्भं समभ्यर्च्य नैवेद्यं धूपदीपकम् २४
दत्वा च अस्त्रराजस्य विधिवत्पूजयेत्सुधीः
सायं प्रातर्द्विसज्यौ तु तीर्थान्तं श्रावयेद्बुधः २५

शिवयागमिदं प्रोक्तं बलियानमथ शृणु
इति चिन्त्ये प्रतिष्ठातन्त्रे शिवयागविधि पटलः

अतः परं प्रवक्ष्यामि शिवयागविधिक्रमम्
सर्वदेवस्य यागार्थं सर्व शत्रुविनाशनम् १
इन्द्रादीशाना घटार्धोमान् सुप्रीतार्थस्य कारणम्
सर्वलोकप्रियार्थ स्यात् शिव खट्वाङ्गं समाचरेत् २
वेदिकोर्ध्वे तु विप्रेन्द्र निरीक्षणं हृदयेन तु
वर्मनेत्रेति मन्त्रेण मार्जनं लेपनं तथा ३
पुण्याह पञ्चगव्यौ च प्रोक्षयेद्धृदयेन तु
शालिभि स्थण्डिलं कृत्वा अष्टद्रोणं तदर्धकम् ४
तन्मध्ये पद्ममालिख्य तिलैर्लाजैश्च शोभितम्
दर्भैः पुष्पैः परिस्तीर्य मोक्षयेदर्भसास्तथा ५
तस्य मध्ये न्यसेत्कुम्भं शिवमन्त्रमनुस्मरन्
वर्धनीं विन्यसेद्वामौ पद्माष्ट घटान्यसेत् ६
आपो वा इति मन्त्रेण वा कुम्भं प्रपूरयेत्
प्रत्येकं वेष्टयेद्वस्त्रं हृदयेन तु मन्त्रतः ७
तस्य मध्ये न्यसेत्कूर्चं आम्रपत्रं शिखां यजेत्
नालिकेरं तु संस्थाप्य शिरोमन्त्रेण देशिकः ८
सुवर्ण रक्तौ तु संक्षिप्त्वा स्व स्व बीजेन बुद्धिमान्
शिवकुम्भस्य मध्ये तु ध्यायेद्रूपं सदाशिवम् ९
शिवं सदाशिवे भाव्य तस्मान्मत्रं शिवस्य तु
सदाशिवमयं पूज्य वर्धन्यां तु मनोन्मनीम् १०
अष्टविद्येश्वरान् श्रेष्ठान् यागार्थान् लोकपालकान्
तस्मादिन्द्रादि दिग्बालान् परिताष्ट घटे न्यसेत् ११
गन्धपुष्पादिनाभ्यर्च्य ऐशान्ये वेदिकोपरि

यज्ञादिशूलपर्यन्तमिन्द्रादीशानमन्त्रकम्  १२
गन्धपुष्पादिनाभ्यर्च्य पश्चामं समाचरेत्
अग्न्याधानादिकं सर्वमग्नि कार्योक्तमार्गतः  १३
अश्वत्थोदुम्बर प्लक्ष वटपूर्वादि दिक्षु वै
शमी खादिरबिल्वार्कं आग्नेयादि विदिक्षु च  १४
प्रधानस्य पलाशस्य द्रव्यान्ते व्याहृतीं हुनेत्
शिवस्य मूलमन्त्रेण हुनेदष्टाशतं सुधीः  १५
समिदाज्य चरुं लाजान् सर्षपं च यवं तिलान्
वेणुमुद्गान्न शालिं च माषस्येकादशं क्रमात्  १६
सद्यादि अस्त्रपर्यन्त मन्त्रमेकादशं हुनेत्
शिव गायत्रि मन्त्रेण कदली फनसं हुनेत्  १७
तस्य मन्त्रे गुलं चैव बिल्व पत्रं हुनेत्ततः
तन्महेशाय विद्महे वाग्विशुद्धाय धीमहि तन्नो शिवः प्रचोदयात् १८
शिव गायत्रिमिदं प्रोक्त द्रव्यान्ते व्याहृतिं हुनेत्
घृत स्थूलेन संहुत्वा मूले चैव मनोन्मनीम्  १९
इन्द्रादि लोकपालानां स्व स्व नाम्नेति होमयेत्
शतमर्धं तदर्धं वा प्रत्येकं जुहुयात्क्रमात्  २०
शिवे दशाहुतिं श संख्यान् अन्येष्वेकाहुतिं हुनेत्
स्विष्टमग्नेति मन्त्रेति जुहुयात्तदनन्तरम्  २१
जयादिरभ्याधानं च राष्ट्रभृच्चरुमाधुनेत्
होमान्ते यागमूर्तिस्या नैवेद्यं धूपदीपकम्  २२
दत्वा च अस्त्रराजस्य विधिवत्पूजयेद्बुधः
सायं प्रात द्विसन्ध्यौ तु तीर्थान्तं श्रावयेत्सुधीः  २३
शिवयागमिति प्रोक्तं बलिदानमथ शृणु

इति चिन्त्यशास्त्रे शिवयागकलशस्थापनविधिपटलः

## महोत्सवयागम्

अतः परं प्रवक्ष्यामि यागदानविधिक्रमम्
यक्ष राक्षस पैशाचादीन् ह्योदिन्दु दुष्टनिग्रहम्  १
गणदेव ऋषित्यादीन् शिष्टानां परिपालनम्
दिशिजार्थं तु तुल्यर्थं वा यागत् ग्रामप्रदक्षिणम्  २
उत्सवारम्भकाले तु आलयादी राथमान्तकम्
यन्त्र वाहन भेदानां कृत्वा लक्षण संयुतम्  ३
बलिधानस्य पूर्वं तु विधिशोध्यर्थ कारणम्
चण्डेशं वाथ भक्तौ वा यानं ग्रामप्रदक्षिणम्  ४
नाना वाद्यसमायुक्त छत्र चामर संयुतम्
नानाभक्तजनैर्युक्तं विधि निम्नोन्नतं स्व च  ५
वालुकास्तरणं कुर्यात् मार्जनं प्रोक्षणं तथा
तत्पुरस्य प्रपां कृत्वा सर्वेषां च मनोहरम्  ६
नाना विधान संयुक्तं चित्रवस्त्रैरलङ्कृतम्
सुवर्णदामै रत्नदामैः पुष्पदामैरलङ्कृतम्  ७
भवमे प्रति विशेषेण द्वारकुम्भ समन्वितम्
कदली क्रमुकैर्व्युक्तं तोरणैर्विविधैर्ध्वजैः  ८
स्वर्णादिदामैर्द्दीपैश्च भवनं शोभितं क्रमात्
बल्यन्तं तु महाधानात् उत्सवं वा विचक्षणः  ९
उमास्कन्दसखं देवं शिवयागव्रतं चरेत्
शक्तिं चैर्विरक्तिस्यात् चरेत्प्रत्योत्सवाम्बिकम्  १०
इति शक्तिशिवं चैव महायान द्विसन्धिषु
सुब्रह्मण्यं तदग्रे तु तदग्रे गणनायकः  ११
तदग्रे चैव विप्रेन्द्र महावाद्यस्य घोषकान्
धानात्प्रधान रुद्रस्य वृषदेवोत्सवाम्बिकाम्  १२
तदन्तेषु च सर्वेषां पश्चात् चण्डेश्वरं गतः

यन्त्र वाहन मूर्तीनां भावयेत्तु दिनैः क्रमात् १३
गणेशस्य तपात्पूर्वे उपचारादि सर्वषु
सुब्रह्मरयस्यात्प्रथमं यानं भावयेदाहुवाहने १४
द्वितीयेह्नि गणेश स्यात् कनिष्ठप्रीति कारणम्
तस्य मूर्ति महायानं भावयेद्भिश्च वाहने १५
तृतीये दिवसे याने दिग्विजे भूतवाहने
त्रिपुरान्तक भावस्यात् गणेभूतान् प्रियस्सदा १६
चतुर्थे हनि कारुराय त्रिपुरघ्नादिनात्पुरम्
तस्य मूर्ति वृषे यानात् लोकानां प्रीति सिद्धये १७
पञ्चाहे पूर्वसन्ध्ये तु शक्तिवैकल्यकारणम्
लोकानामभिवृद्ध्यर्थं पुराकाले कलीलये १८
यागाद्दिशिजये काले गौरीतप्य मनोहरे
लोकानां शुद्धिकाम्यर्थं वैकल्याद्ग्रहितो यथा १९
वैकल्यं तु विनापश्चात् सुप्रीता भुवनेश्वरी
इत्यवल्लीलया गौरी सुप्रीतार्थं समाचरेत् २०
तद्दिने परसन्ध्ये तु या दिनेनं भव्यकारणम्
शृन्वण् ब्रह्मपुरे विप्र पुत्रस्य विद्येश्वरीं भवान् २१
उमाम्बुज संस्तानो क्षीरं दद्यात् आरटविद्ययोः
सम्भवं तु शिव प्रीतात् ध्मंसमाब्रह्मतात्मयोः २२
इत्यवद्भावयेद्याने क्षमणान्तक विग्रहम्
यागार्थं तु दिने षष्ठे इन्द्रादीनां तु सुप्रिये २३
अद्रिचापधरं देवीं भावयेद्गजवाहनम्
अन्येषु शिलयां पुरायैः पुरायस्थानेषु संभवेत् २४
तस्य दादचरेत्सर्व भावयेदुत्सवे सुधीः
उत्सवाङ्गस्य देवानां उत्सवान्ते दिनं प्रति २५
नालिकेर रसं चैव इक्षुखराड फलादिषु

नैवेद्यं धूपदीपं च ताम्बूलं तु निवेदयेत्  २६
नृत्तगेय समायुक्तं स्तोत्रमङ्गलवाचकैः
पञ्चगव्यादि संस्थाप्य तीर्थ कुम्भाभिषेचयेत्  २७
नैवेद्यं धूपदीपादीन् पूजयेत्तु विशेषतः
देशिकः पूजकश्चैव स्थापकोलं कृतस्तथा  २८
स्थापकश्चैव पञ्चैते विधिवत्पूजयेद्बुधः
सप्तमे च दिने चैव नटेशोत्सवमारभेत्  २९
इति चिन्त्यशास्त्रे महोत्सवविधि पटलः

## मराटपलक्षणम्

अतः परं प्रवक्ष्यामि मराडपस्य विधिक्रमम्
मराडपमीशदेशे वा वह्नेर्वायु चतुर्दिशम्  १
नवाष्टसप्तर्ष्य पञ्चहस्तं वा चतुरश्रकम्
नन्दनन्दपदं लिख्य मध्ये वेदिपदं नवम्  २
हस्तमुष्टिं च रत्निं च पतिकोत्सेधयोस्त्रिधा
त्रीणिमध्यपदैः कुराडं नव पञ्च शिवाय च  ३
दिक्षुकुराडं चतुष्कोणं विदिक्षु वृत्तकुराडकम्
ईशान चक्रयोर्मध्ये वृत्तकुराडं प्रधानकम्  ४
तिश्य कुराडात्प्रधानेन अग्रमेकं प्रधानकम्
हस्तं वा मुष्टिमात्रं वा तां मुचन्नवाङ्गुलम्  ५
चतुस्त्रि द्वयङ्गुलं चैव ऊर्ध्वादीमेखल त्रयम्
कुराडस्य यादृशिं मत्तु पङ्क्तन्दृशमेखलाकृतिः  ६
मेखलोर्ध्वे तु व्योमाश्र योनिं कृत्वा विचक्षणः
अश्वत्थपत्रवद्योनिं तस्य मेखलदृस्पृशम्  ७
होतग्रं तु यमे चान्तौ ऐन्द्रे चोत्तराननम्
नैर्ऋते वारुणे वायौ सौम्ये पूर्वाननं भवेत्  ८

मण्डपे तु चतुर्द्वारि चतुस्तोरणभूषणम्
उत्सेधास्तं तु विस्तारं फलकात्परिन्यसेत् ९
मात्राङ्गुलप्रमाणेन शूलं तत्रैव विन्यसेत्
इन्द्रादि वाहनं लिख्य ध्वजमष्टादिशि न्यसेत् १०
दर्भमालावृतं न्यस्त्वा चित्रवस्त्रैश्च शोभितम्
स्वर्णै रत्नैर्विधानैश्च पुष्पमाल्यैरलङ्कृतम् ११
ताम्बूलं क्रमुकादीषु फलैः पत्रैश्च शोभितम्
गोमया लेपनं कृत्वा शुद्धिं कृत्वा विचक्षणः १२
मण्डपं लक्षणं प्रोक्तं अथ वास्तुबलिं शृणु
इति चिन्त्यशास्त्रे मण्टपलक्षणविधिपटलः

## वास्तुबलि

अतः परं प्रवक्ष्यामि वास्तुदेवान् बलिक्रमम्
वास्त्वाधि स्थान शुध्यर्थं मण्डूकपदमुत्तमम् १
शालिभिस्थण्डिलं कृत्वा द्रोणयुग्मं तर्धमे
मण्डूकाख्य पदं लिख्य तिग्व्यामैश्चतुशोभितम् २
कोष्ठभूतं न्यसेदर्भे त्रयं तस्य प्रमाणकः
प्रमाणं चैव कोष्ठानां प्रत्येकं चतुरङ्गुलात् ३
अष्टादष्टपदं लिख्य कोणे रेखद्वयां लिखेत्
मध्ये चतुष्पदं ब्रह्मं तर्मुखानां गुणांशके ४
सूर्यो विवस्वतश्चैव मित्रश्च भूतराय च
तद्बाह्यार्थि पदेशा स्यात् कोणेष्वैशानमन्त्रकम् ५
आपश्च आपवश्चा च सविता च सविन्द्राय च
इन्द्रो इन्द्रजयश्चैव रुद्रो रुद्रजयस्तथा ६
अर्धमेकं च वेदोश्ममेकार्धं पदैः क्रमात्
ईशानश्चैव पर्जन्यो जयन्तश्च महेन्द्रकः ७

आदित्य सत्यभृङ्गाश्च अन्तरिक्षाश्च पूर्वकाः
अग्निः पूषा च वितध ग्रहाक्षा यशसाय च  ८
गन्धर्वो भृङ्गराजश्च ह्यमृगश्चेति दक्षिणे
निर्ऋतं च दौवारिकश्चैव सुग्रीवो पुष्पदन्तकः  ९
वरुणासुरशोषश्च रागश्च इति पश्चिमे
वाग्रर्नागश्च मुख्या च भल्लाटस्सोम एव च  १०
ऋगश्चातिथिश्चैव मित्रश्च इति सौम्यके
चरक्यैश्च विधार्यैश्च पूतनार्यैस्तथैव च  ११
पापराक्षस्यै राशान्यत् अस्त्र कोणेन पूजयेत्
स्कन्दा च अर्यमाणा च जृम्भा च बलिपिच्छके  १२
इति पूर्वा च दिक्षुश्च वृत्तरेखाबलिं क्षिपेत्
सान्ताश्चैव स्वरं विन्द्रं स्व स्व नाम तदन्तरम्  १३
ओंकारादि नमोन्तं च सर्वेषान्ते बलिमाचरेत्
ताम्बूलं दापयेत्पश्चात् धूपदीप समायुतम्  १४
सूर्यान् आपान् समीशानान् चरक्यान् क्रमादिषु
ब्रह्मपञ्चावृत्तदेवान् अर्चयेत्तु यथाक्रमम्  १५
वास्तुकुम्भं तथैशान्ये स्थापयेत्तु यथाविधि
वास्तुब्रह्मादिदेवानां कुम्भमध्ये समर्चयेत्  १६
पूर्वोक्त विधिना चैव स्थापयेत्पञ्चगव्यकम्
बलिमण्डलपूर्वे तु वास्तुहोमं समाचरेत्  १७
अग्निकार्यादिकं सर्वमग्निकार्योक्त मार्गतः
वास्तु ब्रह्मादिदेवानां अग्निमध्ये तु स्थापयेत्  १८
समिधाज्य चरुं लाजान् सर्षपं च यवं तिलान्
स्व स्व नाम्ने हुनेत्सर्वं त्रयः पञ्चाशयोः क्रमात्  १९
जयादिरभ्यादानं च राष्ट्रभृत् पूर्णमाचरेत्
कुम्भमध्ये समभ्यर्च्य नैवेद्यं धूपदीपकम्  २०

पलाशदर्भकृते चौले तदग्रे दंष्ट्र संस्पृशेत्
प्रदक्षिण क्रमा भ्रामं प्रोक्षयेत्कुम्भ तोयकैः २१
पञ्चगव्येन संप्रोक्ष्य विसृज्य स्नानमाचरेत्
इति वास्तुबलिं प्रोक्तं मण्डपस्यार्चनं शृणु २२
इति चिन्त्यशास्त्रे वास्तुविधि पटलः

उत्सवप्रकरणम्

अतः परं प्रवक्ष्यामि उत्सवस्य विधिक्रमम्
दक्षाध्वर विनाशार्थं शिवयागं प्रकल्पयेत् १
इन्द्रादीनान्तयोहिश्च यागार्थं तु महोत्सवम्
शिवयागं महायज्ञ दिग्विजार्थं प्रदक्षिणम् २
दिग्विजार्थस्य काम्यं तु पुराकाले कलीलये
दक्षयज्ञे भवानीन्तां निदान्ताच्छिवनेत्रकम् ३
वीरभद्रोद्भवं तस्माद्ध्वंसं दक्षप्रजापतिम्
इन्द्रादि यज्ञरूपाश्च प्रक्षरूपाश्च संस्थिताः ४
सञ्चरेद्यक्षदैत्यादीन् वीरभद्रप्रसादनात्
महाराक्षससंक्रान्तं चरेरब्दं शतायुधम् ५
पश्चात्तपोधनैर्देवैरिन्द्राद्यैश्च तपोबलात्
दैत्यादीनां विनाशार्थं यक्षदीनां विसर्जनम् ६
सर्वेदेवस्य यागार्थं सर्वलोकस्तितीरकम्
यागार्थाविजयं कृत्वा तत द्वर्लोकवर्धनम् ७
नृपराष्ट्रादि रक्षार्थमुत्सवं तु समाचरेत्
उत्सवारम्भादितं वेद सकारं यागसृष्टिदम् ८
बलिं दोर्दक्षिणार्थं तु उत्सव कथितोमयम्
आर्द्रक्षे बेर नक्षत्रे ग्रामगे मासत्र्यृक्षके ९
नृपकर्तुश्च जन्मर्क्षे तस्यौ श्रद्धा च तारके

मृत्युक्षे पुत्रजातौक्षे राष्ट्रसंगृह्य युद्धगे १०
अन्त्येः पुण्यदिने चैव महातीर्थं शिवस्य तु
प्रतिष्ठा ऋक्षमारभ्य द्रक्षं चोत्सवान्तयुत् ११
तद्रक्षं तु महतीर्थं प्रत्यब्दे तु समाचरेत्
अयने विषुवे चैवामावास्यौ ग्रहणद्वये १२
माघमासे तिथौ षष्ठी ज्येष्टकृष्णाष्टमी तथा
अन्त्येः पुण्यतिथौ वारे तीर्थं वा दुत्सवादिके १३
एकमासे द्विनक्षत्रे संप्राप्ते तु परस्परम्
नेष्टं प्रथम ऋक्षं तु अन्त्यर्क्षे तीर्थमाचरेत् १४
आरम्भं त्रिविधं प्रोक्तं मुत्तमादित्रयं तथा
ध्वजमारोपणं पूर्वं पश्चाद्भेरी तु ताडनम् १५
ततोङ्कुरार्पणं चैव आरम्भमुत्तमं भवेत्
पूर्वभेरीं तु सन्ताड्य ध्वजारोपं तदन्तरम् १६
तदन्ते चाङ्कुरं कृत्वा आरम्भं मध्यमं भवेत्
तत्पूर्वमङ्कुरं कृत्वा पश्चाद्भेरीं तु ताडनम् १७
तदन्ते ध्वजमारोप्य आरम्भं कन्यसं तथा
उत्सवस्य दिवारात्रौ रात्रौ धिवा समाचरेत् १८
उत्सवं षड्विधं प्रोक्तं घोरादि पैतृकान्तकम्
एकाहं घोरमित्युक्तं त्रियाहं विकमं तथा १९
पञ्चाहं धीवरं प्रोक्तं सप्ताहं श्रीकरं स्मृतम्
नवाहं स्त्रपमित्युक्तं द्वादशाहं तु पैतृकम् २०
विजयं पुष्कलं चैव द्विविधं मुत्सवं बुधः
शिववेदगजादित्य कलाद्वाविंशति क्रमात् २१
बलिसंख्येति विजयं घोरादि पैतृकान्तकम्
अश्विनी च रसं नाडी मनुं चैव कृतिस्तथा २२
चतुर्विंशेति घोरादि बलिसंख्येति पुष्कलम्

विजयं पुष्कलस्वेति घोराहस्योत्सवं शृणु २३
पुरतस्याङ्कुरं कृत्वा भेरीताड्यं च कौतुकम्
यागाद्यर्चनं ह्येवं पूर्वरात्रौ समाचरेत् २४
बलिदानोत्सवं चूर्णं तीथं प्राते समाचरेत्
घटघ्नानं ततो विद्वान् रात्रो मौनबलि भ्रमम् २५
बलिमेकेति विजयं पुष्कलं शृणु चाम्बिके
विजयोक्त क्रियास्सर्वे पूर्वरात्रौ विशेषतः २६
पूर्वसन्ध्याबलिं दत्वा तत्सन्ध्योत्सवमाचरेत्
बलिदानद्वयं चैव घोराहोत्सवमुच्यते २७
एवमेव क्रमाश्रित्य विक्रमे धीवरे सुधीः
बलिसंख्याः क्रमेणैव तीर्थान्तं श्रावयेत्सुधीः २८
श्रीकरस्तपपैत्रेति तिस्त्रस्यैवोत्सवं शृणु
ध्वजाङ्कुरार्पणं पूर्वं पश्चात्केत्वाधिवासनम् २९
तृतीयध्वजमारोप्यं चतुर्थं भेरिताडनम्
उत्सवस्याङ्कुरं पश्चात् षष्ठे कौतुकबन्धनम् ३०
सप्तमो यागशालां च ततो वास्तुबलिक्रमम्
नवमं मण्डपं पूज्य दशमं यागपूजितम् ३१
एकादशं तु बल्यर्थ द्वादशं यानमेव च
नटेशयानकं पश्चादश्वादिरोहणं तथा ३२
पश्चाद्दशेरधारोपं षोडशे कौतुतीर्थकम्
सप्तादशे तु पूर्णं स्यात् तीर्थमष्टादशं स्मृतम् ३३
नवोदशं घटस्नानं पश्चाध्वजारोहणम्
ततो मौनबलिं चैव एतैरेकोक्त विंशतिः ३४
उत्सवस्य क्रिये तेषां क्रमेण शृणु चाम्बिके
उत्सवस्सूचकं ह्येवं श्रुत्वार्के त्वाङ्कुरार्पणम् ३५

इति चिन्त्ये प्रतिष्ठातन्त्रे उत्सवप्रकरण पटलः

## ध्वजाङ्कुरम्

अतः परं प्रवक्ष्यामि मङ्गलाना ध्वजाङ्कुरम्
स्थापने प्रोक्षणे चैव उत्सवे तीर्थकारणे १
अन्येषां मङ्गले कार्ये अङ्कुरार्पणपूर्वकम्
अङ्कुरं न च कर्तव्यं तत्कर्म निष्फलं भवेत् २
निर्दिष्ट दिवसां पूर्वे नवाहे सप्तहेपि च
पञ्चाहे त्रिदिने चैव तद्दिने चाङ्कुरार्पणम् ३
बीजानामधिपस्सोम तस्यात्तु निशिनिर्वपेत्
देशिकं शिष्य संयुक्तं विधिवत् स्नानमाचरेत् ४
धारयेच्छुद्ध वस्त्रे च सोष्णीषं चोत्तरीयकम्
देहशुद्धिं तु विधिवत् भस्म स्नानादिकं भवेत् ५
आचार्यं लक्षणैर्युक्तं पञ्चाङ्गयुत भूषणम्
अङ्गन्यासादिकं कृत्वा सकलीकरणं कुरु ६
अज्ञाननुज्ञायात्तन्नालिकेरं तु सङ्ग्रहेत्
गणेशं पूजयेत्पश्चात् नालिकेरं निवेदयेत् ७
स्कन्दाग्रज गणाधीश देव्या वल्लभया सह
शिवयाग प्रवृत्तोयं निर्विघ्नत्वं प्रसीद मे ८
इति विज्ञापयेत्पश्चात् पूजयेत्परमेश्वरम्
देवदेव जगन्नाथ जगदानन्द कारण ९
त्वामुद्दिश्य तन्त्राणि तत्प्रसादान्महेश्वरः
विज्ञापनमिदं कृत्वा नुज्ञपूजावसानके १०
मृदग्रहार्थस्य यानं तु चण्डेशं वाथ शूलकम्
स्थलिका परशुं चैव हविषं नव वस्त्रकम् ११
शङ्ख ध्वनि समायुक्तं वाद्यघोष समन्वितम्
छत्र चामरं संयुक्तं महादीपा व्रतान्वितम् १२

नानाध्वज समायुक्तं नाना भक्तजनैर्युतम्
वास्तुप्रदक्षिणं कृत्वा अन्येषां नः प्रदक्षिणम् १३
नदीतीरे तटाकेन केदारे दर्भमूलके
क्षेत्र पुष्पवने चैव वल्मीकस्थान बाह्यके १४
गोवासे पर्वते चैव शुद्धदेशे प्रवेशयेत्
पश्चिमे दल्लिकोध्वे तु अस्त्रराजं तु विन्यसेत् १५
पुष्पे विघ्नेशं पूज्य नालिकेरं निवेदयेत्
अस्त्रराजं समभ्यर्च्य पुण्याहं वाचयेत्ततः १६
पञ्चगव्यं तु विधिवत् स्थापयेद्देशिकोत्तमः
अस्त्राग्रे स्थण्डिलं कृत्वा नवकोष्टं तु लेखयेत् १७
हृदयेन तु संप्रोक्ष्य मध्ये ब्रह्माणमर्चयेत्
अनन्ता विनन्ता भद्रा जयन्ता भ्रमरी भ्रमः १८
प्रस्थिता परिजृम्भी च इन्द्राद्यैरानमन्तकम्
चतुर्थिरूप स्वन्ताम्ने ओङ्कारादि नमोन्तयुत् १९
अर्चयित्वा यथा न्याय्यं स्वाहान्ते बलिमाचरेत्
ताम्बूलं दापयेत्पश्चात् धूपदीप समन्वितम् २०
बलिमण्डलपूर्वे तु प्रोक्षयेत्पञ्चगव्यकैः
भूमिर्भूम्नेति संपूज्य गन्धाद्यै हृदयेन तु २१
परशुं चैव सम्प्रोक्ष्य वस्त्र कूर्चं तु धारयेत्
स्नानयेदस्त्रमन्त्रेण मृदङ्गाह्ये तु वामतः २२
उत्तरानन संखाने वामदिक्पात्रपूरयेत्
त्रिः प्रकारमृदं ग्राह्य भूमिं समतलं कुरु २३
हृदयेन मृत्पूज्य वस्त्राच्छातन्तुवर्मणः
गजे वा शिबिके वापि परिचारकमूर्धनि २४
वास्तुप्रदक्षिणं कृत्वा सर्वातोद्य समायुतम्
नृत्तगेय समायुक्तं प्रविशेदालयं प्रति २५

प्रातस्याग्रके वापि ऐशान्ये चोत्तरेऽपि वा
दक्षिणे वा शुचिस्थाने गोमयानुलेपयेत्  २६
स्वर्णं वा रजतं वापि ताम्रं वा मृण्मयं तु वा
पालिका घटिका चैव शरावर्णी स्त्रिया भवेत्  २७
दीर्घमष्टादशाङ्गुल्यम्मोष्ठमेकाङ्गुलं भवेत्
मुखदण्डपदं चैव स्त्रिस्त्र भागं तु दीर्घकम्  २८
कला र स्वसौ चैव मुखविस्तारयोः क्रमात्
वसुनन्दयुगं चैव पादविस्तारमेव च  २९
पञ्चवक्त्रं घटी चैव एकवक्त्रं तु अन्ययोः
कालं भिन्नं च सुषिरं भेदं चेद्विसर्जयेत्  ३०
दर्भाग्रं वा कुशाग्रं वा निश्छिद्रं सुषिरं सुधीः
शिरीर्षाश्वत्थ बिल्वौ च दण्डमध्ये तु बन्धयेत्  ३१
श्रीकरं श्रीप्रदं चैव अङ्कुर द्विविधं बुधः
अष्टद्रोणैश्च शाली च तदर्धं तण्डुलं क्षिपेत्  ३२
विघ्नेशं पूजयेत्तत्र पुण्याहं वाचयेत्ततः
प्राक्सूत्रा नागसूत्रं स्यादुदक्सूत्रं तथैव च  ३३
मध्ये नवपदं ग्राह्य साष्टपत्रं सकर्णिकम्
त्रीणि चाभ्यन्तरे त्यक्त्वा चतुर्दिक्षु क्रमात्सुधीः  ३४
द्वारमेकपदं त्यक्त्वा चतुर्दिक्षु यथा क्रमम्
स्थापयेत्कर्णिका मध्ये चन्द्रकुम्भं नलं शिवम्  ३५
स सूत्रान् सापिधानांश्च स वस्त्रान् वारिपूरितान्
अर्चयित्वा तु विधिवत् वारुणं मन्त्रमुच्चरन्  ३६
पायसान्नं ददेत्पश्चात् ताम्बूलं तु निवेदयेत्
चतुर्द्वारस्य पार्श्वे तु स्थापयेत्पालोकावसौ  ३७
पालिका पार्श्व कोष्ठेषु शरावं विन्यसेत्सुधीः
कोणाष्टेषु घटी न्यस्त्वा हृदयेन तु मन्त्रतः  ३८

वालुकैर्गोमयैर्मृद्भिः पालिकादीनि पूरयेत्
सहस्राङ्गी चैव पुष्यानी मृषणी माघनी तथा ३९
पुष्पाणि चोत्तराणी च भृकुटी चैतृणी तथा
पालिका देवतायेति पूर्वद्वाराणिना बुधः ४०
तन्त्रिणी चैव वैशाखी शान्तनी मौलिनी तथा
शातनी चोत्तराषाढी पौरणी श्रवणी तथा ४१
इति देवं शरावेषां क्रमेण परिशोच्चयेत्
अस्त्राङ्गी पूर्वचाषाढी उषायै चाश्विनी तथा ४२
भरणी कृत्तिकानी च शङ्खिन्यान्द्रायणी तथा
घटिकादेवमेवोक्तं अग्निकोणादिना सुधी ४३
तिलसर्षपमुद्गा च माषशिम्बाढकानि च
कुलुत्थ इति सप्तैते बीज दीरे च सेचयेत् ४४
सेचयेद्धृदयेनैव प्राङ्मुखोदङ्मुखोऽथवा
सोमकुम्भस्ततो येन पालिकादीनि सेचयेत् ४५
श्रीकरमिति विख्यातं श्रीप्रदायमथ शृणु
प्राक्सूत्रं भूतसूत्रं तु उदक्सूत्रं तथैव च ४६
मध्ये चतुष्पदं ग्राह्य चाब्जपत्रं सकर्णिकम्
तन्मध्ये सोमकुम्भं तु पूर्ववत्स्थापयेद्बुधः ४७
शरावं पालिका चैव घटिका च यथा क्रमम्
क्रियाकोष्ठादिविन्यस्य द्वादशं हृदयेन तु ४८
सहस्राङ्गी भूषणी चैव पुष्पाणी भृकुटी तथा
तन्त्रिणी शान्तनी चैव शातनी हर्षणी तथा ४९
अस्त्राङ्गी च उषादेवी भद्रणी शङ्खिनी तथा
द्वादशादित्य शक्तिं च शरावादीनि देवता ५०
बीजं वा स्थापयेद्धीमान् पूर्ववद्धृदयेन तु
चन्द्रकुम्भजलं ग्राह्य शरावादीनि सेचयेत् ५१

शातान्तमपि निर्मुक्ते मूषिकादि विसर्जयेत्
सुदेशे स्थाप्य संरक्ष्य हरिद्रामुक्ष्यणं कुरु ५२
धूम्रानि च सुकुब्जानि यथा तिर्यग्गदानि च
ग्रामे रोगयुतं शान्ता दस्त्रमन्त्रं शतं हुनेत् ५३
नित्यं सन्धिद्वयं पूज्य निर्दिष्ट दिवसान्तकम्
निर्दिष्ट दिवसे कुम्भान् सोममुद्वाहयेत्सुधीः ५४
ग्राह्याङ्कुराक्षतैर्दूर्वै तन्त्रदेवान् समर्चयेत्
ध्वजाङ्कुरार्पणं प्रोक्तं पश्चात्केत्वाधिवासनम् ५५

इति चिन्त्य प्रतिष्ठातन्त्रे अङ्कुरार्पणविधि पटलः

## रक्षाबन्धनम्

अतः परं प्रवक्ष्यामि रक्षासूत्र प्रबन्धनम्
इष्टकाम्यं तु सिद्ध्यन्तं अन्यकाम्यं न विद्यते १
एकचित्ते स्मरेत्तस्माद्यथा कौतुक बन्धनम्
निर्दिष्ट दिवसात्पूर्व रात्रौ वा अधिवासनम् २
अभावे तद्दिने वापि क्रियापूर्वेऽथ वासुकी
उत्तमं मध्यमं चैव अधमं तु त्रिधा भवेत्
तन्त्रोक्त देवमग्रे तु पुण्याहं वाचयेत्ततः ३
शालिभिः स्थण्डलं कल्प्य तन्मध्ये नलिनं लिखेत्
तिलैर्लाजैश्च पुष्पैश्च दर्भैश्चैव परिस्तरेत् ४
तन्मध्ये विन्यसेत्कुम्भं सुरत्नं वारिपूरितम्
सकूर्चं सापिधानं च तस्मिन्देवं तु विन्यसेत् ५
अधिवासन कुम्भेति तदग्रे होममाचरेत्
अग्निकार्यादिकं सर्वं तस्मिन्कार्योक्तमार्गतः ६
स्वतन्त्रदेवमावाह्य वह्निमध्ये समर्चयेत्
तस्मिन्देवस्य मूलेन समिदाज्य चरुं हुनेत् ७
शतमर्धं तदर्धं वा जुहुयाद्देशिकोत्तमः

जयादिरभ्या दानादीन् पूर्णान्तं होममाचरेत्  ८
तस्माद्देवं घटे स्थाप्य घटे द्वारेषु योजयेत्
प्रोक्षणे योजयेद्द्वेरे नैवेद्यं धूपदीपकम्  ९
दत्वा च स्थलिकामध्ये स्थगडुलेन च पूरयेत्
स्वर्णं क्षौमं च कार्पासमुत्तमादीनि सूत्रकम्  १०
तत्सूत्रं चैव भस्मौ च विन्यसेत्तगडुलोपरि
पूजकस्य करौ पूर्यतगडुलं फल संयुतम्  ११
देवस्य दक्षिणे हस्ते रक्षासूत्रं तु धारयेत्
बृहत्सामन्त्रेण सृदोक्तं धारयेत्सुधी  १२
स्त्रीणां वामकरे धार्य त्र्यम्बकेन हृदादिभिः
मन्त्रं प्रतिसरं जप्त्वा घटाद्वेराधिवासयेत्  १३
नववस्त्रेण संवेष्टय हृदयेन तु मन्त्रतः
उत्तममिति विख्यातं मध्यमं होमनश्यति  १४
होमं कुम्भविनाकृत्वा सूत्रकारं तु कन्यसम्
उत्सवाङ्गस्य देवानां रक्षासूत्रं तु धारयेत्  १५
शूलस्य दक्षिणे पात्रे धारयेत्कौतुकं सुधी
भस्मं तु धारयेत्पश्चाद्वेष्टयेन्नववस्त्रकम्  १६
कौतुकं बन्धनं प्रोक्तं यज्ञशालाविधिं शृणु

## भेरीताडनम्

अतः परं प्रवक्ष्यामि महाभेरीं तु ताडनम्
शिवयागप्रवृत्तोयं गणेन्द्राद्याहुवाहनम्  १
हविर्भागं तु दद्यार्थं भेरी ताडनमारभेत्
शिवाग्रे वा ध्वजाग्रे वा निशिकाले समाचरेत्  २
शालिभिस्थरिडलं क्षिप्त्वा पश्चिमे पूर्वयोस्तथा
अब्जपात्रौ तु संलिख्य तिलैर्लाजैश्च शोभितम्  ३

दर्भैः पुष्पैः परिस्तीर्य प्रोक्षयेद्धृदयेन तु
तस्योर्ध्वे पश्चिमे पूर्वं शूलं भेरीं तु विन्यसेत् ४
गणेशं पूजयेत्पूर्वं पुण्याहं वाचयेत्ततः
अस्त्रराजं समभ्यर्च्य मध्यपात्रे तु रुद्रकम् ५
सव्यापसव्य पात्रे तु ब्रह्मविष्णुं समर्चयेत्
शूलस्य फलके कुम्भे स्कन्दं च वरुणं तथा ६
ताटीं चैवाग्निराजश्च पीठे वामादि शक्तयः
गन्ध पुष्पादिनाभ्यर्च्य विधिवत्पूजयेत्सुधीः ७
पश्चाद्भेरीं तु संप्रोक्ष्य अपोहिष्ठेति मन्त्रतः
नववस्त्रेण संवेष्ट्य मध्ये ब्रह्माणमर्चयेत् ८
तस्मिन्सन्यापसव्यं तु रुद्रं विष्णुं समर्चयेत्
वलयौ रविचन्द्रौ च चर्मसूत्रे तु वासुकीम् ९
सप्तकीले तु मात्रीणां मन्त्रेण परिशोर्चयेत्
नाभिमन्त्रं समुच्चार्य नैवेद्यं धूपदीपकम् १०
दत्वा त्र्यम्बकमन्त्रेण कोणपूर्वे तु ताडयेत्
इदं विष्णुद्वयेस्ताढ्यं ब्रह्मजज्ञानयोस्तिथौ ११
इति मन्त्रेण सन्ताढ्यं प्राङ्मुखो वाप्युदङ्मुखः
तालकान् भेरिमध्ये तु पुष्पं क्षिप्त्वा नमस्कृतम् १२
सञ्च पुटेन तालेन भेरीमुद्धृत्य ताडयेत्
देवतावाहनं श्रुत्वा देशिकं वाथ शिष्यकम् १३
देवतावाहनं बल्यर्थं यानं वा चन्द्रशेखरम्
अन्नलिङ्गसमायुक्तमस्त्रराज समन्वितम् १४
पञ्चगव्य गुलानादीन् गन्धपुष्पा नाबुधः
धूपदीपं समायुक्तं छत्र चामर संयुतम् १५
वाद्यघोष समायुक्तं घण्टारव समन्वितम्
ध्वजाग्रे बलि निक्षिप्त्वा वृषगायत्रिना बुधः १६

गोपुर द्वारपार्श्वे तु वरिष्ठं भुजगं तथा
ब्रह्मादीशानपर्यन्तमिन्द्राद्यैशानमन्त्रकम् १७
बलिदेवाह्वयं श्रुत्वा देशिकं वाथ शिष्यकम्
तालकादिशितालं वा देशिकं बलि निक्षिपेत् १८
शनैः प्रदक्षिणं कृत्वा प्रविशेदालयं प्रति
इति भेरीं तु सन्ताड्य मुत्सवाङ्कुरमारभेत् १९
इति चिन्त्यागमे प्रतिष्ठातन्त्रे भेरीताडनपटलः

## ध्वजारोहणम्

अतः परं प्रवक्ष्यामि ध्वजारोहणकारणम्
यक्षादीनां तु गद्यर्थं सर्वदेवाहुवाहनम् १
शिवयाग प्रवृत्तोयं दिग्विजार्थं प्रवृद्धिदम्
सर्वलोकप्रकाशार्थ ध्वजारोहणमाचरेत् २
प्रातर्मध्याह्न रात्रादौ सुमुहूर्ते सुवांशके
पीठ गोपुरयोर्मध्ये पीठाग्रे वा वृषाग्रके ३
मध्यादि मध्यमे वापि महामर्यादि मध्यमे
ध्वजस्थानमिदं प्रोक्तं ध्वजदण्डमथा शृणु ४
चन्दनं देवदारुं च चम्पकं तरुबिल्वकम्
फनसं खादिरं तालं पलाशं वकुलं तथा ५
क्रमुकं नालिकेरं च मायूरं वैणवं तथा
त्वत्सारमन्तसारं वा दण्डं सङ्गृह्य देशिकः ६
अवर्तं ग्रन्धि संयुक्तं कृमिकोटारवर्जितम्
प्रासादास्यसमं वापि गोपुरस्य समं तु वा ७
तद्वत् श्रीवान्तकं वापि प्रासादोक्ष समं तु वा
द्वितलस्त्रितलान्तं वा दण्डस्योत्सेधमुच्यते ८

हस्तमानं न वा कुर्यात् त्रिंशार्धस्तमथापि वा
द्वादशं दशहस्तं वा आयादीनां शुचिस्तु वा ९
दण्डोत्सेधमिदं देवी तस्यनाहं तु सुव्रता
चतुर्विंशाङ्गुलं मूलं अग्रेविंशाङ्गुलं तथा १०
विंशाङ्गुलं तु मूलं स्यादग्रमष्टादशाङ्गुलम्
अष्टादशाङ्गुलं मूल षोडशाङ्गुलमग्रकम् ११
उत्तमादीनि पर्वाणि भानुरुद्रस्तु नाडिका
सर्वेषां पर्वयो सम्य उत्तमोत्तमध्यते १२
स्कन्द त्रयं तु दण्डाग्रे प्रत्येकं चटुकात्वतिम्
चटुकेषु महारन्ध्रे महादण्डं तु योजयेत् १३
योज्यं स्थानावृतौ स्कन्दौ विस्तारं तु त्रयङ्गुलम्
तत्समं च घनं चैव दीपं वै षोडशाङ्गुलम् १४
द्वयं सुषिरं संयुक्तं दूर्ध्वश्छिद्रेमथा भवेत्
षड्त्रिंशाङ्गुलं दीर्घं स्यात् वेणुदण्डं तु योजयेत् १५
अष्टषं पञ्चमानं वा वेणुदण्डस्य नाहकम्
स्कन्दात्स्कन्दस्य मध्ये तु द्वादशाङ्गुल संयुतम् १६
ऊर्ध्वस्कन्दस्य तस्योर्ध्वे वेणुदण्डस्य मध्यमे
अयसावलयंतस्या उत्तराभिमुखो स्थिता १७
कनिष्ठाग्र प्रमाणेन त्रिवृता रज्जुयोजयेत्
तस्यैव द्विगुणं रज्जु दण्डं स मूलमाश्रितम् १८
स्कन्दाग्रे तु महा दण्डं गोकर्णस्य तु दीर्घकम्
तस्योर्ध्वे वृषभं स्थाप्य लोहजन्तारुजं तथा १९
ध्वजस्थानं घने तद्वै हस्तमात्र प्रमाणकम्
तस्य मध्ये तु विन्यस्य हेमकूर्मं सुरत्नकम् २०
तस्योर्ध्वे स्थापयेद्दण्डं बालुकैषु च पूरयेत्
त्वत्सारस्य तु दण्डे तत् स्वभावं नाहसंयुतम् २१

तन्मूल वेदिकां कृत्वा विस्तारं हस्तयुग्मकम्
उत्सेधमेकहस्तं वा मेखलत्रय संयुतम् २२
देवकर्म समाहूयात् पञ्चाङ्गयुतभूषणम्
शुद्धवस्त्रोत्तरीयं च गन्धमाला विभूषितम् २३
गन्ध चन्दन लिप्ताङ्गं हेमाङ्गुलीयशोभितम्
अधिवासध्वजं ग्राह्य कुर्याद्ग्राम प्रदक्षिणम् २४
प्रधानध्वजमारस्य प्रत्य नाना ध्वज समाकुलम्
नानाछत्रं समावृत्य नानापिञ्छ समन्वितम् २५
नानाभक्तजनैर्युक्तं ब्रह्मघोष समन्वितम्
वाद्यघोष समायुक्तं नृत्तगेय समन्वितम् २६
वास्तु प्रदक्षिणं कृत्वा ध्वजस्थाने प्रवेशयेत्
गणेशं पूजयेत्तत्र पुण्याहं वाचयेत्ततः २७
अस्त्रनाथं समभ्यर्च्य याननाथस्यनुज्ञया
ध्वजदण्डं तु संप्रोक्ष्य पञ्चशुद्धिक्रमाद्भवेत् २८
तोरणद्वारदेवं तु यजेर्दण्डस्य दृश्यके
अधस्तान्मेखलायां च भूमिदेवीं समर्चयेत् २९
श्रीदेवीं मध्यमेभ्यर्च्य मेखलोर्ध्वे सरस्वतीम्
दण्डं विष्णुमयं चैव पञ्चभूतां समर्चयेत् ३०
सुमुहूर्ते ध्वजस्यन्ते रज्जुयोज्यं हृदाय च
सङ्गृह्य वृषकुम्भादीन् अधिवास घटं नवम् ३१
तत्र स्थाने तु विन्यस्य ध्वजस्य वृषके न्यसेत्
विधिवद्दर्चयेद्धीमान् वृषगायत्रिना बुधः ३२
सर्वातोद्य समायुक्तं ब्रह्मघोष समन्वितम्
वाद्यघोष समायुक्तं नृत्तगेयं चतुर्दशीम् ३३
ध्वजमारोपणं शीघ्रं वृषगायत्रिना बुधः
रज्जो च दर्भमाला च दण्डसव्यक्रमेण तु ३४

मूले दर्भाम्बरे बन्धै राम्भ्रपत्रं तु संयुतम्
संप्रोन्द्य वृषकुम्भादीर्दराडमूलेभिषेचयेत्  ३५
वृषभं पूजयेन्मूले स्रावृते लोकपालकान्
वारुणादीन् समभ्यर्च्य मुद्गान्नं तु निवेदयेत्  ३६
धूपदीप समायुक्तं नृत्तगेय समन्वितम्
उपचाराणि सर्वाणि दापयेद्देशिकोत्तमः  ३७
देशिकं वाथ शिष्यं वा फणिमालां शृणु प्रिये
गीतमङ्गलसंयुक्तं भस्मं भक्तेषु दद्ययोः  ३८
चराडेशं वाथ भक्तं वा वीधिशोध्यार्थकारणम्
ग्रामप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति  ३९
ध्वजारोहणमेवोक्त भेरीताडनमारभेत्  ४०

इति चिन्त्यागमे प्रतिष्ठातन्त्रे ध्वजारोहण पटलः

## वृषाधिवासनम्

ग्रतः परं प्रवक्ष्यामि वृषकेत्वाधिवासनम्
यागादि द्विजकाम्यार्थ दन्यत्काम्यं विनश्यति  १
इति चिन्त्य प्रयुक्तोऽयं वृषकेत्वधिवासनम्
ग्रधिवासन कर्म तु रोहणात्पूर्वरात्रिके  २
श्वेतं सुलक्षणं सूक्ष्मं भवेत्कार्पासवस्त्रकम्
रन्ध्राष्टाब्धिकरं दीर्घ भूतभागैक विस्मृतम्  ३
विस्तारेण समं पुच्छं पुच्छर्ध शिखरं स्मृतम्
पञ्चभागैकमध्ये तु लिखेत्स्वेतवृषं सुधीः  ४
कर्णौ शृङ्गौ खुराद्वन्द्वौ ग्रोष्टौ रक्तप्रवालकम्
बालास्वर्ण निभास्वर्ण किङ्किणीमालभूषितम्  ५
नेत्रौ स्वेतमयौ मध्यौ वृत्तं कृष्णमयं तथा
रक्तपद्मस्य पीठोर्ध्वे स्थितं वा शयनं तु वा  ६

तदूर्ध्वे छत्रमालिख्य पार्श्वौ चामरयुग्मकम्
अग्रे दीपं तु तस्योर्ध्वे श्रीवत्सं दर्पणं लिखेत् ७
तद्दीपस्य तथोलिख्ये पूर्णकुम्भं त्रिशूलकम्
वृषपृष्ठतलेदीपं लिखेत्स्वस्तिकमूर्ध्वके ८
तस्य दीपस्य यो भागे घराटां च शङ्ख संलिखेत्
शुद्धिं कृत्वा तु विधिवत् नयनोन्मीलनं कुरु ९
वृषयागस्यनुज्ञार्थं पूजयेत्परमेश्वरम्
शिवाग्रे मराटपे वापि होमयेनानुलेपयेत् १०
पुरायाहं पञ्चगव्यौ च प्रोक्षयेद्धृदयेन तु
द्वौ तले व्रीहिनिक्षिप्त्वा तस्यौ यो नलिनं लिखेत् ११
तराडुलैश्च तिलैर्दर्भैः पुष्पैश्चैव परिस्तरेत्
नवकुम्भवृषं न्यस्त्वा पश्चिमे पूर्वयोरपि १२
वृषभं पूजयेत्पश्चात् वृषविद्येश्वरादिभिः
उक्षं च गोपतिं चैव बलिवर्गमनड्वगम् १३
शृङ्गिनं च कुकुश्मं च शङ्खकर्णं महोदरम्
वृषविद्येश्वरं ह्येवमग्रादीनि समर्चयेत् १४
सदाशिवे शिवं भाव्य वृषे शिववृषं भजेत्
मुद्गान्नं तु निवेद्याथ धूपदीपं हृदा ददेत् १५
तस्य कुम्भं समादाय आवृताष्ट घटं विना
शिवस्य वृषमावाह्य कुम्भमध्ये समर्चयेत् १६
वृषविद्येश्वराह्वानं यागार्थे तु विना सुधीः
पूर्ववत्स्थापयेत्कुम्भं वृषबीजेन देशिकः १७
लोकपालान्यथास्थाने आवृताष्ट घटेषु च
सकूर्चान् पल्लवोपेतान् स वस्त्रान् सापिधानकान् १८
अर्चयित्वा यथा न्यायं पश्चान्वृषध्वजान् न्यसेत्
हृदयेन तु चिन्त्यस्य प्रोक्षयेदम्भसान्तकैः १९

वृषमूले समभ्यर्च्य वृषगायत्रिना बुधः
मन्त्रं
ओं तीक्ष्ण शृङ्गाय विद्महे वेदपादाय धीमहि
तन्नो वृषभः प्रचोदयात् २०
इति गायत्रिनाभ्यर्च्य यागादिन्द्रादिनार्चयेत्
दर्पणादीन्समभ्यर्च्य गन्धपुष्पादिभिर्यजेत् २१
अग्न्याधानादिकं कृत्वा वृषकुम्भाग्रके सुधि
अग्निमध्ये तु तद्ध्यात्वा वृषबीजेन देशिकः २२
समिधा सद्यमन्त्रेण वृषमूले घृतं हुनेत्
चरुं हृदयमन्त्रेण प्रत्येकं शतमर्धयोः २३
वृषात् षडङ्गमन्त्रेण कुम्भे स्पर्शाहुतिं हुनेत्
ध्वजे स्पर्शाहुतिं हुत्वा ततो पूर्णान्तमाचरेत् २४
कुम्भमध्ये समभ्यर्च्य नैवेद्यं धूपदीपकम्
वृषध्वजं घटं चैव एकवस्त्रेण वेष्टयेत् २५
प्रभाते वास्तु प्राकारं पर्यग्निकरणं कुरु
वृषाधिवासनं प्रोक्तं ध्वजारोहणमाचरेत् २६
इति चिन्त्यशास्त्रे प्रतिष्ठातन्त्रे वृषाधिवासन पटलः

## शिवयागबलिक्रमम्

अतः परं प्रवक्ष्यामि शिवयाग बलिक्रमम्
महायज्ञस्य काम्यार्थमात्मार्थं तद्विजार्थकम् १
सर्वेषां यागमूर्तीनां हविर्भागं तदर्धकम्
लोकत्रयं तु रक्षार्थं बलियानं समाचरेत् २
वास्तुब्रह्मादि सन्धीनां पीठं कृत्वा विचक्षणः
हस्तं पीठस्य विस्तारं उत्सेधं तु तदर्धकम् ३
मेखलत्रय संयुक्तं प्रत्येकं चतुरङ्गुलम्

तारमुच्चमिदं प्रोक्तं दारुजो मृरामयोऽपि वा ४
वास्तुप्राकार सन्धीनां बलिदेवान् क्रमात् शृणु
ब्रह्मादि लोकपालानां यथा स्थाने बलिं क्षिपेत् ५
सायं प्रातस्समाश्रित्य तत्तद्ग्रामे दिनाधिपान्
विघ्नराजो गणाधीश शक्तिविघ्न विनायकः ६
एकदन्तश्च हेरम्बो गजवक्त्रास्सुरान्तकः
वीरविघ्नो गुहाग्राश्च प्रथमे च दिनाधिपाः ७
पिशाचश्शबलो धीरो गुह्यसिद्धो ध्वकेशकः
दीर्घाङ्घ्रीश्च नरद्वेषी भूतश्चोग्मदिनेऽपि च ८
महानागश्च नन्ताश्च वासुकी तक्षकं ततः
कार्कोटकश्च पद्मश्च महापद्मस्तथैव च ९
शङ्खपालश्च गुलिका तृतीयदिन देवता
गन्धर्व किन्नरो यक्ष सिद्धविद्याधरस्तथा १०
नारदश्च महागानश्चरणस्तुम्बुरूस्तथा
ब्रह्माद्यैशावसाने तु बलिं गृह्णन्तु देवता ११
भूतेशश्यामदन्ताश्च संवर्तो दीर्घ कायकः
कुराडकृक्षी ह्रस्वाङ्घ्रि सिह्नरूपी वृषानन १२
नागाभरणभूतश्च पञ्चमे दिननायकः
गृहश्च कृत्तिकापुत्र गङ्गापुत्र उमासुत १३
विशाखश्शक्तिहस्ताश्च क्रौञ्चभित्तारकान्तकः
सुब्रह्मरायेति षष्ठाहे बलिं संगृह्य निर्नराः १४
रिषिराजे वसिष्ठाश्च विश्वामित्रं च काश्यपः
अगस्त्यश्च पुलस्त्यश्च भारद्वाजश्च गौधमः १५
कौशिकेतिममौ यागे बल्यर्थे दिनसप्तमः
इन्द्रो शतक्रतो वज्री सहस्राक्षः पुरन्दरः १६
जम्भहा वृत्रहाश्चक्री विटौजाष्टदिनाधिपः

ब्रह्मा सरस्वती कान्तौ हिरगयगर्भश्चतुर्मुखः १७
स्वयम्भुः पद्मयोनिश्च यज्ञहोता प्रजापतिः
पितामहो नवाहेति बलिं सङ्गृह्य देशिकः १८
विग्रहा विष्णुः कूर्मस्वरूपाश्च वराहो नारसिह्मकः
वामनो बलिभद्राश्च परश्वरनामकः
कृष्णश्चैव दशे रात्रे उत्सवे बलिनायकाः १९
राक्षसाश्च सुरद्वेषी दानवश्च विभीषणाः
बहु भुक्ता शनिश्शब्दा नीलाद्री सदृशाङ्गका २०
इन्द्रस्य समयुद्धाश्च नीलश्चैकादशाहकाः
शिवस्सर्व भवो गर्भो व्योमरूप जगतात्मन २१
स्वयम्भु स्थाणुनाभश्च द्वादशाहेति नाधिपाः
एकाहे तु नवं विद्या द्वादशाहे शताष्टकम् २२
अथवन्त्वीश वामे तु प्रधानस्य बलिं क्षिपेत्
एकाहे तु प्रधानेक द्वादशं च दशाहके २३
प्रथमं विघ्नकर्तारं पैशाचं तु द्वितीयकम्
तृतीयं नागरात्रिं स्यात् गन्धर्वं तु चतुर्थकम् २४
पञ्चमं भूतरात्रं तु गृहरात्रं तु षष्ठमम्
सप्तमं ऋषिरात्रं स्यादिन्द्रराष्ट्रं तथाष्टमम् २५
नवमं ब्रह्मरात्रं स्याद्दशमं विष्णुरात्रिकम्
राक्षसं रौद्ररात्रिं च द्वादशं शिवरात्रिकम् २६
गन्धर्वादि तपोश्रित्य श्रीकरे गुहमादयाः
धीवरेन्द्रस्य रात्रादि विष्णुरात्रादि विक्रमे २७
अघोरे शिवमेवं स्यात् बलिगोज्यक्रमं शृणु
मुद्गान्नं तिलसम्मिश्रं नालिकेरफलं घृतम् २८
पुन्नागं रक्तपुष्पौ च विघ्नमन्त्रमनुस्मरन्
मिश्रान्नं कृसरापूपं मधुसर्पि समन्वितम् २९

जपाकुसुम संयुक्तं पैशाश्चस्य बलिद्वयम्
क्षीरान्नं शालिपिष्टं च गुलखण्डसमन्वितम्
कृष्णार्क मल्लिकापुष्प नागप्रीति सम्भवम् ३०
कृसरान्नं रजनीचूर्णं घृतमिश्रं दधिप्लुतम्
बिल्वादिव कुलै पुष्पै गन्धर्वस्य बलिप्रियम् ३१
कृसरान्नं पायसं च कुलुत्था मोदकैर्युतम्
चम्पकैर्मिश्रपुष्पौ च ददेत्प्रीतं तु भूतकम् ३२
गुलान्नं नालिकेरं च कदलीफल संयुतम्
कदम्बै फलपुष्पैश्च दापयेत्तु गुहप्रियम् ३३
अन्नं दधिसम्मिश्र फनसा फलमेव च
श्वेतपद्मं कुशाग्रं स्यात् सुप्रीतं तु शुभ्रमुने ३४
हरिद्रान्नं घृतसंमिश्रं प्रियङ्गु कदलीफलम्
इन्द्रवल्ली च बिल्वस्य पुष्पप्रीति सुराधिपाः ३५
गुलान्नं घृतसंयुक्तं माषसत्तु समन्वितम्
पाटली पद्मपुष्पं च ब्रह्मप्रीति बलिभ्रमे ३६
गुलान्नं घृतसम्मिश्रं बृहतीफलसंयुतम्
तुलसी च श्रियावर्तात् ददेद्विष्णुप्रियावहम् ३७
माषान्नं शम्बरैश्चैव दधिमिश्रमधुप्लुतम्
रक्तपुष्पं ददेत्सर्वं राक्षसस्य बलिप्रियम् ३८
शुद्धान्नं क्षीरपङ्गोक्तं कदलीफल संयुतम्
करवीरं द्रोणपुष्पोक्तं शिवप्रीतो शिवद्विजः ३९
इति भोज्यक्रमं ह्येवं बलिदानं ततो धृताः
शिवं सम्पूज्य विधिवत् देशिकोथवा ४०
ध्वजं पूज्यं तु विप्रेन्द्र पश्चाद्धेरीं तु पूजयेत्
तण्डश्चं वामके पश्चात् अन्नलिङ्गस्य सेद्बुधाः ४१
द्वादशाङ्गुलमुत्सेधं द्वेगुणं नागमुच्यते

अग्रतारं करंगुल्यं मनुपूर्वात्कुशस्तथा ४२
अन्नलिङ्गमिदं प्रोक्तं पाशुपदास्त्रमन्त्रतः
चतुर्भुजं त्रिरणेत्रं च जटामकुटधारिणीम् ४३
वरदाच्चकरं वामे सव्ये भयं च शूलधृत्
रौद्रदृष्टि समायुक्तं सर्वाभरण भूषितम् ४४
अन्नलिङ्गमिदं ध्यात्वा अर्चयेत्तु यथा विधि
जलिपात्र हृदाचाल्य अन्नपूर्योपदंशकम् ४५
नित्याग्निं चैव विप्रेन्द्र विधिवद्धोममाचरेत्
आवाहनस्यदेवं तु मूललिङ्गे समर्चयेत् ४६
सदाशिवे शिवं भाव्य तच्छिवं चन्द्रशेखरम्
आह्वये चैव विप्रेन्द्र बलियाते विशेषतः ४७
अस्त्रं च अन्नलिङ्गं च आधायौ परिचारकौ
उष्णीषं चोत्तरीयं च भूषणादीनि भावयेत् ४८
हविषं पञ्चगव्यं च गन्धपुष्पं च तोयकम्
धूपदीपं समायुक्तं घरटारव समन्वितम् ४९
शङ्खं भेरी पटाषादीन् वाद्यघोष समन्वितम्
छत्र चामर संयुक्तं वृषश्चित्रि ध्वजैर्युतम् ५०
द्वारस्य दक्षिणे वामे नन्दिकालौ बलिं क्षिपेत्
वृषभं पूर्वदिग्भागे दुर्गमाग्नेय गोचरे ५१
दक्षिणे भृङ्गराजं च मातरं च गणैर्युतम्
नैर्ऋते विघ्नराजं च वारुणे वरदेवतम् ५२
स्कन्दं च वायुदिग्भागे चरडेशं सोमगोचरे
ऐशान्ये क्षेत्र पालं च शिवाग्रे भास्करं भवेत् ५३
गोपुरे वाद्य निशब्दं शङ्खघोष समन्वितम्
गोपुरद्वारपार्श्वे तु दरिडनं मुरिडनं तथा ५४
वृषभं पूर्वदिग्भागे स्व स्व नाम्ने बलिं क्षिपेत्

इन्द्रश्चैव तथाग्निश्च यमश्च निर्ऋतिस्तथा ५५
वरुणश्चैव वायुश्च सोम ईशानमेव च
इन्द्रादीनां तु बल्यन्ते प्रत्येकं नृत्तगीतयुत् ५६
पुनः प्रदक्षिणं कृत्वा विष्णुब्रह्मौ बलिं ददेत्
नैर्ऋते दक्षिणे विष्णमीशवामे प्रजापतौ ५७
पश्चात् ध्वजाग्रके तस्य वृषमन्त्रात् बलिं क्षिपेत्
गोपुर द्वारपार्श्वे तु परिषुं भुजकं न्यसेत् ५८
ग्राम वास्त्वै तु सन्ध्यादीन् बलिदानक्रमात् शृणु ५९
इति चिन्त्यशास्त्रे प्रतिष्ठातन्त्रे बलिक्रमविधि पटलः

## बलिदानम्

विप्रज्ञ राजतं चैव द्विविधं बलिना युधः
गोमया लेपनं कृत्वा प्रोक्षयेत्पञ्चगव्यकैः १
पुष्पगन्धोदकैश्चैव प्रोक्षयेद्धृदयेन तु
ब्राह्मणं ब्रह्मसव्यौ तु वामे तद्दिननायकौ २
तत्तत् स्वनाम मन्त्रौ तु एकपीठे बलिं क्षिपेत्
इन्द्रादीशानपर्यन्त तत्तद्वामे दिनाधिपम् ३
पीठं प्रति विरिञ्चादीन् बल्यन्ते नृत्तगीतयुत्
महापीठस्थले गत्वा पादप्रक्षालनं कुरु ४
वज्रं शक्ति दण्डं च खड्गं पाशाङ्कुशं तथा
गता त्रिशूलं पूर्वादीन् पीठमूलादि पीठकम् ५
चक्रं पद्मं नृतेस्त्वीशे स्व स्व नाम्ने बलिं क्षिपेत्
ऊर्ध्वे पीठदलाग्रेषु पूर्वादीनि चतुर्दिशेत् ६
आमोदश्च प्रमोदश्च सुमुखेन्द्रमुखस्तथा
अविघ्नमीशदेशे तु विघ्नेशं कर्णिकोर्ध्वके ७
चतुर्थरूपस्वनाम्ने ओंकारादी नमोन्तयुत्

स्वाहान्ते तु बलिं क्षिप्त्वा सर्वेषामिति योजयेत् ८
धाम प्रदक्षिणं कृत्वा प्रविशेदालयं प्रति
पूर्वेन्दुशेखरे योज्य शिवलिङ्गे सुयोजयेत् ९
इति विप्रज्ञकं प्रोक्तं राजतं शृणु सुव्रत
आलयावरणं चैव द्वारादी गोपुरान्तकम् १०
बलि पूर्वोक्तवत् क्षिप्त्वा ग्रामसन्ध्यादिना बुधः
ब्रह्मपीठे चतुर्वक्त्रं वामे तद्दिननायकम् ११
अग्रे मेखलया मध्ये ऋषीणां बलिमाचरेत्
इन्द्रपीठे महावज्री वामे तद्दिननायकम् १२
तदग्रे मेखलामध्ये सर्वदेवान् बलिं क्षिपेत्
आने शक्तिर्वरं पीठे पूर्ववद्दिन दैवतम् १३
ग्रहादि सर्व रिक्षाणां अग्रमेखल मध्यमे
याम्ये दण्डधरं चैव वामे तद्दीन दैवतम् १४
सर्वेषां चैव पैतृणामग्रे मेखलमध्यमे
नैर्ऋते खड्गधारी च वामे तद्दिन दैवतम् १५
तपराक्षस सर्वेषामग्रमेखलमध्यमे
वरुणे पाशहस्ताय वामे तद्दिननायकम् १६
सर्वनागप्सरो चैव अग्रमध्यम मेखले
ऐशान्ये शूलधारी च वामे तद्दिन दैवतम् १७
सर्वभूत पिशाचेभ्यो मेखलाग्र स मध्यमे
प्रासादाभिमुखो सर्वे वा र्बलिदत्तकः १८
गोपुरे चण्डे रुद्राय सभास्थाने सरस्वती
मूर्धस्थाने तु तद्देवं दुर्गास्थाने तु दुर्गका १९
कलिकोष्ठाष्ट कालि स्यात् नद्ये तीर्थं तु सर्वयोः
पर्वते भूतराजं च कुण्डोदर तटाकके २०
क्षेत्र क्षेत्र महूर्तस्तु विधिग्वाद्येयुतेषु च

बलिं क्षिप्त्वा तु विप्रेन्द्र महापूर्वे तु पीठे तु पूर्ववत्  २१
धामप्रदक्षिणं कृत्वा प्रविशेदालयं प्रति
बलिदानमिदं प्रोक्तं महायानमथ शृणु  २२
इति चिन्त्यशास्त्रे बलिदानविधि पटलः

## मौनबलि

अतः परं प्रवक्ष्यामि मौनार्थाय बलिक्रमम्
ब्रह्मादि लोकपालानां हविर्यागं घृणान्तरे  १
तत्तत्स्वनाश्रतानां पूर्णार्थ बलिकारणम्
तद्ग्रामरक्षणार्थं तु मौनार्थं बलिमारभेत्  २
यानं तु अस्त्रराजं च अन्नलिङ्ग समन्वितम्
खड्ग खेटक संयुक्तं गन्धयुक्त समन्वितम्  ३
मध्यरात्रौ तु विप्रेन्द्र बहुरूपं विना भवेत्
तुष्णीय घोषसंयुक्तं दिशितालं विना सुधीः
मिश्रान्नं मधुसंयुक्त गुलसर्पि दधिप्लुतम्  ४
मौनी वृतधरास्सर्वे सन्धिदेवा द्विसृजयेत्
मौनार्थं तु बलिं हुत्वा ग्रामस्या सन्धि पीठके  ५
प्रदक्षिण क्रमस्सद्यः प्रविशेदालयं प्रति
पूर्ववत् विन्यसेच्छूलं मन्यलिङ्गं जले न्यसेत्  ६
चण्डमूर्तिस्तु विधिवत्पूजयेत्क्रमशोद्बुधः
आचार्यं पूजयेत्तत्र दक्षिणानां प्रदापयेत्  ७
गोभूमि हेम रत्नादीन् वस्त्रमादीनि दापयेत्
आचार्यमनसातृप्तस्तस्मात् तृप्तिपरश्शिवम्  ८
अङ्कुरान् मौनिन बल्यर्थं मुत्सवादेकविंशतिः
पटनेति च रित्वायत् शिवसायुज्यमाप्नुयात्  ९
इति चिन्त्यशास्त्रे मौनबलिविधि पटलः

## ध्वजावरोहणम्

अतः परं प्रवक्ष्यामि ध्वजावरोहणक्रमम्
घोरादि हन्त्रि गुणं चैव विक्रमन्ति गुणं तु वा १
तीव्रं त्रिगुणं वापि श्रीकरं त्रिगुणं तु वा
सप्ताहं त्रिगुणं वापि पैतृकं स्त्रिगुणं तु वा २
पुनरुत्सवमारभ्य पूर्ववत्क्रियते सुधीः
उत्तमोत्तममेवं स्यात् केत्यावरोहणेषु च ३
ध्वजस्य वृषभं न्यस्त्वा वृषमूर्तिस्तु विग्रहम्
स्थापितैः कलशै रन्ध्रैः मध्ये ध्वजवृषं न्यसेत् ४
लोकपालान् न्यसेद्विद्वान् पदमोऽष्ट घटेषु च
तस्य कुम्भं तु सुस्नाप्य वृषराजस्य विग्रहे ५
वृषदिक्पालकुम्भानां स्नापयेदभ्रमादिषु
वृषबीजेन संस्नात्वा तस्य मूलेन चार्चयेत् ६
प्रथमावरणेभ्यर्च्य वृषविद्येश्वरं यथा
वृषयुग्मावृते न्यस्त्वा पाशभ्रद्वाति लोकपान् ७
दिक्पालास्ययुथानां तु तृतीयावरणे न्यसेत्
गन्ध पुष्पादिनाभ्यर्च्य मुद्गान्नं तु निवेदयेत् ८
धूपदीपं ददेद्विद्वान् पूजयेत्तु यथा विधि
ध्वजावरोहणं प्रोक्तं मौनार्थं बलिमाचरेत् ९
इति चिन्त्यशास्त्रे ध्वजावरोहणविधिपटलः

## रथारोहणम्

अतः परं प्रवक्ष्यामि रथारोहणकारणम्
शिवयज्ञात्पुराकाले दिग्विजे दुष्टनिग्रहे १
सर्वरुद्रसमायुक्तं चतुरङ्ग समन्वितम्

तस्य वद्या नयेच्छम्भु रथारोपमहोत्सवे २
ब्रह्महत्यादि दोषघ्नं राजा राष्ट्र विवर्धनम्
सर्वलोकप्रियार्थश्चैव सर्व शत्रु विनाशनम् ३
दिनमेकादशेवान्त्ये सन्ध्ये तु रथ यानकम्
पूर्वरात्रौ तु विधिवत् रक्षासूत्रं तु धारयेत् ४
ततः प्रभाते विमले त्वभिषेकं समाचरेत्
युववस्त्रेति मन्त्रेण धारयेन्नववस्त्रकम् ५
उत्तरीय हृदा दत्वा अर्चयेत्तु यथा विधि
शिवाग्नि जनितोस्याग्रे अग्निकार्योक्त मार्गतः ६
सद्यदीशानमन्त्रेण आज्यमूलेन योजयेत्
चरुं हृदय मन्त्रेण लाजं वामेन होमयेत् ७
वर्ममन्त्रेण तिलेनैव गुलं नेत्रेण संहुनेत्
बिल्वपत्रं हुनेत्स्वैवशात् एकैकं पञ्चविंशतिः ८
अस्त्रमेकं हुनेद्विद्वान् द्रव्यान्ते व्याहृतीं हुनेत्
स्वष्टमग्नेति मन्त्रेण होमयेद्देशिकोत्तमः ९
जयादिरभ्याधानं च राष्ट्रभृच्चक्रमाधुनेत्
पूर्णान्त अर्चयेच्छम्भुं तस्याग्नौ तु विसर्जयेत् १०
गोदानं शातकुम्भं च कासं पात्रं च वस्त्रकम्
तिलं चैव विशेषेण सवत्सां गां प्रदर्शयेत् ११
विघ्नेश्वरं समभ्यर्च्य नैवेद्यं दापयेत्सुधीः
देवदेवं ततो विद्वान् पायसान्नं निवेदयेत् १२
रौप्य कटाहमानीय शिवाग्रे स्थण्डिलं न्यसेत्
कुङ्कुमागरुकर्पूर श्यक्षपिष्टं च चन्दनम् १३
मथित्वा वारि संयोज्य कटाहे पङ्कवद्यथा
पाटलुत्पल पुष्पाणि जाति पुन्नाग चम्पके १४
केतकी मल्लिकादीनि आर्द्रपङ्के तु निक्षिपेत्

कामबीजान् समभ्यर्च्य आर्द्रपङ्कमितो बुधः १५
आर्दपङ्कं ददेत्कर्तुं देशिकाय जनाय च
सुमुहूर्तगतात्पूर्वे रथशुद्धिं समाचरेत् १६
पञ्चगव्येन संप्रोक्ष्य शोधयेदम्भसां ततः
मूलेन शिवतोयैश्च स्यदं संप्रोक्ष्य संस्पृशेत् १७
रथ संस्कार संयुक्तं स्थापयेदादिदैवतम्
चक्रे चद्रदिवानाथे हरिवज्रिद्विदण्डकौ १८
परितः पट्टिकालोले शतरुद्राः प्रकीर्तिताः
गात्रेषु गात्रबन्धेषु धर्माद्याद्येतिकस्मृताः १९
गात्रात् गात्रान्तं रे वायुश्शैत्यादि गुण संयुतान्
रथ प्रसादके चोक्रे स्थूपिकायां सदाशिवम् २०
स्कन्देन्द्र दक्षिणामूर्तिं विष्णुब्रह्मा तथैव च
रथ प्रान्तं समाश्रित्य लोकपालान् व्यवस्थिता २१
रज्जुवेधे समभ्यर्च्य चतुर्दिक्षुद्धरोदकान्
एवमेव क्रमेणैव स्थापयेद्देशिकोत्तमः २२
चित्रवस्त्रैर्द्वितानैश्च स्वर्णरत्नैर्विभूषितम्
रजतास्य शशीभूष्य ध्वजैञ्छत्रै बभूषयेत् २३
बध्वा च स्वर्णदामैश्च रत्नदामैः प्रलम्बयेत्
नानापुष्पैः फलैः पत्रैः कदल्यादि कुशाभितम् २४
तदन्ते चैव विप्रेन्द्र दक्षिणादानमाचरेत्
योगिनां दानयुक्तानां शिवज्ञानस्य वेदिनाम् २५
काञ्चनां चैव वस्त्रादीन् दापयेच्छिवसन्निधौ
रथस्थानं शनैन्यस्त्वा स्वमूर्ते शुभांशके २६
स्वस्तिसूक्तं समुच्चार्य रथेवारोहणेत्प्रभुम्
षट्तत्व देशिकश्चैव पूजको स्थापको तथा २७
पाचकोऽलङ्कृतश्चैव रोपयेत्तद्रथे तथा

उपायनार्हरूपे तु रथमारोपितं नयेत्  २८
रथपीठोपरिस्थाप्य डोलासिह्मासने शिवम्
आर्द्रपङ्क ह्रदालिख्य तद्देवाङ्गं तु सर्वसु  २९
गन्धमाल्यैश्च सन्धार्य सर्वाभरणभूषितम्
संयुतं नैवेद्यं तु फलान्दनां ताम्बूलं दापयेद्बुधः  ३०
धूपदीपं ददेत् शिम्भोः पश्चाद्भस्मं तु धारयेत्
रथाग्रे दैव वीर्ये च पताकानां च सङ्गमम्  ३१
दन्ते डोला यन्त्रं च तदन्ते तुरग यन्त्रकम्
तालि यन्त्रादि यन्त्राणां रोहणं रुद्रकन्ययोः  ३२
तदन्ते विघ्नराजं च रथे वा मूषिकेऽथवा
पिञ्छारूढं गुहं चैव वने शूलधरेश्वरम्  ३३
श्री कराठं तु गजारूढं हरिरर्धमत्र गेन्द्रके
गङ्गे तु दक्षिणामूर्तिं भूतनाथेयमान्तिकम्  ३४
तुरगेन्द्रपुराहारी वृषारूढं वृषे तथा
देव्यार्थं शिबिका चैव नटेशं सिह्मवाहने  ३५
चन्द्रशेखर रतं पुष्प विमाने तदनन्तरम्
तदन्ते तु महाशैवं तदन्ते भूसुरास्तथा  ३६
तदन्ते भूपतिश्चैव तदन्ते मन्त्रकादिभिः
तदन्ते रुद्रगणिका तदन्ते मर्दलादकाः  ३७
तदन्ते गायका प्रोक्ता तदन्ते नृत्तगा प्रजाः
देवदेवोत्सवं नाथं रथयानं तदन्तरे  ३८
उमादेवी रथं यानं तदन्ते तु समागतः
तदन्ते चराडेश्वरं चैव यानं चैव शिवोत्सवे  ३९
सर्वेषां छत्रसंयुक्तं पिञ्चचामरसंयुतम्
नानाध्वजसमायुक्तं नानाभक्तजनैर्युतम्  ४०
सर्वातोद्य समायुक्तं धूपदीप समन्वितम्

प्रवं प्रदक्षिणं कृत्वा प्रविशेदालयं प्रति ४१
विजयस्योत्सवं ह्येवं पुष्कलं तु शृणु द्विजः
रथारोहणमेवोक्तं तीर्थकर्ममथ शृणु ४२
इति चिन्त्यशास्त्रे रथारोहणविधि पटलः

## रथारोहणम्

अतः परं प्रवक्ष्यामि रथारोहणकारणम्
पुराकाले शिवायज्ञे दिग्विजे दुष्टनिग्रहात् १
सर्वमुद्रैस्समायुक्तं चतुरङ्ग समन्वितम्
तस्यैवमुत्सवे चैव रथारोहणकारणम् २
ब्रह्महत्यादि दोषघ्नं राजाराष्ट्रविवर्धनम्
सर्व लोकप्रियार्थं च सर्व शत्रुविनाशनम् ३
दिनमेकादशान्त्येका सन्ध्यौ तु रथ यानकम्
पूर्वरात्रौ तो विधिवत् रक्षासूत्रं तु धारयेत् ४
ततः प्रभाते विमले अभिषेकं समाचरेत्
युववस्त्रेति मन्त्रेण धारयेन्नववस्त्रकम् ५
उत्तरीयं हृदास्थाप्य अर्चयेत्तु यथा विधि
शिवाग्निं मनयेच्छाग्रे अग्निकार्य विधानतः ६
समिधमीशमन्त्रेण आज्यमूलेन होमयेत्
चरुं हृदयमन्त्रेण लाजं वामेन होमयेत् ७
वर्म नेत्रेण तिलकं गुलमित्यविहोमयेत्
बिल्वपत्रं हुनेदीशादैकैकं पञ्चविंशतिः ८
अस्त्रमन्त्रैर्हुनेद्ध्मा द्रव्यान्ते व्याहृतिं हुनेत्
स्विष्टमन्त्रेति मन्त्रेण होमयेद्देशिकोत्तमः ९
जयादिमभ्याधानं च राष्ट्रभृच्चक्रमाधुनेत्
पूर्णाहुतिं च शिरसा हुत्वा तु वर्जयेच्छिखीम् १०

गोदानं शातकुम्भं च कांसपात्रं च वस्त्रकम्
तिलं चैव विशेषेण स्वत्साङ्गां प्रदर्शयेत् ११
पायसान्नं निवेद्याथ धूपदीपं तु दापयेत्
रौप्यं कटाहपानीयं शिवाग्रे स्थण्डिले न्यसेत् १२
कुङ्कुमागरुकर्पूर श्यक्ष्ण पिष्टं च चन्दनम्
मथित्वा वारि संधोक्ष्य कटाहेवं कवद्यथा १३
पाटलोत्पलपुष्पाणि जाति पुन्नाग चंपकैः
केतिकी बिल्वमालादि कृद्रपङ्के तु निक्षिपेत् १४
कामबीजं समभ्यर्च्य देशिकं यजनाय च
सुमुहूर्तं गतात्पूर्व रथशुद्धिं समाचरेत् १५
पञ्चगव्येन संप्रोक्ष्य शोधधेदम्भसा ततः
मूलेन शिवतोयैश्च चन्दनं प्रोक्ष्य संस्पृशेत् १६
रथ संस्कारसंयुक्तं स्थापयेदधिदैवतम्
चक्रे चन्द्रदिवानाथौ हरीवन्त्रीद्विदण्डके १७
परतः पट्टिकाकाले शतरुद्रा प्रकीर्तिताः
गात्रेषु गात्रबन्धेषु रर्माद्या अधिदैवताः १८
गात्रात् गात्रान्तरे वायु शैन्यादि गुणसंयुतान्
रथ प्रासादके चोर्ध्वे स्त्रपिकायां सदाशिवम् १९
स्कन्देन्द्र दक्षिणामूर्ति विष्णुब्रह्मा तथैव च
रथप्रान्तं समाश्रित्य लोकपाला दशास्त्रकम् २०
रज्जौ वेदान् समभ्यर्च्य चतुर्दिक्षु धरोरगान्
एतेनेवं क्रमेणैव स्थापयेद्देशिकोत्तमः २१
चित्रवस्त्रैर्वितानैश्च स्वर्णरत्नैर्विभूषितम्
राजतार्थं शरीभूष्य ध्वजैश्छत्रैश्च भूषयेत् २२
बध्वा चरुक्तदामैश्च स्वर्णदामैः प्रलम्बयेत्
नानापुष्पफलैः पत्रैः कदल्यादिभि शोभितम् २३

तदन्ते तु विशेषेण दक्षिणान्दानमाचरेत्
योगिनां ध्यानयुक्तानां शिवज्ञानस्य वेदिकाम्  २४
काञ्चनं चैव वस्त्रादिं दापयेच्छिव सन्निधौ
रथस्थानं समाश्रित्य सुमुहूर्ते तु शुभांशके  २५
स्वस्तिसूक्तं समुच्चार्य रथे वा रोहणं प्रभुम्
षट् सप्त देशिकं चैव पूजयेत्स्थापकं तथा  २६
पावको लङ्कृतश्चैव रोपयेत्तु रथे तथा
उपायनार्हरूपे तु रथरोपणं नयेत्  २७
रथपीठो परिस्थाप्य डोलां सिह्मासने शिवम्
क्रद्रपङ्कं हृदालिप्य तद्देवाङ्गं तु सर्वतः  २८
गन्धमाला च सन्धार्य सर्वा भरणभूषितम्
नैवेद्यं सुफलादीनि ताम्बूलं दापयेत्ततः  २९
धूपदीपकतो शम्भोः पश्चाद्भस्मं तु दापयेत्
रथाग्रे चैव वीथ्यौ च पताकारं च सङ्गमम्  ३०
नानावाद्य समुद्घोषं तदग्रे चैव सङ्गमम्
तदग्रे डोलायन्त्रं च तदन्ते वाजि यन्त्रकम्  ३१
तैलयन्त्रं तदन्ते तु गजयन्त्रं तदन्तके
भूतयन्त्रं तदन्ते तु अजयन्त्रं तदन्तके  ३२
शिखियन्त्रादि सर्वेषां रोहणं रुद्रकन्यधा
तदन्ते विघ्नराजश्च मूषिके वारथेऽपि वा  ३३
पिच्छारूढ गृहश्चैव अश्वे शूलधरेश्वरः
श्रीकण्ठं तु गजारूढं हरिरर्धमृगेन्द्रके  ३४
रङ्गे तु दक्षिणामूर्तिं भूतनाथो यमान्तकः
तुरगे त्रिपुरहारिस्तु वृषारूढं वृषे तथा  ३५
देव्यर्धं वृषके चैव नटेशं सिह्मवाहने
चन्द्रार्ध शेखरं पुष्प विमाने तदनन्तरे  ३६

तदन्ते तु महाशैवा तदन्ते भूसुरास्तथा
तदन्ते भूपतिश्चैव तस्य मन्त्री तदन्तके  ३७
तदन्ते रुद्रगणिका तदन्ते वन्दिकादयः
तदन्ते गायका प्रोक्ता तदन्ते नृत्तका प्रजाः  ३८
देवदेवात् सवन्नाथं रथानं तदन्तके
उमादेवी रथेयानं तदन्ते तु समागतम्  ३९
चण्डेशं तु तथान्ते च यानं चैव शिवोत्सवे
सर्वेषामेवमूर्तीनां छत्र चामर संयुतम्  ४०
नानाध्वज समायुक्तं नानाविञ्चसमन्वितम्
सर्वातोद्य समायुक्तं धूपदीपसमन्वितम्  ४१
एवं प्रदक्षिणं कृत्वा प्रविशेदालयं प्रति
विजयस्योत्सवं ह्येवं द्वादशाहादि सिद्धये  ४२
पूर्ववद्द्ढयानं वा ----  तिकीर्तितम्
रथारोहणमेवोक्तं तीर्थसङ्ग्रहणं शृणु  ४३

इति चिन्त्यशास्त्रे रथारोहणविधिपटलः

## चूर्णोत्सवम्

अतः परं प्रवक्ष्यामि चूर्णोत्सव विधिक्रमम्
तीर्थ सङ्ग्रह दिवसात् अपरस्य दिनेषु च  १
बलियानं पुराकृत्वा पश्चात् चूर्णोत्सवं भजेत्
प्रासादग्रास्यते वापि सव्ये वा चोत्तरेऽपि वा  २
गोमयालेपनं कृत्वा पुण्याहं वाचयेत्ततः
द्वितले स्थण्डिलं कृत्वा तन्मध्ये पद्ममालिखेत्  ३
दर्भैः पुष्पैः परिस्तीर्य शूलं तस्मै तथो न्यसेत्
पूर्वे चान्यकये लब्धा उलूखलमुसलं बुधः  ४
प्लक्षो दुम्बरमश्वत्थं वदेनैव तु लूखलम्

मुसल संखादिरं विद्यात् प्रोक्षयेद्धृदयेन तु ५
पुण्याहं वाचयेत्तत्र प्रोक्षयेदम्भसां ततः
शूलमूर्तिं समभ्यर्च्य पश्चाद्भेरीं तु ताडयेत् ६
द्रव्यायां सहदेव्या च वस्त्रेणालूखले वदेत्
लूखलं ब्रह्मदैवत्यं मुसलं रुद्रदैवतम् ७
शूर्पं वै विष्णुदैवत्यं अर्चयेत्स्वस्व मन्त्रकैः
घृते शिरोर्पणं कुर्यात् हेमदूर्वाङ्कुराक्षतैः ८
सुशुक्षा रजककृत्वा उलूखलस्यन्तु मध्यमे
मुसलं मध्यमे स्पृश्य व्योमव्यापीन् स्मरेद्गुरुः ९
ततो स्पृश्ये तु भक्तौ तु स्तोत्रं तु पादयोः क्रमात्
गणिका च गणैस्सार्धं चूर्णयेत्तु पृथक्पृथक् १०
तच्चूर्णं सङ्गृहीत्वा तु मूललिङ्गे हृदापयेत्
धूपदीपं हृदा दत्वा पद्ममुद्रां प्रदर्शयेत् ११
शक्तौ च प्रतिमाणं च शूलं च देशिकोत्तमः
ब्रह्मक्षत्रिययोर्दद्यात् शेषं वस्त्रेण योजयेत् १२
तच्चूर्णं तु समायुक्तं त्रिशूलेन समावृतम्
चूर्णं ग्रामजनानां तु दत्वा कृत्वा प्रदक्षिणम् १३
प्रविशेदालयं पश्चात् तीर्थस्नानं समाचरेत्
इति चिन्त्यशास्त्रे चूर्णोत्सव विधि पटलः १४

## अश्वादिरोहणम्

अतः परं प्रवक्ष्यामि अश्वादिरोहणक्रमम्
यागार्थात् दिग्विजे काम्ये रोहणं अश्ववाहने १
तस्य काले तु शबरस्तपस्तत् शोध्यकारणम्
मृगयात्रागतं शम्भो युद्धारम्भं तु भावयेत् २
छत्र चामरसंयुक्तं वाद्यघोषसमन्वितम्

तत् किरातक संयुक्तमन्यवेदि समन्वितम् ३
केचिद्वाचि समारुक्तः द्धः केचित्कुञ्जर वाहनाः
धनुर्धरास्तथा केचित् केचित्पाशधरास्मृताः ४
केचित्कुन्दधराश्चैव केचिदूर्ध्वमुखास्मृताः
पुराकाले किरातार्थ अब्जपत्रैक आनिने ५
तस्मान्नेत्रं समभ्यर्च्य सालोकं तु दतेच्छिवम्
तत्र स्थातुमलिङ्गमूर्तिरस्तैधरेमृगम् ६
प्रवेशकाले हृदस्सोभू मेरुचापधरेश्वरम्
तत्किरातो महावेगात् युद्धाच्छस्त्र ध्वजादिभिः ७
सर्वेषां च हृदस्सोभूत् पश्चात् द्वौ रूपमेकयुत्
तद्रूपं दर्शयेत्तस्य शबरो सेवधासदा ८
शिव समी प्रदर्श्यात् सुप्रीते शबरस्सदा
इत्यवत् शबरप्रीतात् दिन चाष्टोत्सवं भवेत् ९
अष्टमेहनिशारम्भात् सप्ताहे चान्त्य सन्धिषु
मृगयात्रा समाश्रित्य निशाकालं विना चरेत् १०
अष्टमस्य दिनस्यान्ते सन्ध्यादीन् युग्मसन्धिषु
कपालास्त्र धरं देवं यानं वा श्वानवाहनम् ११
ग्राम प्रदक्षिणे काले प्रच्छत् भिक्षाटनं कथा
विप्र श्रेष्ठाश्रमे भिक्षा सङ्ग्रहाद्या न भावयेत् १२
पश्चात् सन्धिद्वये याने हरिरर्धं मृगेन्द्रके
हरार्धं हरि सङ्ग्राह्य कथया पूजको यथा १३
ततो सन्धिद्वये चैव देव्यार्थस्य महेश्वरम्
लोकानां प्रीति सिद्ध्यर्थं भावयेद्वृष वाहने १४
दिनमेकादशान्ये तु यथा रोहणमारभेत्

इति चिन्त्यशास्त्रे अश्वारोहणविधि पटलः

## तीर्थकर्मविधिः

अतः परं प्रवक्ष्यामि तीर्थ सङ्ग्रहणं परम्
चूर्णस्य पूर्वदिवसे महातीर्थं तु सङ्ग्रहेत् १
पूर्वरात्रौ तु विधिवत् रक्षासूत्रं तु धारयेत्
गणेशं पूजयित्वा तु पुण्याहं वाचयेत्ततः २
स्थापयेन्मण्डपे मध्ये विधिवद्धृढ कुम्भके
मध्ये मनोन्मनीपूज्य पूजाद्यष्टघटे न्यसेत् ३
गङ्गा च यमुना चैव नर्मदा च सरस्वती
सिन्धुगोदावरी चैव कावेरी ताम्रपर्णिका ४
इति तीर्थं तु संपूज्य नैवेद्यं धूपदीपयुत्
शिरसा वाहयित्वा तु शूलकुम्भ समन्वितम् ५
सर्वातोक्त समायुक्तं धूपदीप समन्वितम्
ग्रामप्रदक्षिणं कृत्वा तीर्थ स्नानं प्रवेशयेत् ६
नद्ये सिन्धु तटाके च निधने पुण्यतीर्थके
तीरे समतलं कृत्वा प्रपां कृत्वा विचक्षणः ७
तण्डुल द्वितले क्षिप्त्वा शूलकुम्भं तु विन्यसेत्
पुण्याहं वाचयित्वा तु आह्वये सर्व देवयोः ८
साधिथैः कलशैर्वंभ्यत् वारिमध्ये विशेषतः
त्रिशूलं वै स्नापयेत् सम्यक् प्रविशेदालयं प्रति ९
तीर्थ सङ्ग्रहणं चूर्ण चूर्णस्योत्सवमारभेत् १०
इति चिन्त्यशास्त्रे तीर्थकर्मविधि पटलः

## अग्निकार्य प्रायश्चित्तम्

अग्निकार्य विहीने च निष्फलं शिवयागकम्
नृपेण मरणं शीघ्रं लोके चाग्निभयं भवेत् १
तद्दोष शमनार्थाय मूर्तिहोमं समाचरेत्

हुत्वा मूलं सहस्त्रं तु पुनरुत्सवमाचरेत् २
पूर्वाश्रये तु पञ्चाग्नि तस्मिन्वेदाग्निहीनके
कर्तृणान्मरणं शीघ्र नृपेणाग्निभयं ततः ३
तद्दोष शमनार्थाय संहिताहोममाचरेत्
अधिकं वेद वह्निं च पञ्चाग्ने तु समायुते ४
भुक्ति मुक्ति भवेद्देवीं न्यूने दोषं तु पूर्ववत्
कुण्ड हीनेन लक्षिण्ये भिन्ने छिन्ने तथैव च ५
कर्तृनाशं भवेत् शान्ता लक्षणोक्तं तु कारयेत्
शान्तिहोमं समाश्रित्य निधायाग्निं तु पूर्ववत् ६
ब्रह्मकूर्च विहीने च देशिकस्य मृतिर्भवेत्
हुत्वा चाद्भुत शान्तिं च ब्रह्मकूर्चं तु विन्यसेत् ७
ब्रह्ममन्त्रं शतं जप्त्वा अस्त्रमन्त्रं शतं हुनेत्
प्रणीता चलिते भिन्ने वर्षि दुर्भिक्षमाप्नुयात् ८
शान्तिहोमं समाश्रित्य पुण्याहं वाचयेत्ततः
प्रणीतां विन्यसे मन्त्रान् विष्णुमन्त्रं शतं जपेत् ९
दर्भा परिविहीने च सृत्सृवौ च विहीनके
ग्रामश्री न्यस्त्वा न्यसेत् धा शान्तात् शान्तिहोम समाचरेत् १०
पुण्याहं वाचयित्वा तु तत्तत् सन्धानमाचरेत्
होमद्रव्य विहीने च दुर्भिक्षं जायते ध्रुवम् ११
शान्तिहोमं समाश्रित्य शिवमूले शतं हुनेत्
सद्यादि चाद्यपर्यन्तं मन्त्रमेकादशेऽपि च १२
द्रव्यं प्रति विशेषेण क्रमाद्धुत्वा शतं सुधीः
अग्नि कुण्डेषु विच्छेदे कुक्षिरोगं भवेन्नृणाम् १३
उद्वास्ये चैव भस्मानि निधायाग्निं तु पूर्ववत्
शिवमन्त्रं शतं हुत्वा सादाख्यं तु सहस्त्रकम् १४
मन्त्रहीने क्रियाहीने राजाराष्ट्रं तु नाशनम्

मूर्तिहोमं समाश्रित्य हुत्वा मूलं सहस्रकम् १५
शिवमूलं शतं हुत्वा गायत्रीं च हुनेत्ततः
यागदीप विहीने तु नेत्ररोगं भवेन्नृणाम् १६
दीपमारोपणं कृत्वा अस्त्रमन्त्रं शतं हुनेत्
इति चिन्त्यशास्त्रे अग्निकार्य प्रायश्चित्तविधि पटलः

## बलिदानप्रायश्चित्तम्

बलिदान विहीने च शिवयाग विहीनकम्
निष्फलं क्षुद्रभूतमहाबाधा भवेद्ग्राममनुष्ययोः १
मूर्तिहोमं समाश्रित्य पुनरुत्सवमाचरेत्
उत्सवे बलिदानं तु एकसन्धि विहीनके २
तद्ग्रामवासिनस्सर्वे जायते कुक्षिरोगकम्
पञ्चगव्येन संप्रोक्ष्य दिनदेवं शतं जपेत् ३
पूर्वोक्त विधिनानेन यानान्ते बलिमाचरेत्
बलिहीने अघोरास्त्रं क्षुद्बाधा जायते नृणाम् ४
मूर्तिहोमं समाश्रित्य हुत्वा मूलं सहस्रकम्
शताष्ट कलशं स्नात्वा जप्त्वा घोरं सहस्रकम् ५
अर्धेन्दु शेखरे चैव स्नापयेत्स्नपनं ततः
पञ्चगव्येन संप्रोक्ष्य सद्येन सर्वमाचरेत् ६
द्वयायाहे बलिहीने च नृपस्य मरणं ध्रुवम्
शान्तिहोमं समाश्रित्य हुनेत्पूर्णाहुतिं ततः ७
यागकुम्भं तु संस्नाप्य पुनर्यागं समाचरेत्
भेरी ताडनमादीनि पुनरुत्सवमाचरेत् ८
महावृष्टि भयेद्वास्तु प्राकारे प्रलये सति
पाचकात् भयं भूमौ मूर्तिहोमं समाचरेत् ९
धाम प्राकारकेन्द्राग्रे वास्तु ब्रह्मबलिं हरेत्

वास्तौ तु लोकपालानां धामे दिक्पाल बाह्ययोः १०
भौमे तु बलि निक्षिप्त्वा पूर्वोक्त विधिना सुधीः
प्रलयं तु गते पश्चात् शान्तिहोमं समाचरेत् ११
दिक्पालाधिप मन्त्रेण प्रत्येकं तु शतं हुनेत्
वास्तुप्राकारयोर्द्देवी पूर्ववद्बलिमाचरेत् १२
पूर्ववद्गुणदोषं च पीडयेरे प्रलयेसति
तत्र योर्देवयो गौरी जलान्त्ये बलिसंक्षिपेत् १३
अथवा ब्रह्मसूत्रस्य वीथ्ये च बलिमाचरेत्
तत्पूर्वे शान्तिहोमं च कृत्वा हुत्वा शिवं शतम् १४
पादुकं तु विहीने च नष्टे छिन्ने तथैव च
पादरोगं भवेद्ग्रामे पुनस्सन्धानमाचरेत् १५
पञ्चगव्येन संप्रोक्ष्य शान्तिहोमं समाचरेत्
बलिकालेन्यध सन्धौ तु पादुकं तु समाचरेत् १६
बल्यर्थं यानकाले तु वृषध्वज विहीनके
छत्रे च चामराहीने शोकरोगं भवेन्नृणाम् १७
अघोरेण शतं जप्त्वा तत्तत्सन्धानमाचरेत्
बलिदीप विहीने च ग्रामे जेष्ठा च वसनाम् १८
अघोरं तु शतं जप्त्वा तत्तत्सन्धानमाचरेत्
बलिदीप विहीने च ग्रामे जेष्ठा च वासनाम् १९
अघोरं तु शतं जप्त्वा द्विगुणं दीपमाचरेत्
गोपुर द्वार देशे तु शङ्ख घोष विहीनके २०
राक्षसानां चरेद्ग्रामे शान्तिहोमं समाचरेत्
घण्टारव विहीने च पूर्वद्दोषयो भवेत् २१
आस्त्रमन्त्रं जपेत् साहस्त्रं घण्टारव समायुतम्
नित्याग्निकार्य हीने च अग्निबाधा भवं नृणाम् २२
मूर्तिहोमं समाश्रित्य बल्यन्ते चाग्निमाचरेत्

चन्द्रशेखर बेरे तु सादाख्यात् शिवमाह्वयम्  २३
हीने पश्चात्सुबल्यन्ते पूर्ववद्योज्य हीनके
आचार्यं तु भवे मृत्यु मूर्तिहोमं समाचरेत्  २४
शिवमूले हुनेत्सहस्त्रं शिवयाग त्रणायुधः
शिवकुम्भं तु संस्थाप्य स्नापयेत्परमेश्वरम्  २५
बल्यन्ते स्तोत्र हीने च गीत नृत्तविहीनके
नृत्तकाले तु गणिका पतिते ताल हीनके  २६
दैत्यादीनां प्रियं प्रोक्तं कर्तृणा जलता भवेत्
बल्यन्ते बलिबिम्बे तु शान्तिहोमं समाचरेत्  २७
तत्र देवस्य मन्त्रेण हुत्वा जप्त्वा सहस्त्रकम्
वैश्यादि स्पर्शने स्पर्शे श्वारसुश्वान सूदिनम्  २८
प्रदिपुरास्ताडय चर्मकीलोक्त भेरिकाम्
तत्काले ताडयेद्देवी ग्रामे मूखं प्रयत्नतम्  २९
शान्तिहोमं समाश्रित्य त्यजेच्चर्मादि कीलयोः
नवमन्या परिग्राह्य लक्षणोक्तं तु बन्धयेत्  ३०
नन्दिमन्त्रं हुने सहस्त्रं भेरिका ताडयेत्सुधीः
पूजाहीने महाभेरीं स्थानशोभ्र विननस्यति  ३१
नन्दिमन्त्रं शतं जप्त्वा प्रोक्षयेत्पञ्चगव्यकैः
द्विगुणं हविषं दद्यात् अस्त्रमन्त्रं शतं जपेत्  ३२
शातान्तमूषिकादी च छिन्नैरन्ध्रे च चर्मयोः
वाद्यकस्य भवे मृत्यु घोरमन्त्रं शतं जपेत्  ३३
नन्दिमन्त्रं शतं हुत्वा पुनस्सन्धानमाचरेत्
पञ्चगव्येन संप्रोक्ष्य पूर्ववद्यजनं कुरु  ३४

इति चिन्त्यशास्त्रे अग्निकार्य बलिदान प्रायश्चित्त विधि पटलः

## रथप्रायश्चित्तम्

रथारोहण पूर्वे तु प्रोक्षणादि विहीनके
देशिकस्य भवे मृत्यु जपेद्घोरं सहस्रकम् १
शताष्ट कलशं स्नात्वा रथयानान्तरे सुधीः
शिवमन्त्रं शतं हुत्वा शान्तिहोमं समाचरेत् २
रथस्य स्थूपि भौमौ च पतिते यानकालके
भवेन्नृपस्य लोकं तु छिन्ने भिन्ने मृतिध्रुवम् ३
पुनस्सन्धानकं कृत्वा प्रोक्षयेदम्भसां ततः
जपेद्घोरं सहस्रं तु शिवमन्त्रं शतं जपेत् ४
यानान्ते तु विशेषेण मूर्तिहोमं समाचरेत्
रथ चक्रादि सन्धानं च नैर्भेदे तथैव च ५
परचक्राद्भयं भूमौ नृपस्यारोग सम्भवम्
शीघ्रं सन्धानकं कृत्वा महातीर्थस्य पूर्वके ६
तत्तत् सन्धान देवानां गव्यादि प्रोक्षणं कुरु
शिवमन्त्रं शतं जप्त्वा मूर्तिहोमं समाचरेत् ७
रथान्तरगते तस्मात् कृत्वाहीने गतं नयेत्
नश्यन्तु राजराष्ट्रं तु जपेद्घोरं सहस्रकम् ८
रङ्गे वा शिबिके वापि यानं कृत्वा रथेश्वरम्
अष्टोत्तर शतान् कुम्भान् यानान्ते स्नानमाचरेत् ९
शतं तद्द्रव्यमन्त्रे तु ष्वप्रत्येकं तु हुनेत् शतम्
शिवमन्त्र जपेत् सहस्रमूर्तिहोमं समाचरेत् १०
गवादी च मनुष्या च रथ पादामृते सति
शत्रुभीति भवेर्लोके घोरमन्त्रं शतं जपेत् ११
तत्रस्थाने विशेषेण बिम्बं सम्प्रोक्षणं कुरु
रथ संप्रोक्षणं कृत्वा दिशाहोमं समाचरेत् १२
सद्येन सर्वमाश्रित्य यानशेषं समाचरेत्
ब्रह्मकूर्चाभिषेकं तु यानान्ते तु समाचरेत् १३

शिल्पमन्त्र जपेत् सहस्रमूर्तिहोमं समाचरेत्
तौलि यत्रादि रोपे तु पतितात् गणिकादृते १४
शिलिनां चै पत्नीनां प्रेतं शीघ्रं गच्छेत् श्मशानकम्
मृतभ्रमौखनेत्तालं वालुकेषु च पूरयेत् १५
पञ्चगव्येन संप्रोन्दय पर्यग्निकरणं कुरु
बेर संप्रोक्षणं कृत्वा मूर्तिहोमं समाचरेत् १६
उत्सवे नरयूथे च गजाश्वादीनि सङ्गमे
यानकाले मनुष्याणां प्रमादामृति सम्भवेत् १७
भवेत् छत्रभयं लोके प्रायश्चित्तं तु पूर्ववत्
कृत्वा यागस्य तद्ग्रामे नराणां चमृते सति १८
महायोगं भवेद्भूमे शीघ्रं प्रेतं नयेद्बुधः
मूर्तिहोमं समाश्रित्य अस्त्रमन्त्रं शतं हुनेत् १९
शिवमन्त्रं जपेत् सहस्रं प्रोक्षयेत्पञ्चगव्यकैः
तीर्थाङ्कुर विहीने च तीर्थ सङ्गास हीनके २०
अनावृष्टिर्भवेर्लोके मूर्तिहोमं समाचरेत्
महातीर्थ दिने गौर सद्येनस्सर्वमाचरेत् २१
चूर्णोत्सव विहीने च तैलाभ्यङ्गं विहीनके
जायानां च नराणां च रोगे देहे शिरो भवेत् २२
हृदये च हुनेत्सहस्रं शिरोमन्त्रं हुनेत् शतम्
अस्त्रमन्त्रं शतं हुत्वा तत्तत्कर्म समाचरेत् २३
घटस्नानार्थमादाय कुम्भौ च पतिते भुवि
शिवाग्रे स्थण्डिलं कृत्वा दर्भैः पुष्पैः परिस्तरेत् २४
शेषकुम्भं तु विन्यस्य हीनमन्यं परिग्रहेत्
हीनकुम्भं तु विधिवत् स्थापयेद्देशिकोत्तमः २५
शिवाग्निर्जनिते चाग्रे तन्मूलेन सहस्रकम्
जप्त्वा हुत्वा विशेषेण अस्त्रमन्त्रं शतं हुनेत् २६

पूर्णाहुतिं तु भुवनेत् पश्चाद्धटस्नानं समाचरेत्
घटस्नानान्तरे गौरी मूर्तिहोमं समाचरेत् २७
अवरोहणपूर्वे तु महावात प्रकोपनात्
ध्वज च्छिन्नौ च दण्डौ च मूर्ध्निश्चो रज्जुबन्धने २८
तस्मात् ध्वजवरोपं तु न्यूनं चोद्राष्ट्रविभ्रमम्
भवेत् ध्वजाग्रके देवी अस्त्रराजं तु विन्यसेत् २९
विधिवच्चार्चयेच्छास्त्रं तन्मूलेन शतं जपेत्
तदग्रे स्थण्डिलं कल्प्य रथकुम्भं तु विन्यसेत् ३०
ध्वजस्य वृषमाहूय स्थापयेन्मध्य कुम्भके
अभिताष्ट घटे चैव आह्वयेर्लोकपालकान् ३१
ध्वजे चैवान्य देवैश्च यथा स्थाने न्यसेत्सुधीः
पाचकारोहणं कृत्वा ध्वजावरोहणं कुरु ३२
ध्वजात् स्थापित कुम्भं तु वृषमूलेन विन्यसेत्
वृषदिक्पालयोः कुम्भान् आवृते चाभिषेचयेत् ३३
मुद्गान्नं तु निवेद्याथ धूपदीपं तु दापयेत्
शान्तिहोमं ततः कृत्वा शिवमन्त्रं शतं जपेत् ३४
सन्धिदेवा स्वनाम्नैश्च श्रीभूत बलिहीनके
अपमृत्यु भवेद्ग्रामे मूर्तिहोमं समाचरेत् ३५
भूतां च बलिं क्षिप्त्वा त्रिं त्रिगुण द्रव्य संयुतम्
चण्डयाग विहीने च लोके शत्रु भयं भवेत् ३६
शान्तिहोमं समाश्रित्य चण्डयागं समाचरेत्
प्रायश्चित्त घटस्नानं हीने सर्व विनाशनम् ३७
मूर्तिहोमं दिशाहोमं ब्रह्मकूर्चाभिषेचनम्
तत्कृत्वा तु महादेवी शिवमन्त्रं शतं जपेत् ३८
प्रायश्चित्तार्थकं कुम्भान् स्नापयेत्परमेश्वरम्
आचार्य दक्षिणाहीने शिवयागं तु निष्फलम् ३९

कर्तृभर्तृ विनाशं च शान्तिहोमं समाचरेत्
शिवमन्त्र जपे सहस्त्रं द्विगुणं दक्षिणां ददेत् ४०
यागशाला विशेत् श्वाने शूद्रादि स्पर्शने यदि
चोरेण द्रव्यमादाय राजा दुर्जयमाप्नुयात् ४१
व्यपोह्य कलशानादीन् यागमण्डपशुद्धये
पूर्ववद्यजनम् कृत्वा शोषोत्सवमथाचरेत् ४२
आचार्य बलिबेरं स्यात् नरबोलं घनं भवेत्
तत्र स्थानं निवेश्याथ स्नपनं शान्तिहोमकम् ४३
उत्सवारोहणे हीने राजामरणमाप्नुयात्
दिशाहोमं ततः कृत्वा स्नपनं कारयेत्प्रभोः ४४
उत्सवारोहणं कुर्यात् लब्धासे तु --- बुद्धिमान्
इहलोके भवेन्द्रत्वं शिवसायुज्यमाप्नुयात् ४५
इति चिन्त्यशास्त्रे रथ प्रायश्चित्तविधि पटलः

## उत्सवप्रायश्चित्तम्

अतः परं प्रवक्ष्यामि प्रायश्चित्तं शिवोत्सवम्
गणाय देव देवाय अनुज्ञा पूजा विहीनके १
देशिकस्य च पुत्राणां सत्यं न रागं भवन्ति च
तद्देवा स्नपनं कुर्याद्विगुणं भवषन्ददेत् २
तद्देवौ च महामन्त्रं जपेद्वौ च सहस्त्रकम्
अङ्कुरार्पण हीने च उत्सवं निष्फलं भवेत् ३
ग्रामे नश्यन्ति कल्याणं शान्तिहोमं समाचरेत्
अङ्कुरं कारयेद्देवीं ततः कर्म समाचरेत् ४
मृत् क्षेत्र बलिहीने च गव्य प्रोक्षण हीनके
शालिनां नाशनं चैव गवानां नाशनं भवेत् ५
शान्तिहोमं समाश्रित्य प्रोक्षयेत्पञ्चगव्यकैः

क्षेत्रं च देवतानां च अस्त्राङ्गे बलिमाचरेत् ६
मृदाच्छादनहीने च वस्त्रनाशो न शंशयः
पञ्चगव्येन संप्रोक्ष्य जपेत्पाशुपदं शतम् ७
चन्द्रकुम्भ विहीने च कर्तृनाशो न शंशयः
शान्तिकुम्भं समाश्रित्य स्नापयेत् चन्द्रकुम्भकम् ८
कुम्भे तु पूजनाहीने भिन्ने रन्ध्रे च निर्जले
स्थापकस्य भवे मृत्युः शान्तिहोमं समाचरेत् ९
एवमन्यं परिग्राह्य विधिवत् स्थापयेत्सुधीः
शरावादीनि विन्यस्य क्रमहीने विहीनके १०
शत्रुक्षोभं भवेद्ग्रामे जपेद्धोरं सहस्रकम्
क्रमात् सन्धानमाश्रित्य चन्द्रमूले शतं हुनेत् ११
परिवार सजायानं प्रत्येकं तु दशं हुनेत्
चन्द्रकुम्भं तु नष्टे च वैश्यादि स्पर्शने सति १२
अनावृष्टिर्भवेल्लोके शान्तिहोमं समाचरेत्
पालिकादि विसृज्याथ तस्मिन् त्रितन्तु सङ्ग्रहेत् १३
नवमन्ये तु कुम्भं तु शरावादीनि विन्यसेत्
तस्मिन् मृदं तु संक्षिप्त्वा शरावादी च पूजयेत् १४
सप्ताक्षराङ्कुरक्षिप्त्वा दूर्वाक्षतं च संयुतम्
शिवार्जनितो चाग्रे च चन्द्रमूले शतं हुनेत् १५
शरावादी च जायानां प्रत्येकं तु दशं हुनेत्
मूषिक रक्तकन्यादिं च गृह्यते चाङ्कुराक्षतम् १६
बालानां नाशनं चैव शान्तिहोमं समाचरेत्
पञ्चगव्येन संप्रोक्ष्य न्यसेत् दूर्वाङ्कुराक्षतान् १७
हृदयेन शतं हुत्वा चन्द्रमूले शतं हुनेत्
परिवारेषु जायानां प्रत्येकं तु दशं हुनेत् १८
तस्याङ्कुराक्षतान् पूर्वान् तन्त्रोक्तं देवमर्चयेत्

तन्त्रोक्तं देवमभ्यर्च्य हीने वाङ्कुराद्मतम् १९
शिरोरोगं भवेद्ग्रामे संहिता होममाचरेत्
अङ्कुराद्मत यभ्यर्च्य सोममुद्वासनं ततः २०
चिन्त्यशास्त्रे अङ्कुरप्रायश्चित्तविधि पटलः

## वृषयागप्रायश्चित्तम्

श्रीकरे च तपे पैत्रे वृषयाग विहीनके
शत्रुणां च भवे मृत्यु स्नपनं कारयेद्वृष १
मुद्गान्नं तु ददेत्पश्चात् रात्रिहोमं समाचरेत्
वृषाधिवासनं कृत्वा ध्वजारोहणमारभेत् २
ध्वजे च मूषिकं चिन्न रक्तकन्यादिना ग्रसेत्
अग्निना दग्धके केतौ वृषचित्राङ्ग हीनके ३
कर्तृनाशं भवेत्तस्मात् शान्तिहोमं समाचरेत्
पुनस्सन्धानमाश्रित्य सर्वं सद्येनमाचरेत् ४
उपाङ्गे च विहीने च पाचकानां मृते सति
तत् सन्धानमाश्रित्य वृषमूले शतं हुनेत् ५
प्रदक्षिणे च तत्काले ध्वजं वैश्यादिना स्पृशेत्
शोकरोगं भवेद्ग्रामे शेषं कुर्यात्प्रदक्षिणम् ६
ध्वजस्थानं समाश्रित्य प्रोक्षयेत्पञ्चगव्यकैः
शिवाग्निर्जनितो तत्र ध्वजो स्पर्शाहुतिर्हुनेत् ७
वृषयागस्य कुम्भं तु भिन्ने भिन्ने च निर्जले
गवानां नाशनं प्रोक्तं वृषभं स्नपनं कुरु ८
हीनमन्यान्नवं स्थाप्य परिवारेण मध्यमे
वृषमूले शतं हुत्वा गायत्रिमन्त्राणबुधः ९
परिवारस्य कुम्भेषु वेदोत्सन्धानमाचरेत्
तद्दिशा रोग नाशार्थं तन्मन्त्रेण शतं जपेत् १०

स्थापनं वृषयागस्य कुम्भान् वैश्यादिना स्पृशेत्
तद्ग्रामे च नराणां च शीघ्रं रोगा भवन्ति च ११
वृषशान्ति समाश्रित्य पनसन्धानमाचरेत्
पूर्वोक्त विधिनानेन सद्येन सर्वमाचरेत् १२
इति चिन्त्यशास्त्रे वृषयाग प्रायश्चित्तविधि पटलः

ध्वजारोहण प्रायश्चित्तम्

श्रीकरे च तपे पैत्रे धजारोहण हीनके
नृपाणां दुर्जयं प्राप्य मृत्युहोमं समाचरेत् १
अष्टोत्तर शतं कुम्भान् स्नापयेत्परमेश्वरम्
विधिवत् ध्वजमारोप्य भेरी ताडनमाचरेत् २
ध्वजारोपापरे दृष्टा दण्ड वेद्या च लक्षणम्
आचार्येण भवेन्मृत्युः जपेद्घोरं सहस्रकम् ३
चण्डस्य वेदिकां कृत्वा लक्षणोक्तं तु पाचकाः
पञ्चगव्येन संप्रोक्ष्य अर्चयेत्पूर्ववत्सुधीः ४
ध्वजं प्रष्ठकरारोपे दर्भमाला विभीषणम्
नर्के अप्रदक्षिण मार्गेण दण्डे च रज्जुबन्धने ५
दर्भाम्बर विहीने च तस्येकन्यादिभिः ग्रसेत्
रज्जुच्छेदे पताका च प्रासादे गोपुराङ्गणे ६
नृपविप्रग्रहे वापि पतिते शुद्धदेशके
तद्ग्रामे च नराणां च शोकरोग भयावहम् ७
शान्तिहोमं समाश्रित्य शिवमन्त्रं शतं जपेत्
पञ्चगव्येन संप्रोक्ष्य ध्वजमारोपणं कुरु ८
वणिकः शूद्रयो गेहे पताका पतितेऽपि च
भवन्ति पूर्ववन्दोषा शान्तिहोम समाचरेत् ९
ध्वजं संप्रोक्षणं कृत्वा रोपयेत्पूर्ववत्सुधीः

वृष चैव नदिन्दिस्त्रोत्रे समुद्रे पतिते ध्वजम्  १०
महावृष्टिभवेर्लोके घोरमन्त्रं शतं जपेत्
ध्वजमारोपणं शीघ्रं कृत्वा गायत्रिना सुधीः  ११
महावातप्रकोपेन तस्करस्य ग्रहेऽपि च
नदि तोये समुद्रे च नष्टे च पतिताध्वजम्  १२
अन्ये श्मशान भौमादि मृतसूत्रं शुचिग्रहे
पताका पतिते तस्मात् नृपेण मरणं ध्रुवम्  १३
तद्दोष शमनार्थाय मूर्तिहोमं समाचरेत्
घटमेको न पञ्चाशत् कारयेत्परमेश्वरम्  १४
नवमन्यं परिग्राह्य सद्यसिद्धानमाचरेत्
दण्डा च पतिते च्छिन्ने महावाता भवन्ति च  १५
नृपणे मरणं शीघ्रं दिशाहोमं समाचरेत्
पुनस्सन्धानकं कृत्वा सद्यस्सर्वं समाचरेत्  १६
पश्चात्कुम्भं सहस्त्रं तु स्नापयेत्परमेश्वरम्
उपदण्ड विहीने च स्कन्दयद्रि विहीनके  १७
दण्डोर्ध्वे वृषहीने च आयसावलयेपि च
हीने च पतिते च्छिन्ने कर्तृनाशो न शंशयः  १८
कारयेत् शान्तिहोमं तु पुनस्सन्धानमाचरेत्
पर्णा च पतिते हीने बालानां नाशनं भवेत्  १९
पुण्याहं वाचयित्वा तु अस्त्रमन्त्रं शतं जपेत्
तन्मन्त्रेणैव संप्रोक्ष्य पुनस्सन्धानमाचरेत्  २०
स्कन्दत्रये च घण्डे च उपदण्डे ध्वजेऽपि च
छेदभेदादि संयुक्ते प्रायश्चित्तं विशेषतः  २१
ध्वजाग्रे स्थण्डिलं कल्प्य रन्ध्रकुम्भं तु विन्यसेत्
मध्यमे वृषमार्गाय आवृते लोकपालकान्  २२
देवकुम्भं तदग्रे तु विधिवत् विन्यसेत्सुधीः

विष्कन्र्दगडात् प्रमाहूय मध्यकुम्भे सुयोजयेत् २३
श्रीदेवीं भूमिदेवीं च विष्णुकुम्भस्य पार्श्वयोः
कुम्भयो स्थापने चान्ये स्थापयेत्तु सरस्वतीम् २४
दराडोर्ध्वे प्रायश्चित्तं तु तत्तत्सन्धानमाचरेत्
पश्चात्केशं च कुम्भं तु दराड संप्रोन्नणं कुरु २५
अधस्तात् भूमिदेवीं च श्रीदेवीं मध्य मेखले
स्नात्वा सरस्वतीं कुम्भं दराडयेदूर्ध्वके सुधीः २६
वेद्यूर्ध्वे दराडमूले च स्नपयेद्वृषकुम्भकम्
लोकपालस्य कुम्भानि आवृतेषान्त चाभिषेचयेत् २७
मुद्गान्नं तु निवेद्याथ धूपदीपं तु दापयेत्
गतागतं तु भूष्यन्तं ध्वजे च वृषभं न्यसेत् २८
ध्वजे च वृषभं दराडं वेद्ये च बलिकारणम्
आवाहनोद्वाहना हीने पूजाहीने तथैव च २९
लूखलं च गरुडं चैव काकं दराडोर्ध्वयो सति
अन्ये तु मकुटादीनि स्पृशेद्वैश्यादि संस्पृशेत् ३०
शत्रुभीति भवेर्लोके गवानां नाशनं भवेत्
शान्तिहोमं समाश्रित्य जपेद्घोरं सहस्रकम् ३१
ध्वज संप्रोन्नणं कृत्वा पूर्वोक्त विधिना बुधः
वृषमूले शतं जप्त्वा गायत्रीं च जपेत्ततः ३२
रोहणस्यापरे दृष्ट्वा ध्वजदराडावलन्नणम्
प्रमादं तु भवेर्लोके शिल्पनां नाशनं भवेत् ३३
वृषमूले हुनेत्सहस्रं गायत्रीं च शतं हुनेत्
लोकपालेन मन्त्रेण प्रत्येकं तु शतं हुनेत् ३४
जपेद्घोरं सहस्रं तु मूर्तिहोम समाचरेत्
उत्सवान्ते विशेषेण ध्वजावरोहणं कुरु ३५
पश्चात् दराडस्य सन्धाग्नं लन्नणोक्तं समाचरेत्

शताष्टकलशं चैव स्नापयेत्परमेश्वरम्  ३६
मूर्तिहोमं समाश्रित्य दराडं सम्प्रोक्षणं कुरु  ३७
चिन्त्यशास्त्रे ध्वजारोहणप्रायश्चित्तविधिपटलः

भेरीताडनप्रायश्चित्तम्

भेरी ताडन हीने च उत्सवं निष्फलं भवेत्
ग्रामे च वर्धते मूखं शान्तिहोमं समाचरेत्  १
नन्दिमन्त्रं जपेत्सहस्त्रं भेरीताडनमाचरेत्
कोणच्छेदे च पतिते घोषकाले च भेरिकान्  २
कासच्छे च सप्तकीले च हीने नश्यन्ति पार्श्वकाः
अस्त्रेणैव शतं जप्त्वा नन्दिमन्त्रं शतं जपेत्  ३
नवमन्यं परिग्राह्य विधिवत् ताडयेत्सुधीः
चतके पतिते भूमौ कालेन बलिकालके  ४
भवेद्रस्तततीद्ग्रामे नन्दिमन्त्रं शतं जुनेत्
कपानरैः प्रमादाधा भवेद्ग्रामं तत्र शान्ति समाचरेत्  ५
बिम्बौ संप्रोक्षणं कृत्वा शान्तिहोमं समाचरेत्
देशिके स्पर्शने स्नात्वा  सकलीकरणं कुरु  ६
चन्द्रशेखर बिम्बे तु स्नपनं कारयेत्ततः
शूलास्त्रे स्पृशने चैव स्नपनं शान्तिहोमकम्  ७
स्पर्शते चान्न लिङ्गे च पुनस्सन्धानमाचरेत्
शान्तिहोमं समाश्रित्य जपेदस्त्र सहस्त्रकम्  ८
तद्रव्ये सव्यानकं कृत्वा जपेद्घोरं सहस्त्रकम्
मलादि बलि निर्माल्यौ लङ्घने स्पर्शने सति  ९
ग्रामनाशं भवेत् शान्तात् मन्त्र संप्रोक्षणं कुरु
अन्नलिङ्गादिभिस्सर्वो पुनस्सन्धानमाचरेत्  १०
मूर्ति होमं समाश्रित्य जपेद्घोरं सहस्त्रकम्

पञ्चगव्य विहीने च गवानां नाशनं भवेत् ११
शान्तिहोमं समाश्रित्य जपेद्धोरं सहस्रकम्
पञ्चगव्येन संप्रोन्द्य बलिकालेऽव्यसन्धिके १२
बलिद्रव्य विहीने च शोकमोहभयावहम्
दिनदेवमहामन्त्रं जपेद्विशत संख्यया १३
तद्रव्य द्विगुणोक्तं तु दापयेदन्यसन्धिके
पात्रान्ने गरुडः काकग्रासे च पतितेऽपि च १४
धान्यनाशं भवेर्लोके शतं जप्त्वादिनाधिपम्
पुनरन्नं नवं ग्राह्यं बलिशेषं समाचरेत् १५
अन्नलिङ्ग विहीने च दुर्भिक्षं जायते ध्रुवम्
शान्तिहोमं समाश्रित्य अन्नलिङ्गं समाचरेत् १६
नष्टे भिन्ने च पतिते दोषं पूर्वोक्तवद्भवेत्
अन्नलिङ्गं नवं ग्राह्य शान्तिहोमं समाचरेत् १७
अन्नलिङ्गस्य मूलेन जपेद्द्विशत संख्यया
शूलास्त्रं तु विहीने च अस्त्रबाधा भवं नृणाम् १८
शान्तिहोमं समाश्रित्य अचस्त्रमन्त्रं शतं हुनेत्
अस्त्रयानं समाश्रित्य बलिशेषं समाचरेत् १९
दोषं पूर्वोक्तवत् शान्तात् पतिते स्नपनं कुरु
अस्त्रमन्त्रं शतं हुत्वा बलिशेषं समाचरेत् २०
अस्त्रस्य दण्डविच्छिन्ने नृपाणां दुर्जयं भवेत्
अस्त्रमन्यं परिग्राह्य मूर्तिहोमं समाचरेत् २१
विनाजेत्तारुजे चस्त्रं लिखेत्तत्र प्रतिष्ठितम्
सत्येन सर्वमाश्रित्य मूर्तिहोमं समाचरेत् २२
अस्त्रमन्त्रं शतं हुत्वा बलिशेषं समाचरेत्
अस्त्रं पूर्वोक्तवत्कृत्वा दारुजार्लोहजैर्न्यसेत् २३
निजेत् पूर्वोक्त विधिवत् अस्त्रराजं प्रतिष्ठया २४

## कौतुकबन्धनप्रायश्चित्तम्

कौतुकौ बलिबिम्बं च शक्तौ च नृपस्य मरणं शीघ्रं राष्ट्रे चाग्नि भयं भवेत्
सर्वाङ्गाराग्नि उद्वास्य पुनस्सन्धानमाचरेत् १
देवदेवस्य विप्रेन्द्र क्षीरधाराभिषेचयेत्
शताष्टकलशं स्नात्वा पुनरुद्भवमाचरेत् २
केवलं अग्निना दग्धे कपूर्ववमण्डपं कुरु
ग्रामे चान्तिभयं शान्तात् शान्तिहोमं समाचरेत् ३
पञ्चगव्येन सम्प्रोन्द्य शिवमन्त्रं शतं हुनेत्
द्वारे तोरणहीने च स्थाने शत्रुभयं भवेत् ४
तन्मन्त्रेण शतं जप्त्वा अस्त्रमन्त्रं शतं जपेत्
हुनेत्पुण्याहं वाचयित्वा तु पुनस्सन्धानमाचरेत् ५
दर्भमाला विहीने च ग्रामे सर्वभयं भवेत्
अस्त्रमन्त्र शतं हुत्वा पुनस्सन्धानमाचरेत् ६
वितान ध्वजहीने च राष्ट्रे सौख्यं विनाशनम्
दिक्पालाधिपमन्त्रेण हुत्वा जप्त्वा शतं ततः ७
अस्त्रमन्त्रं शतं हुत्वा तत्तत्सन्धानमाचरेत्
अष्टमङ्गलहीने च राष्ट्रे मङ्गलहीनकम् ८
कृत्वा चाद्भुतशान्तिश्च प्रोक्षयेत्पञ्चगव्यकम्
तत्तत्सन्धानकं कृत्वा शिवमन्त्रं शतं हुनेत् ९
मण्डपाराधने हीने रोगशोकभयं नृणाम्
संहिताहोममाश्रित्य मण्डपं पूजयेत्सुधीः १०
हुत्वामूलं सहस्रं तु परिवारैश्शतं हुनेत्
अस्त्रेणैव तु मन्त्रेण हुत्वा जप्त्वा सहस्रकम् ११
वेद्या प्रधानकुम्भं तु चिन्ने भिन्ने च निर्जले

नृपाय मरणं शीघ्रं मूर्तिहोमं समाचरेत् १२
अष्टोत्तर शतान् कुम्भान् स्नापयेत्परमेश्वरम्
नवमन्यं परिग्राह्य विधिवत्स्थापयेत्सुधीः १३
मूलेनैव हुनेत्सहस्रं शिवमन्त्रं जपेत्ततः
यागस्य वर्धनी चैव आवृताष्ट घटेऽपि च १४
पाशुपतास्त्र कुम्भा च छिन्ने रन्ध्रपरिर्जले
नृपस्त्रीणां च मन्त्रीणां सद्योमरणमाप्नुयात् १५
हीनकुम्भं तु संस्थाप्य तन्मूलेन शतं हुनेत्
शान्तिहोमं ततः कृत्वा शिवमूले शतं हुनेत् १६
तत्संख्या च हुनेद्विप्र अस्त्रेणैव तु मन्त्रतः
यागस्य मण्डपेभ्यर्च्य अष्टाविंशति कुम्भके १७
हीने च निर्जले चैव तत् दिशी राष्ट्रविभ्रमम्
पुण्याहं वाचयेत्तत्र स्थापयेद्धीनकुम्भकम् १८
तन्मूलेन शतं जप्त्वा शिवमूलं शतं हुनेत्
यागाराधन कुम्भेषु रत्नहीन विहीनके १९
कूर्चपुष्प विहीने च नालिकेर विहीनके
आम्रपत्र विहीने च तन्तुवेष्टन विहीनके २०
वस्त्रवेष्टन विहीने च नृपस्य शोकसम्भवम्
शातुरङ्गाय तत्सर्वं शीघ्रमरणमाप्नुयात् २१
शान्तिहोमं ततः कृत्वा तत्तत्सन्धानमाचरेत्
अस्त्रमन्त्रं शतं हुत्वा तन्मूलेन शतं हुनेत् २२
जपेत् शिवगायत्रिमन्त्रेण हुत्वा जप्त्वा सहस्रकम्
वेद्या कुम्भेषु हेमं च नालिकेरं च वस्त्रकम् २३
नष्टे च दीक्षितं चैव वैश्यापि स्पर्शने सति
नृपरां तु नाशं स्यात् पुनस्सन्धानमाचरेत् २४
मूर्तिहोमं समाश्रित्य शूलस्य नवकं कुरु

शिवमूलं हुनेत्सहस्रं तत्संख्या च सदाशिवम्  २५
परिवारेण मन्त्रेण प्रत्येकं तु शतं हुनेत्
कुम्भेषु नालिकेरं तु भिन्ने च निर्जलेऽपि च  २६
शिरोरोगं भवेद्ग्रामे शान्तिहोमं समाचरेत्
पुण्याहं वाचयित्वा तु नालिकेरान्य विन्यसेत्  २७
तन्मूलेन जपेत् सहस्र शिरसोमन्त्रं शतं हुनेत्
त्रिशूला धारा हीने लोके चास्त्रभयं भवेत्  २८
स्नपनं कारयेत् शम्भो अस्त्रेण स्नपनं कुरु
शिवमन्त्रं शतं जप्त्वा अस्त्रमन्त्रं शतं हुनेत्  २९
इति चिन्त्यशास्त्रे कौतुकबन्धन प्रायश्चित्तविधिपटलः

उत्सवे देवदेवाय हीने कौतुक बन्धनम्
नृपेण वृद्धिसन्तापं जायते राष्ट्रविभ्रमम्  १
तद्दोष शमनार्थाय मूर्तिहोमं समाचरेत्
पूर्वोक्त विधिनानेन बन्धयेत्कौतुकं सुधीः  २
हस्तात्प्रतिसरं रौप्यं नष्टे कर्तृविनाशनम्
मूर्तिहोमं ततः कृत्वा पुनस्सन्धानमाचरेत्  ३
कौतुके चैव विप्रेन्द्र सद्य सम्प्रोक्षणं कुरु
छिन्ने शिल्पिवितं तस्मात् शान्तिहोमं समाचरेत्  ४
पुनस्सन्धानकं कृत्वा हृदयेन तु शतं जपेत्
इति कौतुकबन्धनविधि

यागपूजा प्रायश्चित्तम्

यागपूजा विहीने च उत्सवं निष्फलं भवेत्
नश्यन्ति राज राष्ट्रौ च मूर्तिहोमं समाचरेत्  १
अष्टोत्तर शतान् कुम्भान् स्नापयेत्परमेश्वरम्

शतमन्त्रजपेत्सहस्त्रं पुनरुत्सवमाचरेत् २
यागपूजां क्रमेणैव आचार देशिकोत्तमः
यागमण्डपहीने च वेदीहीने च लक्षणे ३
भवेदुस्थित तद्ग्रामे कृत्वा लक्षण संयुतम्
शान्तिहोमं समाश्रित्य प्रोक्षयेत्पञ्चगव्यकम् ४
पूर्वोक्त विधिनानेन तत्तत्कर्म समाचरेत्
आषीय स्थण्डिलं क्षिप्त्वा वेद्ये कुम्भस्पृशे सति ५
धान्यनाशं भवेद्ग्रामे विधिना स्थण्डिलं भवेत्
पञ्चगव्येन संप्रोक्ष्य स्थापये च घटान् क्रमात् ६
स्थापिते च घटोक्तं तु यागशालाग्नि दग्धके
पतिते नृपकर्त्तौ च शोकमोहभयावहम् ७
आचार्य हृदये चैव आह्वयेत्तु परश्शिवम्
स्नपनं तत्र कुर्वीत शान्तिहोमं समाचरेत् ८
शिवमूलं शतं हुत्वा यानशेषं समाचरेत्
अङ्गहीने भवे मृत्युः पूर्वे श्रुत्वात्मयोस्तथा ९
सद्ये सन्धानकं कृत्वा प्रतिष्ठाप्ये समाचरेत्
दिनपक्ष मुहूर्तांशमालोकं तु न विद्यते १०
मूर्तिहोमं समाश्रित्य शिवमन्त्रं शतं हुनेत्
पुनश्च कौतुकं बध्वा यागशेषं समाचरेत् ११
उत्तमाङ्गानि हीने च या वा चान्य बिम्बकम्
मूर्तिहोमं समाश्रित्य शिवमूले शतं हुनेत् १२
अष्टोत्तर शतान् कुम्भान् स्नापयेत्परमेश्वरम्
हीनबिम्बं तु विधिवत् सन्धानं कारयेत्सुधीः १३
अङ्कुरात्प्रोक्षणं तन्तु कर्मोक्तं सर्वमाचरेत्
दानात्प्रतिसरं बध्वा चान्यबिम्बे धरं त्यजेत् १४
मूर्तिहोमं ततः कृत्वा ततो यानं समाचरेत्

यन्त्र वाहन विच्छिन्ने नाशनं नृपवाहनम्  १५
सद्यस्सन्धानकं कृत्वा विना चेत् शिवकेथवा
तस्य बिम्बन्तु संस्थाप्य यानशेषं समाचरेत्  १६
स्नपनं शान्तिहोमं च कृत्वा घोरं शतं हुनेत्
वाहनात्पतिते काले बिम्बवैश्यादी संग्रथसेत्  १७
भुक्तिमुक्ति भवेत्तस्मिन् तद्राष्ट्रस्य भयं भवेत्
गर्वितादन्यकाले तु वैश्यादि प्रतिमा स्पृशेत्  १८
भूपतीनां भवेत् शोकं स्नापयेत्पञ्चगव्यकम्
स्नानं शान्ति होमं च यानान्ते तु समाचरेत्  १९
यानकाले महावातेस्तततं वृष्टि संयुते
नदिस्त्रोते विशेषेण प्रकारे प्रलये सति  २०
परक्रमाद्धयं भूमौ मूर्तिहोमं समाचरेत्
नावास्त प्रदक्षिणं नेष्टं इष्टं धामप्रदक्षिणम्  २१
महायागस्य यानं तु कलादिक्रमणेऽपि च
तद्ग्रामस्य क्षयं प्रोक्तं शान्तिहोमं समाचरेत्  २२
शिवमन्त्रं शतं जप्त्वा क्रमाद्यानं समाचरेत्
एकाहे यानहीने च नृपस्य मरणं ध्रुवम्  २३
मूर्तिहोमं समाश्रित्य मूलेनैव शतं हुनेत्
शताष्ट कलशं चैव स्नपयेत्परमेश्वरम्  २४
यानद्विधं तु विधिवत् क्रमात् शीघ्रं समाचरेत्
द्व्याहे यानहीने तु नश्यन्ति राज राष्ट्रकम्  २५
दिशाहोमं समाश्रित्य हुत्वा घोरसहस्त्रकम्
द्विशतं स्नपनं स्नात्वा पुनरुत्सवमाचरेत्  २६
यन्त्रवाहन भेदानां माख्यादि रथमान्तकम्
कर्म पूर्वाश्रयं कृत्वा हीने स्थानं तु नाशनम्  २७
मूर्तिहोमं समाश्रित्य जपेद्घोरं सहस्त्रकम्

स्थाने पूर्वाश्रयं यावत् तावद्यानं समाचरेत् २८
परिवेष विहीने च ग्रामश्रीत्वन्यथा भवेत्
स्नपनं शान्तिहोमं च कृत्वामूलं शतं जपेत् २९
परिवेषाग्निदग्धे च अग्निबाधा भवेन्नृणाम्
तत्राङ्गारान्विसृज्याथ कारयेत्पूर्ववत्सुधीः ३०
स्नात्वा तु स्नपनं ब्रह्म बिम्बमूर्तिहोमसमाचरेत्
मूर्तीनां च धरे वस्त्र मूर्ध्ने चैव धरेऽपि च ३१
साग्नि दग्धके चैव नृपाणां मरणं ध्रुवम्
बेर संप्रोक्षणं कृत्वा मूर्तिहोमं समाचरेत् ३२
तन्मन्त्रेण हुनेत्सहस्रवेतन्त्रं शतं हुनेत्
केवलं अग्निदग्धे कर्तृनाशं न शंशयः ३३
मन्त्राङ्गारान् विसृज्याथ यानान्ते शान्तिहोमकम्
कृत्वामूलं जपेत्सहस्त्रं शिवमन्त्रं शतं जपेत् ३४
नीराञ्जनं विहीने च ग्रामे चाग्निभयं भवेत्
तन्मूलेन शतं जप्त्वा नीराञ्जनं शतं जपेत् ३५
देवस्येकासनाद्भौमौ आचार्यं पतिते भुवि
भवेजत्र भयं ग्रामे देशिकं स्नानमाचरेत् ३६
सकलीकरणं कृत्वा बिम्बे तु स्नपनं कुरु
शिवमन्त्रं शतं जप्त्वा जपेद्घोरं सहस्रकम् ३७
देशिकस्योत्तरीये च उष्णीषो चाम्बरेऽपि च
केवलं अग्निदग्धे उष्णरोगं भवेन्नृणाम् ३८
स्नपनं तु कृत्वा विधिवत् सकलीकरणं कुरु
नवमन्यं परिग्राह्य धारयेत्पूर्ववत्सुधीः ३९
यानान्ते तु विशेषेण शान्तिहोमं समाचरेत्
आस्थान मण्डपं चाग्ने दग्धे शीघ्रं र्हते हरम् ४०
अन्ये तु मण्डपे स्थाप्य घोरमन्त्रं शतं जपेत्

अग्निबाधा भवेल्लोके पुनस्सन्धानमाचरेत् ४१
गोमयालेपनं कृत्वा प्रोक्षयेत्पञ्चगव्यकम्
शान्तिहोमं समाश्रित्य प्रविशेत्तस्य मण्डपे ४२
इति चिन्त्यशास्त्रे यागपूजाप्रायश्चित्त विधि पटलः

विशेषप्रायश्चित्तम्

अतः परं प्रवक्ष्यामि प्रायश्चित्त विधिक्रमम्
शुध्यर्थं च ऋध्यर्थं कर्म कर्माङ्ग साधकम् १
क्षीरादि निचयत्रैव त्वभिषेक कृतं यदि
ततस्सन्धानशीघ्रं तु मृद्भाण्डानि विसर्जयेत् २
गोमयालेपनं कृत्वा पुण्याह प्रोक्षणं कुरु
गव्यमेको न पञ्चाशत् स्नपनं चैव कारयेत् ३
अष्टगन्धं समालिप्य शान्तिहोममथाचरेत्
सत्कृतं व्यजने चेद्धि गव्यं च स्नपनं कृतम् ४
प्रथमे च द्वितीये चेत् पुण्याह प्रोक्षणं कुरु
न कृते बलियुक्तं चेत् गव्यं च स्नपनं कृतम् ५
कठिते मूलबेरे चेत् तेषामुक्तवदाचरेत्
मत्स्यदीनि विलालश्च उक्तस्थानमतो यदि ६
सत्रैव विधिवत्तन्त्री तेषामुक्तवदाचरेत्
प्रथमे च द्वितीये तु स्नपनं भूमि शोधनम् ७
आगता तुर्यं स्नात्वैव गोपुराभ्यन्तरे यदि
पुण्याह प्रोक्षणं कृत्वा पञ्चगव्याभिषेचयेत् ८
आलयाभ्यन्तरे चेद्धि तद्विधं स्नपनं कृतम्
सोपाने मण्डपे चेद्धि स्नपनं शान्तिहोमकम् ९
पुण्याहं पञ्चगव्यं च प्रोक्षयेत्प्रथमं क्रमात्
व्यञ्जने भस्मगेहे च मृद्भाण्डानि विसर्जयेत् ७

पर्यग्निकरणं कृत्वा पुण्याहं गव्यमाचरेत्
अष्टबन्धं ततः कृत्वा स्नपनं नैव कारयेत् ८
शान्तिहोमं ततः कृत्वा शुद्धान्नं दापयेत्क्रमात्
न कृते बलियुक्तं चेत् स्नपनं शान्तिहोमकम् ९
मूलबेरे च मितिश्चेचे तेषामुक्तवदाचरेत्
स्पृष्टान्नं स्परये त्वैव स बेर स्पर्शनं यदि १०
पुण्याह प्रोक्षणे कृत्वा पञ्चगव्याभिषेचयेत्
स्नपनं तत्र कुर्वीत शान्तिहोमं तु कारयेत् ११
प्रायश्चित्तमनुक्तं चेत् स्नपनं शान्तिहोमकम्
कारयेद्विधिवत्तन्त्री केचिद्यत्रैव शाश्वतम् १२

इति चिन्त्ये विशेष प्रायश्चित्तविधिपटलः

विशेषप्रायश्चित्तम्

अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिक्रमम्
सर्वपापहरं पुण्यं राजा राष्ट्र समृद्धिदम् १
महेशो नृत्तमूर्त्यादि बेराण्यस्त विशेषतः
यत्काले परचक्रेण चोरेण गृहितं यदि २
कृत्वा पूर्वप्रमाणेन तत्तद्बेराणि कारयेत्
उत्तमत्विति विख्यात महोत्सवं तत्र वित्तमः ३
कला सोपानबेरेष्वकसोपनरलेबरयदि
गृहीतं पर चक्रेण चोरे नास्ति विशेषतः ४
गतबेर प्रतिबेरं च कृत्वा महोत्सवं कुरु
उत्तमं तत्समाख्यातं तत्तत् शास्त्रेष्वथ क्रमात् ५
चेरेण पर चक्रेण यानि बेराणि यत्नतः
छेद्यं किञ्चित् गतमगतं विशेषो यदि बेरवत् ६
अन्यद्द्रव्येण तच्छेषं दापयित्वा यथा क्रमम्
पूर्वमेव प्रमाणेन तन्मूर्तिं कारयेद्बुधः ७

गतः कालः लभितञ्चेद्वा चैतद्यथाक्रमम्
द्रापयित्वा सकलेन तद्बेरं कारयेद्बुधः ८
देवीं विना देवजीर्णं मूर्ति चेत् निर्मितं यदि
कुम्भे तच्छक्तिमावाह्य पूजये दृत्त संयुते ९
परचक्रेण घोरेण धानबेराणि यत्नतः
छेद्य किञ्चित् गतमगतं विशेषो यदि बेरवत् १०
तद्बेरनिर्माणपूर्वे महोत्सव न कारयेत्
भोगशक्तिविहीनं चेत् महोत्सवं न कारयेत् ११
भोगाङ्गं पूज्यहीनं चेत् महोत्सवं न कारयेत्
स्व चक्रेणथवा चेद्धि तथैवं कारयेद्बुधः १२
निपत्य जीर्णमेवं चेत् तथैव कारयेद्बुधः
एतच्छास्त्रं परित्यज्य कृतं यदि महोत्सवम् १३
अमङ्गलमिति प्रोक्तं तत्र शास्त्रेषु निश्चयम्
कारणादीनि कर्माणि महोत्सवे समुद्भवम् १४
करणानि विना चे तु पूर्ववत्कर्म कारयेत्
पादो न स्पृश्य चोरश्चेत् गृहीतो भूषणानि सन् १५
गतोपुर्भिन्नमाप्नोति तथैव बेरपीठयोः
पर्यग्नि करणं कृत्वा अवगाहं च बुद्धिमान् १६
तदैव शीघ्रं शुभदमनावर्त क्रमं चरेत्
तद्वत्कर्म चरेत्कृत्वा अनावर्तं ---- विना १७
स्नपनं शान्तिहोमं च पादेन न स्पृशेद्यदि
वस्त्रं चैव विधानं च तद्वत्कर्म समाचरेत् १८
एतच्छास्त्रं परित्यज्य चान्य चास्त्रं च चिन्तयेत्
मोक्षबेरं ततो लोप्य वैकबेरं कृतं यदि १९
तद्राष्ट्रमन्यराज्ञेसु तत्तच्छास्त्रेषु भाषितः
तद्दोषशमनार्थाय स्नपनं शान्तिहोमकम् २०

निर्मितं लोप्य तद्बेरं कृत्वैतत् बेरमाचरेत्
यद्बेरं लोहजं जीर्णं दापयित्वा यदि क्रमात् २१
तद्बेरमन्य द्रव्येण बुद्धिमान् कारयेद्दृढम् २२
विपरीतं न कर्तव्यं कृतं चेन्द्राज शासनम्
स्वर्णादि निर्मितं स्थूपि गृहीतं चेद्यजेत्सह २३
चोरेण परचक्रेण परचक्राद्भयं भवेत्
तच्छशमन्य द्रव्येण ---- कर्मकारयेत् २४
पर्यग्नि करणं कृत्वा स्नपनं शान्तिहोमकम्
चोरेण परचक्रेण गृहीतं स्थूपि कीलकम् २५
कारयेत् स्थूपि प्रतिष्टां नवीकृत्वान्यदारुणा
चेतुत्कृद्धृत्य च तत्कीलं त एव अपसार्य च २६
गतास्तत्कुलमुद्धृत्य स्थापयेत्पूर्ववद्बुधः
पर्यग्नि करणं कृत्वा स्नपनं शान्तिहोमकम् २७
तत्कुलं कारयेज्जीर्णं बेरवच्चेत्परीक्षयेत्
एवमेव प्रकर्तव्यं स्व चक्रेण तथैव च २८
विपरीतं न कर्तव्यं कृतं चेत्कर्तृनाशनम्
शैल बेरेष्वधदृक्तं पतितं यदि सुव्रतम् २९
माणिक्व नैव मतिमान् कर्षयेल्लिङ्गमुत्तमम्
गोभिराक्रमणं कृत्वा अन्तरीत क्रमं चरेत् ३०
रक्तं चेदाचार्यहस्तेषु स्नपनं शान्तिहोमकम्
लोहजे लोहजेनैव दारा च दारुणा यदि ३१
मृणमये मृणमये नैव रत्नबन्धेषु रत्नकैः
ततो यदि च यत्काले बेरेषु पतितं शिरः ३२
भोगिराक्रमणं कृत्वा रुद्राहं करणं कुरु
स्थानशुद्धिं पुराकृत्वा सप्तशुद्धिं समाचरेत् ३३
षड् दिनं तु ततो मन्त्री अन्तरीत क्रमं चरेत्

गर्भे चास्ते विशेषोस्ति तद्दिनेर्धार्धहीनकम् ३४
तृतीये गोपुरे चेद्वा तद्दिनेर्धार्धहीनकम्
उक्तस्थानेषु इयं वाथ रसज्ञा चात्रमुद्भवम् ३५
ततो मन्त्री विशेषेण तस्योक्तवत् समाचरेत्
शिरो रसज्ञ चान्त्रं वा बलिपीठोद्भवं यदि ३६
पञ्चशुद्धिं ततः कृत्वा शेषं पूर्वोक्तवत् चरेत्
मुसली चेत् बिलालादि पतिं मण्डल मण्डजम् ३७
यत्काले स्थापितं कुम्भे विशेषोस्ति ततः परम्
आचार्य हृदये योज्य तत्कुम्भाद्देवमव्ययम् ३८
नव घटं समादाय आवाहनादि पूर्ववत्
शान्तिहोमं ततः कृत्वा शुद्धान्नं दापयेद्बुधः ३९
पतितं अन्यकुम्भेषु कलशेषु त एव चेत्
नवघान् श्रावयेत्पश्चात् कलशानपि बुद्धिमान् ४०
तेषु पूर्व यदा बाह्य पञ्चशान्ति जपेत्परम्
त्रिगुणं पञ्चगुणं वाथ षड्गुणार्धगुणं तु वा ४१
अभिषेकाकलदृश्यन्धेति
अष्टगन्धं समालिप्य शान्तिहोमं समाचरेत्
अभ्रतं चैव गम्यं च स्नपनं कारयेद्बुधः ४२
शुद्धान्नं दापयेत्पश्चात् विद्यघोषसमाकुलम्
प्रधानकुम्भे भृतं चेत् तदेवं पूर्ववद्गुरु ४३
यागपूजा ततो मन्त्री सर्वलक्षणसंयुतम्
कलेशष्पत्य कुम्भेषु मृतं यदि तएव च ४४
प्रधान कुम्भे मतिमान् पतितोक्तवदाचरेत्
अभिषेककाल दृश्यन्ते त एव यदि बुद्धिमान् ४५
पूर्ववद्याग पूजं च शेषकर्म ततः परम्
अन्य घटाभिषेके चेत् तदेव दृश्यमेव च ४६

ततः परं च तत्काले फलोदकादिमाचरेत्
कुकुर कुक्कुटश्चैव वानरादि नरस्तथा ४७
विशेषोस्तु ततश्चेद्वापेशान्त्यागमराटपे
नव सङ्गृह्य घटादीर्यं कुर्यात् मराडपपूजनम् ४८
ततो मन्त्र विशेषेरा शान्तिहोमं समाचरेत्
याम प्रदन्निरो काले फलेदकाटिमाचरेत् ४९
ततो मन्त्री विशेषेरा तद्वत्कर्म समाचरेत्
यद्दोषमुद्भवञ्चेद्वा मूलबेरस्य चोक्तवत् ५०
तत्कुम्भे स्थापिते चैव कारयेद्देशिकोत्तम
यद्यागमराटपे काष्टा विष्टादीनद्भवं यदि ५१
नवपादान् समादाय शेषं शम्भुवदाचरेत्
इति चिन्त्यागमे विशेष प्रायश्चित्तविधि पटलः

प्रायश्चित्तविधिः

अतः परं प्रवद्त्यामि प्रायश्चित्तविधि क्रमम्
अति कुच्छ्रसमोपेतं प्रमादकविलोपितम् १
सुरामांसश्च मध्वडच मुद्गारकफमेव च
रुधिरं चैव मत्स्यं च मूत्रविष्ठादयस्ततः २
बलर्बभुद्त्येनकश्वानः कुकूरः कुक्कुट खरः
सूकरो वानरो लूको कापेति लन्निकादयः ३
तिर्यगजातयश्चैव मुद्गाद्याश्च भवेमृते
लिङ्गपीठे च गर्भे च द्वञ्जने मराटपे ततः ४
परिवारालये चैव ततो वै स्नानमराडपे
प्रथमे च द्वितीये च तृतीये पचनालये ५
भवन्ति गोपुरे चेद्धि मृत यत्न विशेषतः
न कृतं प्रायश्चित्तं चेत् नित्यपूजादिनिष्फलम् ६

मृद्भाराडानि विसृज्याथ पर्यग्निकरणं कृतम्
सप्तशुद्धिक्रमं कृत्वा शताष्टकलशं कृतम्  ७
शान्तिहोमं ततः कृत्वा मन्त्रान्नादि निवेदयेत्
तस्योत्तरे चेत्सोपाने कृत्वाशुद्धिरपूर्ववत्  ८
कृतमेकोन पञ्चाशत् स्नपनं शान्तिहोमकम्
मन्त्रान्नादीनि दातव्यं ताम्बूलं कृतमेव च  ९
नृत्तमराटपके चेद्धि परिवारालयेत्ततः
प्रथमादि तृतीये च ----- पचनालये  १०
----- त्तवत्कृत्वा स्नपनं पञ्चविंशतिः
शान्तिहोमं ततः कृत्वा मन्त्रान्नादि निवेदयेत्  ११
सितकन्या रक्तकन्या कृष्णकन्यैव कन्यका
लिङ्गपीठान्तरे गर्भे ततो वै त्वर्धमराटपे  १२
तस्येतर्तमाच सोपाने --- ततो नृत्तमराटपे
परिवारालये यत्र ततो सोपान मराटपे  १३
प्रथमे च द्वितीये च तृतीये पचनालये
भवन्ति गोपुरे चेद्धि मृतयन्ति विशेषतः  १४
तद्राष्ट्र नाशनं स्यात्तु नृपोमरणमाप्नुयात्
तत्प्रमे शङ्कनित्यैव पूरयेन्मृसवालुकैः  १५
अष्टबन्धं तु कर्तव्यं शीतकुम्भं तु कारयेत्
शताष्टकलशं कृत्वा मूर्तिहोममथाचरेत्  १६
ऋगाद्यध्ययनं कुर्यात् पूर्वादिषु प्रदक्षिणम्
मन्त्रान्नं दापयित्वैव प्रभूतहविषं ददेत्  १७
तस्योत्तरे चेत्सोपाने तेषामुक्तक्रमं कृतम्
निश्चित्काले विशेषोस्ति शीतकुम्भं न एव च  १८
चरेदेको न पञ्चाशत् स्नपनं मूर्तिहोमकम्
गजप्यपूर्ववद्भागे मन्त्रान्नादि निवेदयेत्  १९

नृत्तमराडपके चेद्धि परिवारालये यदि
स्नानमराडपके चेद्धि गोपुरे पचनालये २०
तयोरुक्तक्रमं कार्यं नकृतं शीत कुम्भकम्
मूर्तिहोमं ततः कार्यं स्नपनं पञ्च विंशतिः २१
जप्यैव विधिवद्यत्र मन्त्रान्नादि निवेदयेत्
प्रथमे च द्वितीये च तृतीये चोद्भवा यदि २२
सम्मार्जनं ततः कृत्वा गोमया लेपनं कुरु
एतत्स्थानेषु वल्मीकमुद्भवं चेत् विशेषतः २३
कन्यकोक्तवद्दोषंश्च प्रायश्चित्तं तु कारयेत्
बाणस्तं खनित्वैतमुपांसु दद्दिणोत्सृजेत् २४
सिकतैर्लवर्णैश्चैव पञ्चगव्येन पूरयेत्
तासमुक्तिक्रमाणयत्र कारयेद्देशिकोत्तमः २५
प्राकारेषु च यन्त्रैव वल्मीकं चेत्समुद्भवम्
तासामुक्तिवतश्चैव खननादीनि कारयेत् २६
मूर्तिहोमं ततः कृत्वा स्नपनं पञ्चविंशतिः
ततो मन्त्री विशेषेण मन्त्रान्नादीनि दापयेत् २७
एतत्स्थानेषु चेद्वस्ति प्रोतकोद्भवमेव च
गोभिराक्रमणं कृत्वा धेनु बैरिं समाचरेत् २८
पर्यग्निकरणं कृत्वा सप्तशुद्धिमथाचरेत्
ब्राह्मणान् भोजयित्वाथ अवगाहक्रमं चरेत् २९
वामशुद्धिं ततः कृत्वा बेरशुद्धिं च कारयेत्
शान्तिहोम दिशाहोम मूर्तिहोमं तु कारयेत् ३०
संप्रोन्नणं ततः कृत्वा मन्त्रान्नं दापयेत्ततः
उत्तमादि त्रयं कार्यं स्नपनं च पृथक्पृथक् ३१
चतुर्थावरणे चेद्धि पुण्याहं पञ्चगव्यकम्
कृत्वैव विधिवद्धीमान् शुद्धस्नपनमाचरेत् ३२

पञ्च प्राकारके चेद्धि तद्वत्कर्म समाचरेत्
तुर्ये पञ्चमे चेद्धि उद्भवं तु महोत्सवे ३३
प्रायश्चित्तं ततः कृत्वा कारयेत्तु महोत्सवम्
महोत्सवे यदि सम्भूत ----- स्थानकेषु च ३४
प्रायश्चित्तं ततः कृत्वा पुनरुत्सवमाचरेत्
तस्याधश्चैव जातिश्चे तस्योक्त द्विगुणं कृतम् ३५
तस्योक्ताध्वश्च जातिश्चे तस्योर्धाक्त क्रमे कृतम्
यवं --------------------- ३६
तयो क्रमकं कृत्वा विशेषं सम्यगाचरेत्
पुण्याह प्रोक्षणं कृत्वा पञ्चगव्याभिषेचयेत् ३७
तुलसी बिल्वपत्राभ्यां कर्षयित्वा विचक्षणः
अष्टगन्धं समालिप्य घृतन्धूनु योजयेत् ३८
मन्त्रान्नादीं निवेद्यान्तं ताम्बूलं तु निवेदयेत्
लिङ्गपीठं विसृज्याथ अन्यस्थानेषु भवं यदि ३९
तस्योक्त क्रमं कृत्वा खननादीनि कारयेत्
लिङ्गपीठे भवन्तुस्य आख्यकाष्टक मूत्रके ४०
पुण्याह प्रोक्षणं कृत्वा पञ्चगव्याभिषेचयेत्
अर्चयित्वा ततो मन्त्री बिल्व पत्रेण बुद्धिमान् ४१
स्नपनं शान्तिहोमं च कारयेद्देशिकोत्तमः
मन्त्रान्नादीनि दत्वैव ताम्बूलं तु निवेदयेत् ४२
न कृतं प्रायश्चित्तं चेत् नश्यन्त श्रीकराणि च
ध्वजदण्ड पतीतं चेत्तस्याधोक्षं तथैव च ४३
पूर्वोक्त नृपनाशं स्यात् अपरोक्ताक्षनाशनम्
पूर्ववत् स्थापयित्वैव स्नपनं शान्तिहोमकम् ४४
कारयेत्तु ततो मन्त्री ध्वजदारुं यथा विधि
कुम्भे क्षोभसमावाह्य परिवार घटान्यसेत् ४५

शान्तिहोमं ततः कृत्वा मन्त्रान्नादीनि दापयेत्
कर्णकूट कशालाभ्यमन्तसिह्नादि कोटसः ४६
शिखर स्थूपिकादीनि यत्कालेच्छदयन्ध्यति
यथादीनि विनिश्यन्ति मासान्तो वत्सरान्तके ४७
अन्तरीतक्रमं कृत्वा पूर्ववद्देशिकोत्तमः
यत्र कर्णात्कूटादीन् कारयेच्छिल्पिवित्तमः ४८
मण्डूकं यदि मत्स्यं च कर्कटं कूर्ममेव च
नैवेद्यं चिव दातव्यं ततोद्वे वृश्चिकादयः ४९
नश्यन्ति कृस्न वस्तूनि प्रायश्चित्तमथाचरेत्
मृद्भाण्डानि विसृज्याथ पर्यग्निकरणं कुरु ५०
पुण्याह प्रोक्षणं कृत्वा पञ्चगव्याभिषेचयेत्
अष्टगन्धं समालिप्य घृत धूमं तु योजयेत् ५१
शताष्टकलशं कृत्वा शान्तिहोममथाचरेत्
मन्त्रान्नादीनि दत्वैव ताम्बूलं तु निवेदयेत् ५२
हीनाग्निं यदि केशं च नैवेद्यं नैव दापयेत्
विरूढानि विनिश्यन्ति प्रायश्चित्तं तु कारयेत् ५३
पुण्याहं प्रोक्षणं कृत्वा पञ्चगव्याभिषेचयेत्
अष्टगन्धं समालिप्य घृतधूमं तु योजयेत् ५४
स्नपनं शान्तिकुम्भं च कारयेद्देशिकोत्तमः
मुखवासं ततो दत्वा भसितं दापयेद्बुधः ५५
पञ्चञ्छेद्धि नखं नैव नैवेद्यं नैव दापयेत्
सर्वेषां बलिहीनं स्यात् प्रायश्चित्तं तु कारयेत् ५६
पुण्याहं प्रोक्षणं कृत्वा पञ्चगव्याभिषेचयेत्
अष्टगन्धं समालिप्य घृतधूमं तु योजयेत् ५७
मन्त्रादीनि च दत्वैव ताम्बूलं तु निवेदयेत्
मुसलीकृत् कुलासोप शत्यश्च बिलालकः ५८

मूषिको दध्म भ्रमरो ततश्चोद्भ्रमरा यदि
नैवेद्ये नैव दातव्ये मोहेनैव तु यत्र तु ५९
बालानां नाशनं स्यात्तु प्रायश्चित्तन्तु कारयेत्
मृद्भाराडानि विसृज्याथ गोमयालेपनं कुरु
पुरायाह प्रोन्नणं कृत्वा पञ्चगव्याभिषेचयेत् ६०
आलोटच बिल्व पत्रैश्च स्नापयेच्छुद्ध वारिणा
अष्टगन्धं समालिप्य घृतधूमं तु योजयेत् ६१
स्नपनं कारयित्वैव शान्तिहोममथाचरेत्
मन्त्रान्नादीनि दत्वैव ताम्बूलं तु निवेदयेत् ६२
धूपदीपानि काले चेत् केचिद्दीपं विनश्यति
जगदर्कप्रियं हीनं प्रायश्चित्तं तु कारयेत् ६३
शिवमन्त्रं दशं जप्त्वा दिव्यदृष्टचवलोकयेत्
पुनर्दीपं समारोप्य दापयेद्देशिकोत्तमः ६४
ऊर्ध्वदीपं तु पूर्णं चेदधोदीपं विहीनकम्
निर्दोषमिति विख्यातं केचिद्दीपं तु यत्र च ६५
एवमेव प्रकारेण प्रायश्चित्तं तु कारयेत्
आचार्यं पूजयित्वैव वस्त्रहेमाङ्गुलीयकैः ६६
भक्तानां परिवाराणां दन्तिणान् दापयेत्ततः

इति चिन्त्यागमे प्रायश्चित्तविधि पटलः

Reference:
Muktabodha Indological Research Institute: The Catalogue and On-Line Digital Library of the Paper Manuscripts of the French Institute of Pondicherry:
**Manuscript no. T 0888,** consisting of 295 folios, comprising 82 Patalas: This transcript is copied from a paper MS belonging to Sambasivasivacarya, Palani.
**Manuscript No. : T0014**, consisting of 480 folios, comprising 30 Patalas: This transcript is copied from a MS belonging to Sri Swaminatha Sivacharya of Tiruvavaduturai, Tanjore Dt.